समन्ततो विषयततेर्ललामनि
प्रथीयसि प्रथितविदर्भनामनि।
परान् परं किल विषये विभीषयन्
स भीष्मकः समिति बभूव भूपतिः ॥२॥

इत्यादिस्मृतौ शिवस्याकाशमूर्त्तित्वमनुसन्धेयम्। ननु निर्मक्षिकमित्यादौ निरुपसर्गस्यात्यन्ताभावपरत्वात् निरम्बर इत्यन्योन्याभावपरत्वे लक्षणा-पत्त्या नेयार्थतादोषापत्तिरिति चेन्न, "तस्य निरवद्यविद्योद्योतेन द्योतित-स्तत्त्वतोऽयमर्थः" इति दायभागे निरुपसर्गस्यान्योन्याभावपरतादर्शनात्। न च तत्रापि अवद्येति भावे निपातमङ्गीकृत्य अत्यन्ताभावपरत्वस्य सुवचत्वमिति वाच्यम्; "पण्यावद्यवर्य्याविक्रेयगर्ह्यानिरोधेषु" इति सूत्र-वृत्तौ कर्म्मणि निपातस्यैवोदाहृतत्वेन भावे तन्निपाताङ्गीकारासम्भवात्, किञ्च "निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः" इति भारविप्रयोगे निरुत्सुकानामिति निरुपसर्गस्य अन्योन्याभावपरताया अकामेनाप्यङ्गीकार्य्यत्वात्।

"रमः कान्ते रक्ताशोके सन्मथे च रमा स्त्रियाम्" इति हेमचन्द्रः।

अस्मिन् सर्गे रुचिरा नाम वृत्तम्—"जभौ जरौ गितिरुचिरा चतुर्ग्रहैः" इति लक्षणात् ॥१॥

বাঙ্গালা—যিনি কালীর চরণতলগত শব হইয়াও শিব, যিনি অখণ্ড আকাশ হইয়াও আকাশভিন্ন (দিগম্বর) এবং যিনি (কাম-চরিতার্থতার জন্য) আপন দেহার্দ্ধে কামিনীকে ধারণ করিয়াও কামহন্তা; সেই বিশ্বব্যাপক মহাদেব তোমাদের সম্পৎপ্রদাতা হউন ॥১॥

अन्वयः—समन्ततः विषयततेः ललामनि प्रथीयसि प्रथितविदर्भनामनि विषये समिति किल परान् परं विभीषयन् स भीष्मकः नाम भूपतिः बभूव ॥२॥

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महाकविः सकलसवर्णयोजने
सुतो रवेरविनयदण्डधारणे ।
क्षमाभृतौ क्षितिभृदशेषसत्त्ववान्
मनस्विभिः क्षतिमननैः क्षमानि यः ॥३॥

वस्तु निर्द्दिशति समन्तत इति । समन्ततः सर्व्वासामेव दिशाम्, विषयततेर्देशसमूहस्य, ललामनि प्रधाने, प्रथीयसि अतिविशाले, प्रथितं प्रसिद्धं विदर्भेति नाम यस्य तस्मिन्, विषये देशे, समिति युद्धे, परान् शत्रून्, परमत्यन्तं विभीषयन् संग्रामेण भयं प्रापयन्, स प्रसिद्धो भीष्मको नाम भूपतिर्बभूव ।

अत्र भीष्मकनाम प्रति विभीषयन्निति पदस्यार्थो हेतुरिति पदार्थ-हेतुकं काव्यलिङ्गमलङ्कारो यमकवृत्त्यनुप्रासाभ्यां संसृज्यते ।

"नीवृज्जनपदो देशविषयौ" इत्यमरः । "धराधरेन्द्रं व्रततीततीरिव" इति माघे समूहार्थे ततिशब्दः । "ललाम स्यात् प्रभावे च लाञ्छन-ध्वजवाजिषु । शृङ्गे प्रधाने भूषायामपि बालधिपुण्ड्रयोः" इति मेदिनी ।

विशेषेण विस्मयं प्रयुञ्जान इति विभीषयन् भीधातोरिनि "भीस्मि-चिन्ति—" इत्यादिज्ञापकात् षान्तता, करणभयाच्च "हेतुकर्त्तृ-भीस्मोरिन्" इति कचादित्वान्नात्मनेपदविषयता ॥२॥

বাঙ্গালা—সকল দিকের দেশসমূহের মধ্যে শ্রেষ্ঠ অতিবিশাল বিদর্ভদেশে শত্রুগণের অত্যন্ত ভয়জনক 'ভীষ্মক'নামে একজন প্রসিদ্ধ রাজা ছিলেন ॥২॥

अन्वयः—क्षतिमननैः मनस्विभिः यः सकलसवर्णयोजने महाकविः, अविनयदण्ड-धारणे रवेः सुतः, क्षमाभृतौ अशेषसत्त्ववान् क्षितिभृत् ( च ) क्षमानि ॥३॥

पञ्चविंशत्या श्लोकै राजानं वर्णयति महाकविरिति । क्षति

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निरन्तरं दिशि दिशि गायतां सतां
मुखाम्लिकापरिणतिचिह्नचिह्नितम्।
सुधाम्बुधेर्जलविमलञ्च यद्यशः
जगज्जनाः शशधरमेव मेनिरे ॥११॥

---

अत्र कार्य्येण सरस्वत्यां सपत्नीव्यवहारसमारोपात् समासोक्ति-रलङ्कारः, अपह्नुतिः, एकस्याः सरस्वत्याः मनःप्रभृत्यनेकगोचरतया पर्य्यायश्च इत्येतेषाम् अङ्गाङ्गिभावेन सङ्करः, सोऽपि च यमकवृत्त्यनु-प्रासाभ्यां संसृज्यते।

"मत्सरोऽन्यशुभद्वेषे तद्वत् कृपणयोस्त्रिषु" इत्यमरः ॥१०॥

बाङ्गाला—যে ভীষ্মকরাজার বিশাল বক্ষদেশে সর্বদা বীরলক্ষ্মী অবস্থান করিতেন বলিয়া তাঁহার প্রতি বিদ্বেষবশতঃ সরস্বতী শুভ্রদন্ত-প্রভাচ্ছলে যে ভীষ্মকরাজার নির্ম্মল রসনাদেশে থাকিয়া যশ, মান এবং হাস্যেও সর্বদা প্রকাশ পাইতেন ॥১০॥

अन्वयः—जगज्जनाः दिशि दिशि निरन्तरं गायतां सतां मुखाम्लिकापरिणति-चिह्नचिह्नितं सुधाम्बुधेः जलविमलञ्च यद्यशः एव शशधरं मेनिरे ॥११॥

राज्ञो यशःप्रसारं वर्णयति निरन्तरमिति। जगज्जनाः, दिशि दिशि, निरन्तरम्, गायतां यश एव कीर्त्तयताम्, सतां सज्जनानाम्, मुखेषु या अम्लिका स्वाभाविकाम्लरसः तस्याः परिणत्याः परिणामेन यच्चिह्नं कांस्यपात्रादौ तिन्तिरिचिह्नवत् कलङ्कः तेन चिह्नितम् अङ्कितम्, सुधाम्बुधेः क्षीरसमुद्रस्य जलवद्विमलम्, यस्य भीष्मकस्य यश एव शशधरं चन्द्रं मेनिरे सम्भावितवन्तः।

अत्र यशसक्षाच्छशचिह्नचिह्नितत्त्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरति-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्विवर्णभाग्यदि च यशो जगत्पतेः
तथाप्यभूद्बहुतरवर्णसंयुतम् ।
समैरिरत् प्रतिवनितागतेर्ष्यया
तटान्तरे क्षितिरपि कीर्त्तिमम्बुधेः ॥१२॥

---

श्लेषोक्तिरलङ्कारः वाच्या भावाभिमानिनी द्रव्योत्प्रेक्षा छन्त्यनुप्रासश्रुत्यनुप्रासच्छेकानुप्रासाश्च इत्येतेषां संसृष्टिः ॥११॥

বাঙ্গালা—যে ভীষ্মকরাজার যশ ক্ষীরসমুদ্রের জলের ন্যায় নির্ম্মল ছিল, সাধুপ্রকৃতি লোকেরা সর্ব্বদা সকল দিকে সেই যশ গাহিয়া বেড়াইতেন, তাহাতেই তাঁহাদের মুখের অন্ন কালচিহ্নরূপে পরিণত হইয়া সে যশকে অঙ্কিত করিত, এহেন যশকেই জগতের লোক শশাঙ্ক বলিয়া মনে করিত ॥১১॥

अन्वयः—जगत्पतेः यशः यदि च द्विवर्णभाक्, तथापि बहुतरवर्णसंयुतं अभूत् । क्षितिः अपि प्रतिवनितागतेर्ष्यया कीर्त्तिं अम्बुधेः तटान्तरे समैरिरत् ॥१२॥

राज्ञः कीर्त्तियशसोर्विस्तारमाह द्विवर्णभागिति । जगत्पतेर्भूपतेर्भीष्मकस्य, यशो यशःशब्दः, यदि च यद्यपि, द्वौ वर्णौ ब्राह्मणादिवर्णद्वयं स्वरूपे द्वे अक्षरे च भजत इति द्विवर्णभाक्; तथापि, बहुतरैर्वर्णैः ब्राह्मणादिभिः स्वरैश्च संयुतं सम्बद्धमभूत् । क्षितिरपि अधिकृता भूमिश्च, प्रतिवनितां सपत्नीं गता चासौ ईर्ष्या चेति तयैव, कीर्त्तिम्, अम्बुधेः समुद्रस्य, तटान्तरे अपरतीरे, समैरिरत् प्रेरितवती । भीष्मकस्य यशः सर्वजातिभिरुद्घोषितम्, कीर्त्तिश्च दिग्दिगन्तगतेति सरलार्थः ।

अत्र पूर्वार्द्धे श्लेषेण विरोधसमाधानात् विरोधाभासोऽलङ्कारः; परार्द्धे तु प्रतीयमाना भावाभिमानिनी गुणोत्प्रेक्षा; अनयोः परस्परनिरपेक्षतया संसृष्टिः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

5·1

शरीरिणां सहभवदूषणानि षड्-
जितेन्द्रिये यमवति तत्र राजनि।
महाज्वरे विकृतिमतो महौषधे
विषाणि वा परमगुणानजीजनन् ॥१३॥

---

"यशः कीर्त्तिः समज्ञा च" इति कीर्त्तियशसोः पर्य्यायत्वेऽपि "शौर्य्यादिप्रभवा कीर्त्तिर्दानादिप्रभवं यशः" इति महाजनकृतलक्षणात् कीर्त्तियशसोर्भेदेन निर्द्देशः ; "स जीवति यशो यस्य कीर्त्तिर्यस्य स जीवति" इत्यादिवत्।

"वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु वाक्षरे" इत्यमरः ॥१२॥

বাঙ্গালা—ভীষ্মকরাজার যশটী যদিও দুইটী বর্ণ-( অক্ষর ) যুক্ত ছিল, তথাপি বহুতর বর্ণ ( জাতি ) সমন্বিত হইত এবং অধিকৃত ভূমিও সপত্নীগত ঈর্ষ্যাবশতই যেন তাঁহার কীর্ত্তিকে সমুদ্রের অপর পারে প্রেরণ করিয়াছিল ॥১২॥

अन्वयः—शरीरिणां षट् सहभवदूषणानि जितेन्द्रिये यमवति तत्र राजनि महाज्वरे विकृतिमतः महौषधे विषाणि वा परमगुणान् अजीजनन् ॥१३॥

भीष्मकस्य दूषितकामाद्यभावं दर्शयितुं प्रस्तौति शरीरिणामिति। शरीरिणाम्, षट्, सहभवद्दूषणानि काम-क्रोध-लोभ-मोह-मद-मात्सर्य्य-रूपाः सहजा दोषाः, जितेन्द्रिये, यमवति संयमशालिनी, तत्र राजनि भीष्मके, महाज्वरे, विकृतिमतो विकारिणः रोगिणः, महौषधे महौषध-घटकानि विषाणि वा विषाणीव, परमगुणान् अतीवोत्कर्षान् उपकारांश्च, अजीजनन् उत्पादितवन्ति।

अत्र दूषणानि परमगुणानजीजनन्निति कारणविरुद्धकार्य्योत्पत्ते-र्विषमालङ्कारः श्रौतोपमया सङ्कीर्य्यते।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धनान्यसावचकमतार्थिसात्कृतौ
रिपौ रुषः सुकृतकृतौ च लोभवान् ।
मुमोह दुर्वचसि च सत्कथोन्मदः
समत्सरोऽभवदखिलान् खलान् प्रति ॥१४॥

---

"वा स्यात् विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वः ॥१३॥

বাঙ্গালা—মহাজ্বরবিকাররোগীর পক্ষে মহৌষধের অন্তর্গত বিষ যেমন অত্যন্ত উপকার উৎপাদন করে, সেইরূপ জিতেন্দ্রিয় ও সংযমযুক্ত ভীষ্মকরাজার পক্ষে প্রাণিগণের স্বাভাবিক কাম, ক্রোধ, লোভ, মোহ, মদ ও মাৎসর্য্য এই ছয়টা দোষ—অত্যন্ত গুণ উৎপাদন করিয়াছিল ॥১৩॥

अन्वयः—असौ अर्थिसात्कृतौ धनानि अचकमत, रिपौ रुषः, सुकृतकृतौ च लोभवान्, दुर्वचसि मुमोह, सत्कथोन्मदः, अखिलान् खलान् प्रति च समत्सरः अभवत् ॥१४॥

प्रस्तुतं दोषाणां गुणजननं वर्णयति धनानीति। असौ भीष्मकः, अर्थिसात्कृतौ याचकेभ्यो दानाय, धनानि अचकमत अभिलषितवान्; रिपौ शत्रौ, रोषतीति रुषः, सुकृतकृतौ पुण्यकर्म्मणि, लोभवान् लोलुपः, दुर्वचसि कस्मिंदपि प्रति कटूक्तौ; मुमोह मोहं वैचित्यं प्राप; सत्-कथायाम् उन्मदः अधिकमत्तताशाली; अखिलान् खलान् दुर्जनान् प्रति च, मत्सरेण शुभोद्वेगेन सहेति समत्सरः, अभवत्। दानाय धनकामना, शत्रौ क्रोधः, पुण्यकार्य्ये लोभः, कटूक्तौ मोहः, सदालोचनायां मत्तता, दुर्जने मात्सर्य्यञ्च पुरुषस्य महान्तमुत्कर्षं जनयत्येवेति भावः।

अत्र अर्थिसात्कृतावेव धनान्यचकमत न पुनर्भोगायेत्यादिकथि-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दिवा पदं नहि तनुते निशीथिनी
न विद्यते द्युमणिभवा निशि द्युतिः ।
अगोचरे विचरति नैव कोऽपि चेत्
तदात्र काप्यजनि न दुर्जनक्रिया ॥१५॥

---

तान्यव्यपोहनादार्थिपरिसंख्यालङ्कारः अखिलान् खलान् इति छेकानुप्रासेन संसृज्यते ।

रोषतीति रुषः "नाम्युपध-प्री-कृ-गॄज्ञां कः" इति कप्रत्ययः ॥१४॥

বাঙ্গালা—ভীষ্মকরাজা প্রার্থিগণকে দান করিবার জন্য ধন কামনা করিতেন এবং তাঁহার শত্রুর প্রতি ক্রোধ, পুণ্যকার্য্যে লোভ, দুর্বাক্যে মোহ, সৎকথায় মত্ততা ও সমস্ত খললোকের প্রতি মাৎসর্য্য ( বিদ্বেষ ) ছিল ॥১৪॥

अन्वयः—निशीथिनी दिवा पदं नहि तनुते, द्युमणिभवा द्युतिः ( च ) निशि न विद्यते । कः अपि चेत् अगोचरे न एव विचरति, तदा अत्र का अपि दुर्जनक्रिया न अजनि ॥१५॥

रात्रौ दोषाभावं दर्शयति दिवेति । निशीथिनी रात्रिः, दिवा दिनाभिधाने काले, पदं प्रवृत्तिचेष्टाम्, नहि तनुते न खलु करोति, द्युमणेः सूर्य्यात् भवतीति द्युमणिभवा द्युतिर्दीप्तिश्च, निशि रात्रौ न विद्यते । अतएव कोऽपि चेत् अगोचरे आत्मनः अविषये, न विचरति, तदा अत्र भीष्मके काऽपि दुर्जनक्रिया परानर्थविधानादिरूपा, न अजनि न जाता, अस्य तदविषयत्वादेवेति भावः ।

अत्र विशेषद्वयेन वक्ष्यमाणसामान्यसमर्थनादर्थान्तरन्यासोऽलङ्कारः, "मदसिक्तमुखैर्मृगाधिपः" इत्यादिकिरातश्लोके मल्लिनाथोक्तवत् । छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥१५॥

বাঙ্গালা—রাত্রি, দিনের বেলায় পদক্ষেপ করিবার চেষ্টা করে না।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न केवलं किल कलया पृथक् पृथक्
दिगीश्वरा मिलितिमुपागता मिथः।
अवातरन्नवनिपतेः कलेवरे
शशास यद्दश दिश एक एव सः॥१६॥
विकर्त्तनो महसि, मुखे शशी, कृती
स मङ्गलो, मनसि बुधो, गुरुर्गुणे।

এবং সূর্য্যের দীপ্তিও রাত্রিতে প্রকাশ পায় না। অতএব কোন পদার্থই যদি অবিষয়ে প্রবৃত্ত না হয়, তবে এই ভীষ্মকে কোনও দুর্জনকার্য্য প্রবৃত্ত হয় নাই (ভীষ্মক কোনও দুর্জনকার্য্য করিতেন না)॥১৫॥

अन्वयः—दिगीश्वराः पृथक् पृथक् कलया केवलं न, (अपि तु) मिथः किल मिलितिं उपागताः (सन्त एव) अवनिपतेः कलेवरे अवातरन्। यत् एक एव सः दश दिशः शशास॥१६॥

राज्ञो महिमानं प्रतिपादयति नेति। दिगीश्वरा इन्द्रादयो दिक्पालाः "अष्टानां लोकपालानां मात्राभिर्निर्म्मितो नृपः" इति स्मरणात्, पृथक् पृथक् कलया अंशेन, केवलं न, अपि तु, मिथः परस्परं किल, मिलितिं सम्मेलनम्, उपागताः प्राप्ताः सन्त एव, अवनिपतेः राज्ञो भीष्मकस्य, कलेवरे देहे, अवातरन् अवतीर्णाः। यद्यस्मात्, एक एव, स भीष्मकः, दश दिशः शशास। दिक्पालानां पूर्णत्वाभावे पूर्णशासनं न सम्भवतीति भावः।

अत्र दिक्पालानां सम्मेलनपूर्व्वकावतरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते॥१६॥

বাঙ্গালা—ইন্দ্রপ্রভৃতি দিক্পালগণ পৃথক্ পৃথক্ অংশেই যে কেবল ভীষ্মকরাজার শরীরে অবতীর্ণ হইয়াছিলেন, তাহা নহে; কিন্তু তাঁহারা পরস্পর সম্মিলিত হইয়াই পূর্ণভাবে তাঁহার দেহে অবতীর্ণ হইয়াছিলেন। যেহেতু, তিনি একাকীই দশ দিক্ শাসন করিতেন॥১৬॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कविर्गिरि द्विषति शनिश्च तस्थिवान्
तथाप्यभून्नृपतिरसौ सुदुर्ग्रहः ॥१७॥
जजन्ति चेन्नहि जलजं जले जले
न चेत् क्षितौ फलति फलं वने वने।
नृपोचितो न खलु तदा तदात्मनि
मदो मनागपि धनसम्भवोऽभवत् ॥१८॥

---

अन्वयः—विकर्त्तनः महसि, शशी मुखे, सः मङ्गलः कृतौ, बुधः मनसि, गुरुः गुणे, कविः गिरि, शनिश्च द्विषति तस्थिवान्, तथापि असौ नृपतिः सुदुर्ग्रहः अभूत् ॥१७॥

तत्र राजनि सप्तानामेव ग्रहाणामधिष्ठानं दुर्द्धर्षत्वञ्च वर्णयति विकर्त्तन इति। विकर्त्तनः सूर्य्यः, महसि तेजसि; शशी चन्द्रः, मुखे वदने; स प्रसिद्धो मङ्गलः, कृतौ क्रियमाणे; बुधः, मनसि; गुरुर्बृहस्पतिः, गुणे दयादाक्षिण्यादौ; कविः शुक्रो वर्णयिता च, गिरि वाक्ये, शनिः द्विषति शत्रौ च, तस्थिवान् तस्थौ। तथापि असौ नृपतिर्भीष्मकः, सुदुर्ग्रहः अतीवदुष्प्रापा ग्रहा यत्र स इति विरोधः, अतीवदुर्द्धर्ष इति तत्समाधानम्। अभूत्।

अत्रापि विकर्त्तनादीनां महःप्रभृतिषु स्थितत्वासम्बन्धेऽपि तत्-सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, विरोधाभासश्चेत्युभयोर्मिथो निरपेक्षतया संसृष्टिः। अतिशयोक्त्या च राज्ञो महःप्रभृतीनां सातिशयत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

"महस्तूत्सवतेजसोः" इत्यमरः। तस्थिवान् इति स्थाधातोः क्वसुप्रत्यये रूपम्। अभूदिति च अस्तेरद्यतन्यां प्रयोगः ॥१७॥

বাঙ্গালা—ভীষ্মকরাজার তেজে সূর্য্য, মুখে চন্দ্র, কার্য্যে মঙ্গল, হৃদয়ে বুধ, গুণে বৃহস্পতি, বাক্যে কবি (শুক্র) এবং শত্রুবর্গে শনি থাকিতেন; তথাপি সেই রাজা অতিদুর্গ্রহ (অতিদুর্লভগ্রহ, অতিদুর্দ্ধর্ষ) ছিলেন ॥১৭॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवेज्जले ज्वलनभवापि तप्तता
सुरार्पणात् पुनरनलेऽपि शीतता।
अभून्नृपे सति च विकारकारणे
दृढ़ाशये नहि विकृतिः कियत्यपि ॥१६॥

अन्वयः—क्षितौ जलजं चेत् जले जले नहि जजन्ति, फलं (च) चेत् वने वने न फलति, तदा धनसम्भवः नृपोचितः मनाक् अपि मदः तदात्मनि न खलु अभवत् ॥१८॥

राज्ञो धनमत्तता नासीदित्याह जजन्तीति। क्षितौ पृथिव्याम्, जलजं पद्मञ्चेत्, जले जले प्रतिजलम्, नहि जजन्ति न जायते; फलञ्चेत्, वने वने प्रतिवनम्, न फलति तरुर्नोत्पादयति स्वयं नोत्पद्यते वा तदा, धनात् सम्भवतीति धनसम्भवः, नृपोचितः राजयोग्यः, मनाक् अल्पोऽपि मदः मत्तता, तस्य भीष्मकस्य आत्मनि चित्ते न खलु अभवत्। जलवने पद्मफलयोरिव धनं न मत्तताया नियतं कारणमिति भावः।

अत्र दृष्टान्तोऽलङ्कारः पूर्ववदनुप्रासाभ्यां संसृज्यते।

"किञ्चिदीषन्मनागल्पे" इत्यमरः। जजन्तीति "जन जनने" इत्यस्य वर्त्तमानातिविभक्तौ जुहोत्यादित्वाद्द्विर्वचने रूपम् ॥१८॥

বাঙ্গালা—পৃথিবীতে প্রত্যেক জলে যদি পদ্ম না জন্মে এবং প্রত্যেক বনে যদি ফল উৎপন্ন না হয়, তাহা হইলে রাজার যোগ্য ধনসম্ভূত অল্প মত্ততাও ভীষ্মকরাজার চিত্তে উৎপন্ন হয় নাই ॥১৮॥

अन्वयः—जले अपि ज्वलनभवा तप्तता भवेत्, पुनः अनले अपि सुरार्पणात् शीतता भवेत्। (किन्तु) दृढ़ाशये नृपे विकारकारणे सति च कियती अपि विकृतिः नहि अभूत् ॥१६॥

राज्ञश्चित्तविकारनिबन्धनं विचारवैरूप्यं नासीदित्याह भवेदिति। नियतशैत्यगुणे जलेऽपि ज्वलनादग्नेर्भवतीति ज्वलनभवा अग्निसन्तापनिबन्धना तप्तता सन्तापो भवेत्; पुनः अनले अग्नावपि सुराया मद्यविशेषस्य अर्पणात् निक्षेपात्, शीतता शैत्यगुणो भवेत्; किन्तु दृढ़ाशये

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मह्हीपतौ मनुमनुसृत्य शासति
प्रजां नहि क्वचिदपि दुःखमस्पृशत्।
विरोचने सति हि चकासति प्रगे
करोति नो जननयनावृतिं तमः॥२०॥

अविचलितचित्तवृत्तौ नृपे भीष्मके, विकारकारणे सति च, कियती अपि विकृतिर्विकारः विचारनिबन्धनं विकारवैरूप्यमित्यर्थः, नहि अभूत्।

अत्र वैधर्म्येण दृष्टान्तोऽलङ्कारः, कारणे सत्यपि कार्य्यानुत्पत्ते-र्विशेषोक्तिश्च अनयोरङ्गाङ्गिभावेन सङ्करश्छेकानुप्रासेन संसृज्यते॥१९॥

বাঙ্গালা—অগ্নিসন্তাপনিবন্ধন জলেও উষ্ণতা হয় এবং মন্ত্রবিশেষ নিক্ষেপ করিলে অগ্নিতেও শীতলতা হইয়া থাকে; কিন্তু বিকারের কারণ থাকিলেও দৃঢ়চিত্ত ভীষ্মকরাজার চিত্তে অল্প বিকারও হইত না॥১৯॥

अन्वयः—मह्हीपतौ मनुं अनुसृत्य शासति (सति) दुःखं क्वचिदपि प्रजां नहि अस्पृशत्। हि प्रगे विरोचने चकासति सति तमः जननयनावृतिं नो करोति॥२०॥

राज्ञः सुशासनमाह मह्हीति। मह्हीपतौ भीष्मके, मनुं मानवं धर्म्मशास्त्रम्, अनुसृत्य शासति राज्ये शासनं कुर्वति सति, दुःखं कर्त्तृ, क्वचित् कदाचिदपि, प्रजां जनम्, नहि अस्पृशत् लेशतोऽपि न खलु समबध्नात्; राज्ञः सुशासनगुणादेव तस्करादिनिबन्धनसर्वदुःखनिवृत्ते-रिति भावः। हि तथाहि, प्रगे प्रभाते काले, विरोचने सूर्य्ये, चकासति प्रकाशमाने सति, तमः अन्धकारः, जनानां नयनावृतिं चक्षुरावरणं न करोति।

अत्र साधर्म्येण दृष्टान्तोऽलङ्कारश्छेकानुप्रासश्चेत्युभयोः संसृष्टिः। "प्रजा स्यात् सन्ततौ जने" इति "प्रगे प्रातः" इति चामरः॥२०॥

বাঙ্গালা—ভীষ্মকরাজা মনুপ্রণীত ধর্ম্মশাস্ত্র অনুসারে রাজ্যশাসন করিতে থাকিলে, কখনও কোন দুঃখ আসিয়া প্রজাগণকে স্পর্শ করিত

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तमःक्रमो निशि, चलता लताततौ,
दिवोष्णता, शशिनि कलङ्ककालिमा ।
कलिर्युगे, वचसि विभक्तियोजनम्,
तदाऽभवद्वपुषि च शक्तिधारणम् ॥२१॥

না। কারণ, প্রভাতকালে সূর্য্য উদিত হইলে, অন্ধকার লোকের নয়ন আবৃত করে না ॥২০॥

अन्वयः—तदा तमःक्रमः निशि, चलता लताततौ, उष्णता दिवा, कलङ्ककालिमा शशिनि, कलिः युगे, विभक्तियोजनं वचसि, शक्तिधारणञ्च वपुषि अभवत् ॥२१॥

तदानीन्तनलोकानां प्रायेण दोषाभावं सूचयति तम इति। तदा भीष्मकशासनकाले, तमःक्रमः अन्धकारपरम्परा, निशि रात्रौ, न पुनस्तमःक्रमस्तमोगुणनिबन्धनाज्ञानपरम्परा लोकसमाजे। चलता चञ्चलता, लताततौ वल्लीसमूहे; न पुनश्चलता चित्तचाञ्चल्यं स्त्रीजातौ। उष्णता, दिवा सौरकिरणावच्छिन्नकाले; न तु उष्णता कोपसन्तापो जनसमाजे। कलङ्ककालिमा शशचिह्नकार्ष्ण्यम्, शशिनि चन्द्रे; न पुनरपवादमालिन्यं लोकचरित्रे। कलिः अन्तिमयुगम्, युगे सत्यादियुगपर्य्याये, न पुनः कलिः कलहो लोकसमाजे। विभक्तियोजनं सुप्तिङ्प्रयोगः, वचसि वाक्ये; न तु विभक्तियोजनं विभागसम्पादनं भ्रात्रादौ। शक्तिधारणं बलाश्रयणञ्च, वपुषि शरीरे; न तु शक्तिधारणं शक्तिनामकास्त्रग्रहणं विवदमानजनेषु अभवत्; सर्वत्र राज्ञश्चेष्टावैचित्र्यादिति भावः।

अत्र प्रदर्शितरीत्या कथितान्यवस्तुव्यपोहनात् श्लेषसङ्कीर्णा आर्थी परिसंख्यालङ्कारश्छेकानुप्रासाभ्यां संसृज्यते।

"कलङ्कोऽपवादवादयोः" इत्यमरः, "कलिः स्यात् कलहे शूरे कलिरन्त्ययुगे युधि" इति विश्वः ॥२१॥

বাঙ্গালা—ভীষ্মকরাজার শাসনসময়ে রাত্রিতে তমঃক্রম (অন্ধকার

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

অহর্পতেরহনি করৈঃ প্রফুল্লতি
সরোজিনী নিশি চ পুনর্নিমীলতি।
মহীপতের্জগতি করৈস্তদাতনী
প্রজাঽভজৎ সততমতীবফুল্লতাম্ ॥২২॥

সমূহ) থাকিত, কিন্তু লোকসমাজে তমঃক্রম (অজ্ঞানপরম্পরা) থাকিত না; লতাসমূহে চঞ্চলতা ছিল, কিন্তু স্ত্রীজাতিতে চঞ্চলতা ছিল না; দিনের বেলায় উষ্ণতা (গরম) হইত, কিন্তু লোকসমাজে উষ্ণতা (ক্রোধসন্তাপ) হইত না; চন্দ্রে কলঙ্ককালিমা (শশচিহ্নের কৃষ্ণবর্ণ) ছিল, কিন্তু লোকচরিত্রে কলঙ্ককালিমা (অপবাদমালিন্য) ছিল না; যুগপর্য্যায়ে কলি (শেষযুগ) ছিল, কিন্তু লোকসমাজে কলি (কলহ) ছিল না; বাক্যে বিভক্তিযোজন (সুপ্ ও তিঙ্ বিভক্তির প্রয়োগ) হইত, কিন্তু ভ্রাতৃপ্রভৃতির মধ্যে বিভক্তিযোজন (বিভাগ করা) হইত না এবং মানুষ শরীরে শক্তি ধারণ (বল ধারণ) করিত, কিন্তু বিবাদের সময় শক্তি ধারণ (শক্তিনামক অস্ত্র গ্রহণ) করিত না ॥২১॥

অন্বয়ঃ—সরোজিনী অহনি অহর্পতেঃ করৈঃ প্রফুল্লতি, পুনঃ নিশি চ নিমীলতি। (কিন্তু) তদাতনী প্রজা জগতি মহীপতেঃ করৈঃ সততং (এব) অতীবফুল্লতাং অভজৎ ॥২২॥

ভীষ্মকপ্রজাসু নিত্যমেব সন্তোষ আসীদিত্যাহ অহর্পতেরিতি। সরোজিনী পদ্মিনী, অহনি দিবসে, অহর্পতেঃ সূর্য্যস্য, করৈঃ কিরণৈঃ, প্রফুল্লতি বিকসতি হৃষ্যতি চ; পুনর্নিশি রাত্রৌ চ নিমীলতি সঙ্কুচতি বিষীদতি চ। কিন্তু তদাতনী ভীষ্মকসমকালীনা, প্রজা জনাঃ, জগতি, মহীপতেঃ ভীষ্মকস্য, করৈঃ রাজগ্রাহ্যধনাংশৈঃ, সততমেব অতীবফুল্লতাং নিতান্তমেব বিকাশং হর্ষঞ্চ, অভজৎ প্রাপ্নোৎ; অধিকতদ্গ্রহণাভাবাদিতি ভাবঃ।

অত্র সূর্য্যাপেক্ষয়া ভীষ্মকস্যাধিক্যবর্ণনাৎ ব্যতিরেকোঽলঙ্কারঃ ॥২২॥

বাঙ্গালা—পদ্মিনী দিনের বেলায় সূর্য্যের কিরণে প্রফুল্ল (বিকশিত)

CCO. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

नृपो मनोर्वचनमृते न कर्म्मकृत्
जनः पुनर्नृपवचनं विना च न ।
जनं जहत्यरमत नो रमापि सा
रमां त्यजद्भवनमभून्न किञ्चन ॥२३॥
विरूपता वियति, विदूनता दिने,
विलोड़नात् कलुषितता जलाशये ।

হয়, আবার রাত্রিতে সঙ্কুচিত হইয়া যায়, কিন্তু তৎকালের প্রজা, ভীষ্মক-রাজার করগ্রহণের ব্যবস্থায় সর্ব্বদাই অত্যন্ত প্রফুল্ল থাকিত ॥২২॥

अन्वयः—नृपः मनोः वचनं ऋते कर्म्मकृत् न अभूत्, पुनः जनश्च नृपवचनं विना कर्म्मकृत् न अभूत्, सा रमा अपि जनं जहती न अरमत, किञ्चन भवनं रमां त्यजत् न अभूत् ॥२३॥

भीष्मकराज्यस्य सर्वमङ्गलास्पदतां प्रतिपादयति नृप इति। नृपो भीष्मकः, मनोः मनुप्रभृतिधर्म्मशास्त्रकारगणस्य, वचनम् ऋते विना, कर्म्मकृत् न अभूत् किमपि कार्य्यं नाकार्षीदित्यर्थः। पुनर्जनश्च नृप-वचनं विना कर्म्मकृत् न अभूत्। सा प्रसिद्धा रमा लक्ष्मीरपि, जनं भीष्मकराज्यस्थलोकम्, जहती त्यजन्ती, न अरमत अन्यत्रानन्दं नान्वभवत्। किञ्चन किञ्चिदपि, भवनं गृहम्, कर्त्तृ, रमां लक्ष्मीम्, त्यजत् न अभूत्।

जहतीति "ओहाक् त्यागे" इति हाधातोः शतृङ्-प्रत्यये रूपम् ॥२३॥

বাঙ্গালা—ভীষ্মকরাজা মনুপ্রভৃতি ধর্ম্মশাস্ত্রকারগণের বাক্য ব্যতীত কোন কার্য্য করিতেন না; আবার প্রজারাও তাঁহার উপদেশ ভিন্ন কোন কর্ম্ম করিত না, লক্ষ্মী সেই প্রজাগণকে পরিত্যাগ করিয়া অন্যত্র আনন্দ অনুভব করিতেন না এবং সেই রাজ্যে কোন গৃহই লক্ষ্মী শূন্য ছিল না ॥২৩॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पथश्च्युतिर्जलधरवृष्टसम्बरे
विशीर्णताऽवसदपि पापतापयोः ॥२४॥
अवास्थित प्रतिकुसुमं मधुव्रतः
शरासने स्फुटकुसुमं स्मरस्य च ।

अन्वयः—विरूपता वियति, विदूनता दिने, विलोड़नात् कलुषितता जलाशये, पथः च्युतिः जलधरवृष्टसम्बरे, विशीर्णता अपि पापतापयोः अवसत् ॥२४॥

भीष्मकप्रजानां सौन्दर्य्यादिसम्पदमाह विरूपतेति। विरूपता रूपशून्यता, वियति आकाश एवामूर्त्तत्वात्; न पुनर्मानुषे विरूपता कुत्सितत्वम्। विदूनता सन्तापः, दिने सूर्य्यकिरणप्रभावाद्दिवस एव; न पुनर्मानुषचित्ते विदूनता शोकादिसन्तापः। विलोड़नात् अवघट्टनात्, कलुषितता आविलता, जलाशये पुष्करिण्यादावेव, न तु लोकसमाजे कलुषितता पापम्। पथो मार्गात्, च्युतिर्भ्रंशः, जलधरवृष्टसम्बरे मेघोत्सृष्टजल एव; न तु लोकसमाजे पथश्च्युतिः सदाचाराद्भ्रंशः। विशीर्णतापि क्षीणतापि, पापतापयोरेव; न तु धर्म्मसुखयोः अवसत्।

अत्रापि पूर्ववदार्थी परिसंख्यालङ्कारः, अवसदित्येकया क्रियया विरूपतादीनां कर्त्तृतयाभिसम्बन्धात् तुल्ययोगिता चेत्यनयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनर्वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते।

"नीरक्षीराम्बुसम्बरम्" इत्यमरः। विदूनतेति "दूङ् परितापे" इति विपूर्वकस्य दूधातोः क्तप्रत्यये "ल्वादिभ्यो" इत्यनेन ... "ल्वाद्योदनबन्धाच्चे"ति तकारस्य नकारः ॥२४॥

বাঙ্গালা—আকাশে বিরূপতা (রূপহীনতা) ছিল, কিন্তু মানুষে বিরূপতা (সৌন্দর্য্যহীনতা) ছিল না। আলোড়ননিবন্ধন জলাশয়ে কলুষিততা (আবিলতা) হইত; কিন্তু উপদ্রব করিলেও মনুষ্যসমাজে কলুষিততা (পাপাচরণ) হইত না। মেঘের জলই পথ হইতে বিচ্যুত হইত; কিন্তু মানুষ পথ (সদাচার) হইতে বিচ্যুত হইত না এবং পাপ ও সন্তাপেরই ক্ষীণতা থাকিত; কিন্তু ধর্ম্ম ও সুখের ক্ষীণতা থাকিত না ॥২৪॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्मरः पुनर्नवनवयौवने नृणां
शतावधौ वयसि च यौवनं तदा ॥२५॥
सरस्वती निखिलनरानुपाययौ
समीरिता जगति तथापि सा सती ।
वदन्ति ये किल कमलाञ्च चञ्चलां
मृषागिरस्त इति जगुर्धनेश्वराः ॥२६॥

---

अन्वयः—तदा मधुव्रतः प्रतिकुसुमं, स्फुटकुसुमञ्च स्मरस्य शरासने, स्मरः पुनः नृणां नवनवयौवने, यौवनञ्च शतावधौ वयसि अवास्थित ॥२५॥

तदानीन्तनलोकानां दीर्घजीवनवर्णनेन राजवर्णनमुपसंहरति अवास्थितेति। तदा भीष्मकशासनसमये, मधुव्रतो भ्रमरः, प्रतिकुसुमं प्रतिविकशितपुष्पे अवास्थित, स्फुटकुसुमं विकशितपुष्पञ्च, स्मरस्य कामदेवस्य, शरासने धनुषि, अवास्थित। स्मरः स कामः पुनः, नृणां नराणाम्, नवनवयौवने अवास्थित, यौवनञ्च, शतावधौ शतवर्षपर्य्यन्ते, वयसि अवास्थित।

अत्रापि अवास्थितेत्येकया क्रियया मधुव्रतादीनां कर्त्तृतयान्वयात् तुल्ययोगितालङ्कारः।

अवास्थितेति स्थाधातोः "समवप्रविभ्यः" इति रुचादित्वादद्यतन्या आत्मनेपदप्रथमपुरुषैकवचनम्, "स्थादोरिरद्यतन्यामात्मनि" इत्याकारस्येकारः ॥२५॥

বাঙ্গালা—ভীষ্মকরাজার শাসনসময়ে প্রত্যেক পুষ্পে ভ্রমর বসিত, প্রত্যেক প্রস্ফুটিত পুষ্প আবার কামদেবের ধনুতে থাকিত; সেই কামদেব আবার মানুষের নূতন নূতন যৌবনে অবস্থান করিতেন এবং সে যৌবন মানুষের একশত বৎসর বয়স পর্য্যন্ত থাকিত ॥২৫॥

अन्वयः—सरस्वती निखिलनरान् उपाययौ, तथापि जगति सा सती समीरिता; ये च किल कमलां चञ्चलां वदन्ति, ते मृषागिरः इति धनेश्वराः जगुः ॥२६॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नयादृते क्वियदयनं बभूव नो
प्रजान्तरे न च विनयं विना प्रथा।
रथाङ्गने न, न भवने गदाश्रयः
सदागमादभवदलं मुदागमः ॥२७॥

भीष्मकराज्ये सर्व्वेषामेव विद्वत्वं धनित्वञ्चाह सरस्वतीति। सरस्वती वाग्देवी, निखिलनरान् उपाययौ भेजे, तथापि सा सरस्वती जगति भीष्मकराज्ये, सती अव्यभिचारिणी अभ्यर्च्चिता च समीरिता लोकैरुक्ता। ये च लोकाः कमलां लक्ष्मीं चञ्चलां वदन्ति, ते मृषागिरः मिथ्यावाच इति धनेश्वराः तदानीन्तना धनिनः जगुः ऊचुः, स्वेषु कमलायाश्चिर-स्थिरत्वादिति भावः।

अत्र विरोधाभासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते।

"सत्ये साधौ विद्यमाने पूजितेऽभ्यर्च्चिते च सत्" इत्यमरः ॥२६॥

বাঙ্গালা—সরস্বতী তৎকালীন সমস্ত লোককে ভজনা করিতেন, তথাপি তাঁহাকে লোকে সতী বলিত ; আর যাহারা লক্ষ্মীকে চঞ্চলা বলে, তাহারা মিথ্যাবাদী, এই কথা তদানীন্তন ধনীরা বলিতেন ॥২৬॥

अन्वयः—नयात् ऋते कियत् अपि अयनं नो बभूव, प्रजान्तरे च विनयं विना प्रथा न बभूव। गदाश्रयः रथाङ्गने न बभूव, भवने (च) न बभूव, सदागमात् अलं मुदागमः अभवत् ॥२७॥

तदानीन्तनीं लोकानामवस्थामाह नयादिति। नयात् नीतेः, ऋते विना कियत् किञ्चिदपि अयनं पन्था नो बभूव, प्रजानां जनानाम् अन्तरे मध्ये च विनयं विना प्रथा व्यवहारो रीतिः न बभूव। गदाश्रयः गदा-धारणं रथाङ्गने न बभूव रणस्यैवाभावात्, भवने गृहे च गदानां रोगाणाम् आश्रयः अवस्थितिर्न बभूव, सर्व्वेषामेव स्वास्थ्यनियमानुवर्त्तित्वा-दित्याशयः। सतां सज्जनानाम् आगमात् गृहे उपस्थितेः अलं पर्य्याप्त एव मुदागमः आनन्दोत्पत्तिरभवत्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ইতীদৃশৈরখিলসুখৈরখণ্ডিতৈঃ
ধরেশিতুর্ভুবনতলে বভূব সা।
স্খলত্তুলা কিল নগরী গরীয়সী
ধ্রুবে ভবেৎ ক্ব ন সতি কারণে ক্রিয়া ॥২৮॥

অত্র বভূবেত্যেকয়া ক্রিয়য়া বহূনাং কর্তৃতয়াভিসম্বন্ধাৎ তুল্যযোগিতা-লঙ্কারঃ, গদাময় ইতি শ্লেষো বৃত্ত্যনুপ্রাসচ্ছেকানুপ্রাসাভ্যাঞ্চ সংসৃজ্যতে।
"অয়নং বর্ত্ম মার্গাধ্বপন্থানঃ পদবী সৃতিঃ" ইতি "রোগব্যাধি-গদাऽময়াঃ" ইতি চামরঃ ॥২৭॥

বাঙ্গালা—ভীষ্মকরাজার শাসনকালে নীতিপথব্যতীত মানুষের অন্য কোন পথ ছিল না, প্রজাদের মধ্যে সবিনয় ব্যবহার ভিন্ন অন্য কোন ব্যবহারের রীতি ছিল না, সমরাঙ্গণে গদা ধারণ হইত না, কিংবা গৃহস্থের গৃহে কোন রোগের আবির্ভাবও হইত না এবং সর্ব্বত্রই সজ্জনের উপস্থিতিনিবন্ধন লোকের প্রচুর আনন্দই জন্মিত ॥২৭॥

অন্বয়ঃ—ধরেশিতুঃ সা গরীয়সি নগরী ইতি ঈদৃশৈঃ অখণ্ডিতৈঃ অখিলসুখৈঃ ভুবনতলে স্খলত্তুলা বভূব কিল। কারণে ধ্রুবে সতি ক্ব ক্রিয়া ন ভবেৎ ॥২৮॥

বিদর্ভরাজধান্যাঃ প্রাধান্যমাহ—ইতীতি। ধরেশিতুর্ভূমিপতের্ভীষ্মকস্য, সা গরীয়সী সর্বগৌরবাস্পদীভূতা, নগরী রাজধানী, ইতি ইয়দন্তং যাবৎ উক্তৈঃ, ঈদৃশৈঃ, অখণ্ডিতৈঃ পূর্ণৈঃ, অখিলসুখৈঃ, ভুবনতলে, স্খলন্তী চ্যবমানা তুলা ঔপম্যং যস্যাঃ সা নিরুপমেত্যর্থঃ বভূব। কিলেত্যৈতিহ্যে। কারণে ধ্রুবে নিয়তে সতি, ক্ব কস্মিন্ স্থানে ক্রিয়া কার্য্যং ন ভবেৎ অপি তু সর্বত্রৈব ভবেদিত্যর্থঃ।

অত্র সামান্যেন বিশেষসমর্থনরূপোऽর্থান্তরন্যাসোऽলঙ্কারঃ, পূর্ববদনু-প্রাসাভ্যাং সংসৃজ্যতে ॥২৮॥

বাঙ্গালা—ভীষ্মকরাজার সেই গৌরবান্বিত নগরী এইরূপ সর্ব্বপ্রকার

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स यौवने निरविशदेकदोर्व्वरां
वसुन्धरां विदुषितरां बधूमपि।
तदादिमाऽनवरतयोग्यलालनात्
प्रजावती भवतितरां स्म, नापरा ॥२९॥

পরিপূর্ণ সুখে জগতের মধ্যে নিরুপমা হইয়াছিল। নিয়ত কারণ থাকিলে কোথায় ক্রিয়া না হয় ॥২৮॥

अन्वयः—सः यौवने एकदा उर्व्वरां वसुन्धरां विदुषितरां बधूं अपि निरविशत्। तदादिमा अनवरतयोग्यलालनात् प्रजावती भवतितरां स्म अपरा न ॥२९॥

स इति। स भीष्मकः, यौवने काले एकदा उर्व्वरां सर्व्वशस्याढ्यां वसुन्धरां भूमिम्, विदुषितरां विशेषेण विदुषीं बधूमपि भार्य्याञ्च निरविशत् भुक्तवान्। तदादिमा तयोः प्रथमा वसुन्धरा अनवरतं योग्यं यत् लालनम् आदरेण पालनं तस्मात्, प्रजावती प्रशस्तजनशालिनी, भवतितरां प्रकर्षेण भवति स्म अपरा बधूस्तु प्रजावती सन्तानवती न भवतितरां स्म।

अत्र निरविशदित्येकया क्रियया बधूवसुन्धरयोः कर्म्मतयान्वयात् तुल्ययोगितालङ्कारः प्रजावतीति श्लेषेण वृत्त्यनुप्रासेन च संसृज्यते।

"निर्वेशो भृतिभोगयोः" इति "प्रजा स्यात् सन्ततौ जने" इति चामरः।

प्रकर्षेण विदुषीति विदुषितरां "याकारौ स्त्रीकृतौ ह्रस्वौ क्वचित्" इति स्त्रीकारस्य ह्रस्वत्वम्। प्रजावतीति एकत्र प्रशंसायाम् अन्यत्र च संसर्गे वन्तुप्रत्ययः। भवतितरामिति "आख्यातक्विमेकारान्त—" इत्यादिना तरांप्रत्ययः ॥२९॥

বাঙ্গালা—ভীষ্মকরাজা যৌবনকালে এক সময়েই সর্ব্বশস্যশালিনী পৃথিবী এবং বিশেষ বিদুষী ভার্য্যা ভোগ করিতেন, কিন্তু তাহাদের মধ্যে প্রথমা (পৃথিবী) সর্ব্বদা উপযুক্তভাবে পালন করায় প্রজাবতী (প্রশস্ত-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निशासमा प्रहरसमान् प्रसूय सा
महीपतेरथ सुषमान् सुतान् प्रिया ।
उषासमामधृत सुतां निजान्तरे
शुभाद्विधेर्विशदरुचीविरोचिनी ॥२०॥
सितद्युतिः शिशुशशिचन्द्रिकान्तरा
नभःप्रभा प्रविरलतारकेव सा ।
विलोकयन्मनुजमनोविनोदिनी
सुतोदरा परिमितभूषणा बभौ ॥२१॥

প্রজাযুক্ত ) হইয়াছিল, কিন্তু দ্বিতীয়া (ভার্য্যা) প্রজাবতী (সন্তানশালিনী) হন নাই ॥২৯॥

अन्वयः—अथ विशदरुचीविरोचिनी निशासमा सा महीपतेः प्रिया शुभात् विधेः प्रहरसमान् सुषमान् प्रसूय निजान्तरे उषासमां अधृत ॥२०॥

ततः काले राज्ञः सन्तानोत्पत्तिमाह निशेति । अथ अनन्तरम्, विशदरुच्या निर्म्मलगौरकान्त्या विशेषेण रोचते शोभत इति विशदरुची-विरोचिनी, अन्यत्र तु विशदरुच्या चन्द्रस्य शुभ्रप्रभया विरोचत इति सा, निशासमा रात्रितुल्या, सा, महीपतेर्भूपालकस्य, प्रिया महिषी, शुभात् शुभजनकात्, विधेर्दैवात्, प्रहरसमान्, सुषमान् सुन्दरान् सर्व्वथा सम-परिमाणांश्च, सुतान् पुत्रान् प्रसूय, निजान्तरे स्वकीयोदरे आत्मनः शेषांशे च, उषासमाम् उषायास्तुल्याम्, सुतां तनयाम्, अधृत धृतवती ।

अत्रार्थी पूर्णोपमालङ्कारः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ।

"दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः ॥२०॥

বাঙ্গালা—তদনন্তর নির্ম্মল গৌরবর্ণশোভিতা, শুক্লপক্ষরাত্রিতুল্যা রাজমহিষী চারি প্রহরের ন্যায় চারিটী পুত্র প্রসব করিয়া পরে উষার ন্যায় একটী কন্যা গর্ভে ধারণ করিলেন ॥৩০॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दधाति या धरणिमिमां सदैव, सा
स्वयं हि यज्जठरमविन्ददिन्दिरा।
पदे पदे स्खलितपदालसा च सा
नृपाङ्गना न गुरुतराऽभवत् कथम् ॥३२॥

अन्वयः—सुतोदरा सितद्युतिः परिमितभूषणा च सा स्निग्धचन्द्रिकान्तरा प्रविरलतारका नभःप्रभा इव विलोकयन्मनुजमनोविनोदिनी ( सती ) बभौ ॥३१॥

तदानीन्तनीं महिष्या अवस्थामाह त्रिभिः। सितेति। सुता तनया उदरे यस्याः सा, सितद्युतिर्निर्म्मलकान्तिः, परिमितमल्पं भूषणं यस्याः सा च, सा भीष्मकमहिषी, स्निग्धचन्द्रिका नवज्योत्स्ना अन्तरे यस्याः सा, प्रविरला अत्यल्पाः तारकाः नक्षत्राणि यस्याः सा, नभःप्रभा आकाशकान्तिरिव, विलोकयतां निरीक्षमाणानां मनुजानां मनो विनोदयति आनन्दयतीति सा तादृशी सती बभौ।

अत्र श्रौतोपमालङ्कारश्छेकानुप्रासेन संसृज्यते ॥३१॥

বাঙ্গালা—গর্ভে কন্যাধারিণী, নির্ম্মলকান্তি ও অল্পভূষণা ভীষ্মকমহিষী, নবোদিত জ্যোৎস্নাযুক্তা অত্যল্পনক্ষত্রসমন্বিতা আকাশপ্রভার ন্যায় দর্শনকারী লোকদিগের চিত্তবিনোদন করিতে থাকিয়া শোভা পাইতেন ॥৩১॥

अन्वयः—या सदा एव इमां धरणिं दधाति, सा इन्दिरा स्वयं हि यज्जठरं अविन्दत्, सा नृपाङ्गना पदे पदे स्खलितपदा अलसा गुरुतरा च कथं न अभवत् ॥३२॥

दधातीति। या सदैव इमां धरणिं पृथिवीं दधाति पुष्णाति धरति च; सा इन्दिरा लक्ष्मीः, स्वयं हि आत्मनैव, यस्याः जठरमुदरम्, अविन्दत् अलभत; सा नृपाङ्गना भीष्मकमहिषी, पदे पदे प्रतिपदक्षेपे, स्खलितपदा अपसरच्चरणा, अलसा, गुरुतरा अतीवभारवती सम्मानास्पदीभूता च कथं न अभवत् अपि त्वभवदेव।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नृपप्रिया वपुरपुषन्मनोहरं
दिने दिने किल कमलालयाश्रितम् ।
प्रदीपभृत् सुविमलकाचमोचिका
तनोत्यलं रुचिररुचिं हि सर्वतः ॥३३॥

अत्र पालनधारणयोर्भारवत्सम्मानितयश्च भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः स्खलितपदत्वं गुरुतरत्वञ्च प्रति पूर्ववाक्यार्थौ हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्चानयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि च वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

"डु धाञ् भृञ् धारणपोषणयोः" इति गणपाठात् धाधातोरुक्तोभयार्थत्वं प्रतिपत्तव्यम् ॥३२॥

বাঙ্গালা—যিনি সর্ব্বদাই এই পৃথিবী ধারণ করিতেছেন, সেই লক্ষ্মী যাঁহার উদরে অবস্থান করিতেছিলেন ; সেই রাজমহিষীর প্রত্যেক পদক্ষেপে পদস্খলন কেন না হইবে এবং তিনি অলসা ও ভারাক্রান্তা কেন না হইবেন ॥৩২॥

अन्वयः—नृपप्रिया कमलालयाश्रितं दिने दिने मनोहरं वपुः किल अपुषत् । प्रदीपभृत् सुविमलकाचमोचिका हि सर्व्वतः अलं रुचिररुचिं तनोति ॥३३॥

नृपेति । नृपप्रिया राजमहिषी, कमलालयया गर्भरूपया लक्ष्मीदेव्या आश्रितम्, अतएव दिने दिने मनोहरम्, अधिकाधिकसौन्दर्य्यमापन्नम्, वपुः शरीरम्, किल, अपुषत् अधारयत् । प्रदीपं बिभर्त्तीति प्रदीपभृत् अभ्यन्तरे दीपशिखाधारिणी सुविमला चासौ काचमोचिका मोचाकारा काचनिर्म्मिता घटी चेति सुविमलकाचमोचिका, सर्वतः समन्तात्, अलम् अत्यर्थम्, रुचिररुचिं सुन्दरप्रभां तनोति विस्तारयति ।

अत्र दृष्टान्तोऽलङ्कारः, पूर्ववदनुप्रासौ चेति संसृष्टिः ॥३३॥

বাঙ্গালা—রাজমহিষী স্বয়ং লক্ষ্মীদেবীকর্ত্তৃক অধিষ্ঠিত বলিয়া প্রতিদিন অধিক অধিক সৌন্দর্য্যসম্পন্ন শরীর ধারণ করিতে লাগিলেন ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दिने दिने नृपवनितातनुश्रिया
नृपस्य च प्रमदविशेषधारया।
प्रजागणोन्नतिसुखशान्तिसम्पदा
सखीमुदा सह च स गर्भ ऐधत ॥३४॥
वयस्यया कृतवरिवस्यया चिरं
महीभृता प्रणयभृता च सम्भृताः।
मदप्रदा बहुविधदोहदाः सदा
तदन्तिकं स्म परिहरन्ति नेप्सिताः ॥३५॥

---

ভিতরে প্রদীপযুক্ত নির্ম্মল কাচমোচা ( কাচের ডুম ) সকল দিকেই অত্যন্তসুন্দর প্রভা বিস্তার করিয়া থাকে ॥৩৩॥

**अन्वयः**—सः गर्भः नृपवनितातनुश्रिया नृपस्य च प्रमदविशेषधारया प्रजागणोन्नति-सुख-शान्ति सम्पदा सखीमुदा च सह दिने दिने ऐधत ॥३४॥

गर्भवृद्धिमाह दिन इति। स गर्भः, नृपवनिताया राजमहिष्याः, तनुश्रिया देहकान्त्या, नृपस्य भीष्मकस्य च, प्रमदविशेषस्य आनन्दातिरेकस्य धारया प्रवाहेण, प्रजागणस्य उन्नतिसुखशान्तिभिर्युक्ता सम्पत् उन्नतिसुखशान्तिसम्पत् तया मध्यपदलोपी समासः। सखीनां मुदा हर्षेण च सह दिने दिने ऐधत अवर्द्धत गर्भस्य लक्ष्मीरूपत्वादित्याशयः।

अत्र सहोक्तिरलङ्कारो वृत्त्यनुप्रासश्चेत्यनयोः संसृष्टिः ॥३४॥

**বাঙ্গালা**—রাজমহিষীর দেহকান্তি, রাজার অতিরিক্ত আনন্দপ্রবাহ, প্রজাগণের উন্নতি, সুখ, শান্তি ও সম্পদ্ এবং সখীগণের আমোদের সহিত সেই গর্ভটী দিনে দিনে বৃদ্ধি পাইতে লাগিল ॥৩৪॥

**अन्वयः**—चिरं कृतवरिवस्यया वयस्यया प्रणयभृता महीभृता च सम्भृताः मदप्रदाः ईप्सिताः बहुविधदोहदाः सदा तदन्तिकं न परिहरन्ति स्म ॥३५॥



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न केवलं नृपनगरे जनेप्सिता
हरिप्रिया चिरमचलाऽभवत् स्वयम् ।
श्रितोदरा समुपचिताकृतिः क्रमात्
भृशाचलामपि जननीमजीजनत् ॥२६॥

---

तदानीं महिष्या अभिलाषपूरणमाह वयस्ययेति । चिरं सर्वदा, कृता वरिवस्या परिचर्य्या यया तया वयस्यया सख्या प्रणयभृता तत्प्रेमशालिना महीभृता राज्ञा च, सम्भृताः संगृहीताः, मदप्रदाः आनन्ददायिनः, ईप्सिताः अभीष्टाः, बहुविधदोहदाः नानाप्रकारवस्तूनि, सदा तस्याः महिष्याः अन्तिकं न परिहरन्ति स्म न तत्यजुः, अपि तु सर्वदैव तत्रासन्नित्यर्थः ।

अत्र सम्भृता इत्येकया क्रियया वयस्यामहीभृतोः कर्त्तृतयान्वयात् तुल्ययोगितालङ्कारश्छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ।

"वरिवस्या तु शुश्रूषा परिचर्य्याप्युपासनम्" इत्यमरः । "दोहदः पुंनपुंसकम्" इति रभसः, स च गर्भकालेऽभीष्टः पदार्थः ॥२५॥

বাঙ্গালা—সর্ব্বদা শুশ্রূষাকারিণী সখী এবং প্রণয়শালী স্বয়ং রাজা সংগ্রহ করিয়া দিতেন বলিয়া গর্ভকালে আনন্দজনক নানাবিধ অভীষ্ট বস্তু সর্বদাই মহিষীর নিকটে উপস্থিত থাকিত ॥৩৫॥

अन्वयः—जनेप्सिता हरिप्रिया केवलं स्वयं नृपनगरे चिरं अचला न अभवत् । (किन्तु सा) श्रितोदरा क्रमात् समुपचिताकृतिः (सती) जननीं अपि भृशाचला अजीजनत् ॥२६॥

गर्भवृद्धिं सूचयति नेति । जनैः सर्वैरेव लोकैः, ईप्सिता सर्वसुखहेतुत्वादाप्तुं, लब्धुमिष्टा, हरिप्रिया लक्ष्मीः, केवलं स्वयं नृपस्य भीष्मकस्य नगरे, चिरम् अचला न अभवत् । किन्तु सा, श्रितमवलम्बितम् उदरं मातुर्जठरं यया सा, क्रमात्, समुपचिता सम्यग्वृद्धिं प्राप्ता

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

अभूदथ प्रसवजवेदनोदये
महामहो गणकगणस्तथोन्मुखः ।
वसूपमो वसुपरिवर्षणोद्यतः
प्रतिग्रहग्रहिलजनोऽप्युपस्थितः ॥३७॥

आकृतिर्यस्याः सा तादृशी च सती, जननीमपि, भृशाचलां गर्भभारादेव चलने अतीवासमर्थाम्, अजीजनत् अकार्षीत् ।

अत्र जनन्या भृशाचलत्वजननकार्य्यं प्रति समुपचिताकृतिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, अर्थापत्तिश्छेकानुप्रासश्च इत्येतेषां मिथो निरपेक्षतया संसृष्टिः ॥३६॥

বাঙ্গালা—সমস্ত লোকের অভীষ্ট লক্ষ্মী কেবল যে ভীষ্মকরাজার রাজধানীতেই চিরকাল অচলা হইয়া রহিয়াছিলেন, তাহা নহে ; কিন্তু তিনি মাতার উদরে প্রবেশ করিয়া ক্রমশঃ বৃদ্ধি পাইতে থাকিয়া সে মাতাকেও অত্যন্ত অচলা করিয়াছিলেন ॥৩৬॥

अन्वयः—अथ प्रसवजवेदनोदये महामहः, गणकगणः उन्मुखः, वसूपमः वसुपरिवर्षणोद्यतः, तथा प्रतिग्रहग्रहिलजनः अपि उपस्थितः अभूत् ॥३७॥

रुक्मिण्याः प्रसवकालीनव्यापारमाह अभूदिति । अथ अनन्तरम्, प्रसवे प्रसवकाले जायते या सा प्रसवजा सा चासौ वेदना चेति तस्या उदये सती उपस्थितौ सत्याम्, महामहः लोकानामतीवोत्सवः, तथा गणकानां दैवज्ञानां गणः, उन्मुखः प्रसवसमयनिरूपणाय उद्ग्रीवः, वसूपमो वसुतुल्यो राजा भीष्मकः, वसुपरिवर्षणाय ब्राह्मणदरिद्रादौ धनवितरणाय उद्यतः उद्युक्तः, तथा प्रतिग्रहाय राज्ञो दत्तधनग्रहणाय ग्रहिल आग्रहवांश्चासौ जनश्चेति सोऽपि, उपस्थितः अभूत् ।

अत्र अभूदित्येकया क्रियया महामहादीनां कर्तृतयान्वयात् तुल्ययोगितालङ्कारश्छेकानुप्रासवृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रसूदरं सुरविषयस्य शून्यताम्
उपाम्बिकाकरमवनीस्य पूर्णताम् ।
नयन्त्यलं निजजनुषा स्वयं रमा
शुभे दिने समजनि कापि कन्यका ॥३८॥

"मह उद्धव उत्सवः" इत्यमरः। अयं महशब्दस्तु पुमानकारान्त-श्चामरटीकायां रघुनाथेनोक्तः। "देवभेदेऽनले रश्मौ वसुरत्ने धने वसु" इत्यमरः। "साग्रहे ग्रहिलस्त्रिषु" इति शुभूः ॥३७॥

বাঙ্গালা—তাহার পর একদিন মহিষীর প্রসববেদনা উপস্থিত হইলে, রাজভবনে মহোৎসব আরম্ভ হইল, দৈবজ্ঞেরা উদ্‌গ্রীব রহিলেন। বসুতুল্য প্রভাবশালী ভীষ্মকরাজা ধন বিতরণ করিবার জন্য প্রস্তত থাকিলেন এবং প্রতিগ্রহের আগ্রহশালী লোকেরাও আসিয়া উপস্থিত হইল ॥৩৭॥

अन्वयः—स्वयं रमा शुभे दिने निजजनुषा प्रसूदरं सुरविषयस्य शून्यतां, उपाम्बिकाकरं अवनीस्य अलं पूर्णतां नयन्ती का अपि कन्यका सती समजनि ॥३८॥

रुक्मिण्या जन्माह प्रसूदरमिति। स्वयं रमा लक्ष्मीः, शुभे दिने, निजजनुषा आत्मनो जन्मना, प्रसूदरं जननीजठरम्, सुरविषयं देवलोकस्य, शून्यताम्, उपाम्बिकाया धात्र्याः करं हस्तम्, अवनीं पृथिवीस्य, अलमत्यर्थम्, पूर्णताम्, नयन्ती प्रापयन्ती, का अपि कन्यका सती, समजनि सञ्जाता।

अत्र नयन्तीत्येकया क्रियया प्रसूदरादीनां कर्म्मतयाभिसम्बन्धात् तुल्ययोगितालङ्कारः ; विरूपयोः शून्यतापूर्णतयोः सङ्घटनात् विषमा-लङ्कारस्य अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

"जनयित्री प्रसूर्माता" इति "जनुर्जननजन्मानि जनिरुत्-पत्तिरुद्भवः" इति चामरः ॥३८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अवेदि न प्रसवजवेदनाऽमुया
सखीजनैर्जनितविनोदसान्त्वया।
प्रयाति यत्कृतकरुणाकणादपि
व्यथा, ततः कथमथवा व्यथाकथा ॥३९॥

বাঙ্গালা—স্বয়ং লক্ষ্মীদেবী নিজের জন্মদ্বারা জননীর উদর ও স্বর্গলোককে শূন্য করিয়া এবং ধাত্রীর হস্ত ও মর্ত্ত্যলোককে পূর্ণ করিয়া, শুভদিনে একটী কন্যা হইয়া উৎপন্ন হইলেন ॥৩৮॥

अन्वयः—सखीजनैः जनितविनोदसान्त्वया अमुया प्रसवजवेदना न अवेदि। अथवा व्यथा यत्कृतकरुणाकणात् अपि प्रयाति, ततः व्यथाकथा कथं (स्यात्) ॥३९॥

जनन्याः प्रसववेदनाया अकिञ्चित्करत्वं सूचयति अवेदीति। सखीजनैः, जनिते कृते विनोदसान्त्वने आश्वाससान्त्वने यस्यास्तया, अमुया भीष्मकमहिष्या, प्रसवजवेदना न अवेदि न विदिता। उक्तमर्थं समर्थयितुमाह प्रयातीति। व्यथा यत्कृतकरुणाकणादपि प्रयाति अपैति, ततस्तस्याः सकाशात्, व्यथाकथा वेदनाप्रसङ्गः कथं स्यात्; अपि तु कथमपि नेत्यर्थः।

अत्र प्रसववेदनाया अवेदनकार्य्यस्य परार्द्धाभिहितकारणेन समर्थनादर्थान्तरन्यासोऽलङ्कारः, तदवेदनकार्य्यं प्रति द्वितीयपादगतपदार्थानां हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, द्वितीयार्द्धे अर्थापत्तिद्वयञ्चेति गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः, सोऽपि च छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥३९॥

বাঙ্গালা—সখীরা আশ্বাস দেওয়ায় ও সান্ত্বনা করায় মহিষী প্রসব বেদনা অনুভব করিতে পারেন নাই। অথবা যাঁহার করুণাকণাতেও ব্যথা যায়, তাহা হইতে ব্যথার সম্ভাবনা হইবে কি করিয়া ॥৩৯॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विरोचिनीमथ विरचय्य मण्डलीं
क्षणात् क्षणक्षयितविषादमण्डलीम् ।
प्रचक्रिरे करतलगण्डमण्डना:
हुलुध्वनिं बहुलविलासिनीजना: ॥४०॥

अन्वय:—अथ बहुलविलासिनीजना: करतल-गण्ड-मण्डना: (सन्त:) क्षणात् क्षण-क्षयित-विषाद-मण्डलीं विरोचिनीं मण्डलीं विरचय्य हुलुध्वनिं प्रचक्रिरे ॥४०॥

सन्तानजन्मामोदे योषिदाचारमाह विरोचिनीमिति। अथ अनन्तरम्, बहुलाश्च ते विलासिनीजना: महिलालोकाश्चेति ते, करतलान्येव गण्डेषु कपोलेषु मण्डनानि भूषणानि येषां ते तादृशा: सन्त:, क्षणात् तत्क्षणादेव, क्षणेन उत्सवेन क्षयिता सञ्जातक्षया विषादमण्डली गृहकर्म्मादिनिबन्धननानावसादा यस्यां ताम्, विरोचिनीं मनोहराम्, मण्डलीं मण्डलाकारेणावस्थितिम्, विरचय्य विधाय, हुलुध्वनिं प्रचक्रिरे। अत्र स्वभावोक्तिरलङ्कार:, यमकं छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टि: ।

"निर्व्यापारस्थितौ कालविशेषोत्सवयो: क्षण:" इत्यमर: । विरचय्येति विरचयते: क्लोयपि "लघुपूर्व्वोऽय् यपि" इति कारितस्यायादेश: । क्षयितेति क्षयशब्दात् तारकादित्वादितच् ॥४०॥

বাঙ্গালা—তাহার পরে অনেক মহিলা আসিয়া সেস্থানে উপস্থিত হইল এবং যাহার যে মনের বিষাদ ছিল, তাহা তখনই আমোদে তিরোহিত হইয়া গেল। তদনন্তর তাহারা সুন্দর একটী মণ্ডলী (গোলাকারে অবস্থান) করিয়া আপন আপন গণ্ডদেশে করতল স্থাপন-পূর্ব্বক হুলুধ্বনি করিতে লাগিল ॥৪০॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथो मिथः कतिपयकिङ्करीजनाः
नृपान्तिके विरुरुधुरग्रतो गतौ ।
इतोऽन्तरे चतुरतरा च काचन
प्रपप्रथे त्वरितगतोत्सुकन्तु तम् ॥४१॥

अन्वयः—अथो कतिपयकिङ्करीजनाः नृपान्तिके अग्रतः गतौ मिथः विरुरुधुः । इतोऽन्तरे च काचन चतुरतरा तु ( किङ्करी ) त्वरितगतोत्सुकं तं प्रपप्रथे ॥४१॥

अथ राज्ञे कन्याजन्मवार्त्ताप्रदानमाह अथो इति । अथो अनन्तरम्, कतिपये च ते किङ्करीजना दासीलोकाश्चेति ते कतिपयकिङ्करीजनाः, नृपस्य कन्यापितुर्भीष्मकस्य अन्तिके अग्रतो गतौ प्रथमगमनविषये, मिथः परस्परम्, विरुरुधुः 'प्राचीनत्वादहमग्रे गच्छामी'त्यादिरूपेण विवादं चक्रुः। इतोऽन्तरे अत्रावसरे च काचन काचित्, चतुरतरा किङ्करी तु, त्वरितगताय वार्त्ताश्रवणार्थं स्वयमेव तत्र सत्वरगमनाय उत्सुकमुत्कण्ठितम्, तं नृपं भीष्मकम्, प्रपप्रथे प्रकर्षेण कन्याजन्मवार्त्तां कथयामास। चतुरताया एवैतत्फलमिति भावः।

अत्रापि पूर्ववत् स्वभावोक्तिरलङ्कारः। प्रथमं प्रख्यान प्रति चतुरतरा पदस्यार्थहेतुरिति पदार्थहेतुकं काव्यलिङ्गञ्च, अनयोरङ्गाङ्गिभावेन सङ्करः, स च वृत्त्यनुप्रासेन संसृज्यते।

प्रपप्रथे इति "प्रथ प्रख्याने" इति भौवादिकप्रथधातोः परोक्षायाः प्रथमपुरुषैकवचने रूपम् ॥४१॥

বাঙ্গালা—তাহার পরে রাজার নিকটে সংবাদ বলিতে প্রথমে কে যাইবে এই বিষয় লইয়া কয়েকজন দাসী পরস্পর বিবাদ করিতে লাগিল। এই অবসরে কোনও বিশেষ চতুরা দাসী তাড়াতাড়ি যাইয়া রাজার নিকট সেই সংবাদ বলিল; কিন্তু তখন রাজা নিজেই সেই সংবাদ শুনিবার জন্য সত্বর সে স্থানে যাইতে উৎসুক ছিলেন ॥৪১॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तथापि सा स्वजनसमानभागतः
महीपतेरलभत पारितोषिकम् ।
न कारणेऽसति च विवेकदृश्वनः
मनस्विनश्चलति मतिः कदाचन ॥४२॥
पदे पदे यस्य वधूभुजंगर्जनाः
प्रदध्वनुः परिननृतुः समुन्मदाः ।
सुतैकिका बहुषु सुतेषु तिष्ठतां
गृहाश्रमे मुदमधिकां ददाति हि ॥४३॥

---

अन्वयः—तथापि सा स्वजनसमानभागतः (एव) महीपतेः पारितोषिकं अलभत। (तथा) च विवेकदृश्वनः मनस्विनः मतिः कारणे न सति कदाचन न चलति ॥४२॥

राज्ञो न्याय्यपारितोषिकदानमाह तथापीति। तथापि प्रथम-प्रख्यानेऽपि, सा किङ्करी, स्वजनसमानभागतः अपरकिङ्करीतुल्यभागेनैव, महीपतेर्भीष्मकात्, पारितोषिकम् अलभत। तथा च विवेकेन दृष्ट-वानिति विवेकदृश्वनः, विवेचनानुसारेण कार्य्यकारिण इत्यर्थः, मनस्विनः प्रशस्तमनसो जनस्य, मतिर्बुद्धिः, कारणे, न सति न विद्यमाने, कदाचन, न चलति कर्त्तव्यात् न भ्रश्यति। अत्र प्रथमप्रख्यानन्तु चातुर्य्यमात्रा-दकिञ्चित्करमित्याशयः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

विवेकदृश्वन इति "दृशेः क्वनिप्" इति क्वनिप्प्रत्ययः ॥४२॥

বাঙ্গালা—তথাপি সেই দাসী অন্যান্য দাসীর সমান সমানই রাজার নিকট হইতে পারিতোষিক পাইল। কারণ, বিবেচনানুসারে কার্য্য-কারী প্রশস্তহৃদয় লোকের বুদ্ধি বিশেষ কারণ না থাকিলে কর্ত্তব্য ভ্রষ্ট হয় না। ॥৪২॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धृतोऽम्बया निवव्रृते एककोऽर्भकः
परोऽस्पृशल्लघुगति सूतिकागृहम्।
तमङ्गना स्नपितवती जलस्रवैः
समस्खलत् परमपरस्य तज्जले ॥४४॥

अन्वयः—समुन्मदाः जनाः पदे पदे वसु ववृषुः जगुः प्रदध्वनुः परिननृतुः (च)। हि बहुषु सुतेषु एकिका सुता गृहाश्रमे तिष्ठतां अधिकं (एव) मुदं ददाति ॥४३॥

कन्याजन्मवृत्तान्तप्रचारे राजधान्यवस्थामाह पद इति। सम्यक् उत्तमश्च मदः राजकन्याजन्मानन्दो येषां ते तादृशा जनाः, पदे पदे स्थाने स्थाने, वसु धनम्, ववृषुः अकातरभावेन ददुः, जगुः मङ्गलगानं चक्रुः, प्रदध्वनुः मिलित्वा प्रकर्षेणानन्दकोलाहलं चक्रुः; परिननृतुः सर्वत्र नृत्यं चक्रुश्च। हि यस्मात्, बहुषु सुतेषु पुत्रेषु सत्सु, एकिका एका, सुता कन्या, गृहाश्रमे तिष्ठतां गृहस्थानाम्, अधिकामेव, मुदमानन्दं ददाति। राजानन्देनैव राजभक्तानामानन्द इत्यभिप्रायः।

अत्र पूर्व्वार्द्धे बहुनां क्रियाणामेककर्त्तृकारकत्वात् दीपकमलङ्कारः; सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चानयोः पूर्व्ववत् सङ्करः ॥४३॥

বাঙ্গালা—রাজধানীর আনন্দোন্মত্ত লোকেরা স্থানে স্থানে ধন বিতরণ, গান, আনন্দকোলাহল ও নৃত্য করিতে লাগিল। বহু পুত্র জন্মের পরে একটী কন্যা জন্মিলে, সে গৃহস্থগণের অত্যন্ত আনন্দ জন্মাইয়া থাকে ॥৪৩॥

अन्वयः—एककः अर्भकः अम्बया धृतः (सन्) निवव्रृते, परः लघुगति सूतिकागृहं अस्पृशत्। अङ्गना जलस्रवैः तं स्नपितवती, अपरस्य तज्जले परं समस्खलत् ॥४४॥

तदानीं शिशूनां व्यापारमाह धृत इति। एकक एकः, अर्भकः शिशुः, अम्बया जनन्या, धृतः सन्, निवव्रृते सूतिकागृहस्पर्शान्निवृत्तः;

CC0. Vasishtha Tripathi Collection, Digitized By Siddhanta eGangotri Gyaan Kosha

প্রভাচণা বিরতনিমেষলোচনাঃ
বিনিশ্চলা বহুতরবামলোচনাঃ ।
দিদৃক্ষবঃ শিশুকৃতকর্ষণাংশুকাঃ
চকাশিরে বিততবিভূষণাংশুকাঃ ॥৪৫॥

পরঃ অন্যোঽর্ভকঃ, লঘ্বী দ্রুতা গতির্যস্মিন্ কর্ম্মণি তদ্‌যথা তথা সূতিকাগৃহম্ অস্পৃশত্ ; অঙ্গনা কাচিত্ স্ত্রী, জলসবৈর্জলধারাভিঃ, তং সূতিকাগৃহস্পর্শিনমর্ভকং স্নপিতবতী ; অপরশ্চ অর্ভকঃ, পরমত্যন্তম্, তজ্জলে সমস্খলত্ বিচরণাদপতত্ ।

অত্র স্বভাবোক্তিরলঙ্কারঃ ॥৪৪॥

বাঙ্গালা—একটী বালক সূতিকাগৃহ স্পর্শ করিতে যাইতেছিল, তখন তাহার মাতা তাহাকে ধরায় সে নিবৃত্তি পাইল ; অপর বালক দ্রুত যাইয়া সূতিকাগৃহ স্পর্শ করিল ; তখন কোন মহিলা জলধারাদ্বারা তাহাকে স্নান করাইয়া দিল এবং অন্য কোন বালক আসিয়া সেই জলে পা দিয়া পড়িয়া গেল ॥৪৪॥

অন্বয়ঃ—প্রভাচণাঃ বিরতনিমেষলোচনাঃ শিশুকৃতকর্ষণাংশুকাঃ বিততবিভূষণাংশুকাঃ বহুতরবামলোচনাঃ দিদৃক্ষবঃ, বিনিশ্চলাঃ ( সত্যঃ ) চকাশিরে ॥৪৫॥

দর্শনার্থং সীমন্তিনীসমবায়মাহ প্রভেতি । প্রভয়া কান্ত্যা খ্যাতা ইতি প্রভাচণাঃ, বিরতা নিবৃত্তা নিমেষা যেষাং তানি তাদৃশানি লোচনানি নয়নানি যাসাং তাঃ, শিশুভিঃ সন্তানৈঃ কৃতং কর্ষণম্ আকর্ষণং যেষাং তানি তাদৃশানি অংশুকানি বসনানি যাসাং তাঃ, তথা বিততা বিস্তৃতা বিভূষণানাং বিশিষ্টালঙ্কারাণাম্ অংশবঃ কিরণা যাসাং তাশ্চ বহুতরবামলোচনা বহুলা এবাঙ্গনাঃ, দিদৃক্ষবস্তাং কন্যাং দ্রষ্টুমিচ্ছবঃ, অতএব বিনিশ্চলা অতীবনিষ্পন্দাঃ সত্যঃ, চকাশিরে শুশুভিরে ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

অত্রানুপ্রাসযমকমলঙ্কারঃ ।

चकासती सितक्रतदीपभान्तरे
सुतात्मना समवतरन्त्यपि स्वयम्।
हरिप्रिया स्तिमितपयःपयोनिधेः
तदोदरे वसतिमिवाकरोन्निशि ॥४६॥

प्रभाचणा इति "तत्प्राते चणप् चणौ" इति चणप्रत्ययः। वितत-विभूषणांशुका इति "बहुव्रीहौ शेषाद्वा" इति कप्रत्ययः ॥४५॥

বাঙ্গালা—সুন্দরী বলিয়া বিখ্যাত বহুতর মহিলা সেই কন্যাটিকে দেখিবার জন্য আসিয়া সেইস্থানে নিস্পন্দ হইয়া শোভা পাইতে লাগিল; তখন তাহাদের নয়নে নিমেষ ছিল না, মূল্যবান্ অলঙ্কারের কিরণগুলি ছড়াইয়া পড়িতেছিল এবং কাহারও কাহারও শিশুসন্তানগণ কাপড় ধরিয়া টানিতে ছিল ॥৪৫॥

अन्वयः—स्वयं हरिप्रिया सुतात्मना समवतरन्ती (सती) अपि तदा निशि सितक्रतदीपभान्तरे चकासती (सती) स्तिमितपयःपयोनिधेः उदरे वसतिं अकरोत् इव ॥४६॥

क्षीरोदसागरजाताया लक्ष्मीदेव्या अवताररूपायास्तत्कन्याया शुभ्रवर्ण-प्रदीपालोकमध्ये अवस्थानादुत्प्रेक्षते चकासतीति। स्वयं हरिप्रिया लक्ष्मीः, सुतात्मना भीष्मककन्यारूपेण, समवतरन्ती मर्त्ये सम्यगवतरणं प्राप्नुवती सत्यपि, तदा निशि रात्रौ, असिता सिता शुभ्रवर्णा क्रता गन्धकादिदाह्यदानेन सम्पादिता या दीपभा प्रदीपालोकः, तस्या अन्तरे मध्ये, चकासती प्रकाशमाना सती, स्तिमितानि निश्चलानि पयांसि दुग्धानि यस्य तादृशस्य पयोनिधेः क्षीरोदसागरस्य उदरे अभ्यन्तरे, वसतिं वासम् अकरोदिव; शुभ्रवर्णप्रदीपप्रभाया क्षीरोदसागरतुल्यत्वात् तन्मध्ये च तदानीं तस्या अवस्थानादिति भावः।

अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारश्छेकानुप्रासेन संसृज्यते।

CC0. [...]tha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

যদোঃ কুলং পরমহসজ্জগচ্চ যত্
তদেব কিং বিধুকিরণচ্ছলাদ্বভৌ ।
মনোঽদুনোদ্যদপি চ চেদিভূপতেঃ
তদেব চ স্ফুটমভবদ্গুহাতমঃ ॥৪৭॥

অসিতা সিতা কৃতেতি সিতকৃতা অশ্বেতকৃতা ইত্যাদিবত্ "অশ্ব্যা-দয়শ্চ্যর্থবৃত্তয়ঃ কৃতাদিভিঃ" ইতি সমাসঃ। সিতকৃতা চাসৌ দীপভা চেতি সিতকৃতদীপভা ইতি চ পুনঃ কর্ম্মধারয়ঃ ॥৪৬॥

বাঙ্গালা—স্বয়ং লক্ষ্মীদেবী ভীষ্মকরাজার কন্যারূপে আবির্ভূত হইয়াও সেই রাত্রিকালে শুভ্রবর্ণ প্রদীপালোকের মধ্যে প্রকাশিত হইতে থাকায় যেন নিশ্চল ক্ষীরোদসাগরের উদরের ভিতরে বাস করিতে ছিলেন ॥৪৬॥

অন্বয়ঃ—যদোঃ কুলং জগচ্চ যত্ পরং অহসত্, তদেব কিং বিধুকিরণচ্ছলাত্ বভৌ। যদপি চ চেদিভূপতেঃ মনঃ অদুনোত্, তদেব চ স্ফুটং গুহাতমঃ অভবত্ ॥৪৭॥

লক্ষ্মীরূপায়াস্তস্যা জন্মনি জগদানন্দং ভাবিনি ভূতবদুপচারাত্ যদুবংশস্য হর্ষং শিশুপালস্য মনস্তাপঞ্চ সূচয়তি যদোরিতি। যদোঃ কুলং বংশঃ, জগচ্চ কর্তৃ, যত্, পরমত্যন্তম্, অহসত্ ভাবিযদুবংশবধ্বা লক্ষ্মী-রূপায়া রুক্মিণ্যা জন্মনা আনন্দাত্ হাস্যমকরোত্; তত্ হাস্যমেব, কিম্, বিধুকিরণচ্ছলাত্ চন্দ্ররশ্মিব্যাজাত্, বভৌ চকাশে; "যশসি ধবলতা বর্ণ্যতে হাসকীর্ত্ত্যোঃ" ইতি কবিসময়প্রসিদ্ধহাসস্য শুভ্রত্বাদিতি ভাবঃ। যদপি চ, চেদিভূপতেঃ শিশুপালস্য, মনঃ, অদুনোত্ রুক্মিণ্যা অলভ্যমানত্বাত্ সন্তাপমভজত্; তদেব চ স্ফুটং স্পষ্টম্, গুহাতমঃ পর্ব্বতগুহাস্থিতোঽন্ধকারঃ অভবত্; আনন্দজাতস্য হাসস্য শুভ্রতয়া বর্ণনীয়ত্বেন তদ্বিপরীতস্য নৈরাশ্যজাতস্য মনস্তাপস্য কৃষ্ণবর্ণতয়া বর্ণনীয়ত্বাদিত্যাশয়ঃ।

CCO. Vacishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्वया भया मृदुतरया प्रभूतया
खरां क्षमामजयदसौ प्रदीपभाम् ।
तदत्र भावलिरिव चन्द्रिकान्तरे
विलीनतामगमदलं तदावली ॥४८॥

अत्र पूर्व्वार्द्धे सापह्नवोत्प्रेक्षालङ्कारः परार्द्धे च वाच्या भावाभिमानिनी द्रव्योत्प्रेक्षा, अनयोश्च मिथो निरपेक्षतया संसृष्टिः । किं स्फुटम् इत्युभयमप्युत्प्रेक्षावाचकम् ॥४७॥

বাঙ্গালা—রুক্মিণী জন্মগ্রহণ করায় যদুবংশ ও সমগ্র জগৎ আনন্দে যে অত্যন্ত হাস্য করিয়াছিল, তাহাই কি (সেই রাত্রিতে) চন্দ্রকিরণচ্ছলে প্রকাশ পাইয়াছিল ; আর শিশুপালের যে মনস্তাপ হইয়াছিল, স্পষ্টতঃ তাহাই গুহার অন্ধকার হইয়াছিল ॥৪৭॥

अन्वयः—असौ मृदुतरया प्रभूतया ( च ) त्वया भया खरां क्षमां ( च ) प्रदीपभाम् अजयत् । तत् चन्द्रिकान्तरे भावलिः इव तदावली अत्र अलं विलीनतां अगमत् ॥४८॥

अथ कन्यायाः प्रभाप्राचुर्य्यमाह त्वयेति । असौ भीष्मककन्या, मृदुतरया अतिकोमलया, प्रभूतया प्रचुरया च, त्वया निजया, भया प्रभया, खराम् उष्णतया तीव्राम्, क्षमामल्पाञ्च, प्रदीपानां भां प्रभाम् अजयत् । जयत्यर्थेनोत्कर्षं आक्षिप्यते । तथा च सर्व्वपक्षे खरप्रभापेक्षया कोमलप्रभा उत्कृष्टैव ; अल्पापेक्षया च प्रचुरोत्कर्षः अतएव सिद्ध एवेति भावः । तत् तस्मात्, चन्द्रिकान्तरे ज्योत्स्नामध्ये, भावलिः नक्षत्रश्रेणीरिव, तदावली प्रदीपश्रेणीः, अत्र तत्कन्याप्रभामध्ये, अलमत्यन्तम् ; विलीनतां लयमगमत् ।

अत्र जयलययोरसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिद्वयम्, जयं प्रति मृदुतरादिपदार्थानां हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, श्रौतोपमा, वृत्त्यनुप्रासश्च इत्येतेषां संसृष्टिः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दरिद्रता प्रबलतमापि पूर्वजा
मरिष्यति ध्रुवमचिरादितीव सा।
उपप्रसूकरयुगलात् प्रसूकरौ
निमीलितेक्षणयुगलं गतारुदत् ॥४९॥

"स्युः प्रभा रुग् रुचिस्त्विड् भा भाश्छविद्युतिदीप्तयः" इति "नक्षत्रमृक्षं भं तारा तारकाप्युडु वास्त्रियाम्" इति "वीथ्यालिरावलिः पङ्क्तिश्रेणीलेखास्तु राजयः" इति चामरः। तदावलीति आवलिशब्दात् "इतश्च क्तिवर्ज्जिताद्वा" इतीप्रत्ययः ॥४८॥

বাঙ্গালা—সেই রাজকন্যাটী অতিকোমল ও প্রচুর আপন প্রভাদ্বারা প্রখর ও অল্প প্রদীপগুলির প্রভাকে জয় করিল; সুতরাং পূর্ণ জ্যোৎস্নার মধ্যে নক্ষত্রশ্রেণীর ন্যায় কন্যাটীর প্রভার মধ্যে প্রদীপশ্রেণী একেবারে লয় পাইয়া গেল ॥৪৮॥

अन्वयः—प्रबलतमा पूर्व्वजा अपि दरिद्रता अचिरात् ध्रुवं मरिष्यति, इति इव सा उपप्रसूकरयुगलात् प्रसूकरौ गता (सती) निमीलितेक्षणयुगलं अरुदत् ॥४९॥

कन्यायाः प्रथमरोदनमाह दरिद्रतेति। प्रबलतमा, अधिका अधिकशक्तिका च, पूर्वजा स्वजन्मनः पूर्व्वं जाता अग्रजा ज्येष्ठभगिनीरूपा च, अपिशब्दार्थं, दरिद्रता लोकविशेषाणां निःस्वता, अचिरात् शीघ्रमेव, ध्रुवं निश्चितमेव च, मरिष्यति अपयास्यति प्राणांस्त्यक्ष्यति च, पूर्णलक्ष्मीरूपायाः स्वस्या आविर्भावादिति भावः। इति हेतोरिव, सा राजकन्या, उपप्रसूकरयुगलात् धात्रीहस्तद्वयात्, प्रसूकरौ जननीहस्तौ, गता सती, निमीलितं मुद्रितम् ईक्षणयुगलं चक्षुर्द्वयं यस्मिन् कर्म्मणि तद्यथा तथा, अरुदत्। अन्यापि अचिरभ्रुवभाविनि ज्येष्ठभगिनीमरणे रोदिति।

अत्र निरङ्गं श्लिष्टं केवलरूपकमलङ्कारः, हेतूत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तया क्रतादपि मुमुदे प्ररोदनात्
अपि स्मितात् सपदि बभूव विस्मितम्।
करेरणादपि च धृतिं मुदाऽधृत
प्रसूप्रभृत्यु पगतलोकमानसम् ॥५०॥

"जनयित्री प्रसूर्माता" इत्यमरः ॥४९॥

বাঙ্গালা—তদানীন্তন ব্যক্তিবিশেষের গুরুতর দরিদ্রতাস্বরূপ জ্যেষ্ঠাভগিনী অচিরকালমধ্যে নিশ্চয়ই মরিবে বলিয়াই যেন সেই কন্যাটী ধাত্রীর হস্ত হইতে মাতার হস্তে যাইয়া নয়নযুগল মুদ্রিত করিয়া রোদন করিতে লাগিল ॥৪৯॥

अन्वयः—प्रसूप्रभृत्युपगतलोकमानसं, तया क्रतात् प्ररोदनात् अपि मुमुदे, तया क्रतात् स्मितात् अपि सपदि विस्मितं बभूव, तया क्रतात् करेरणात् अपि मुदा धृतिं अधृत च ॥५०॥

तदानीं तत्रत्यलोकानामवस्थां प्रकटयति तयेति। प्रसूप्रभृतीनां जनन्यादीनाम् उपगतानां तत्रोपस्थितानां लोकानां मानसं मनः कर्त्तृ, तया कन्यया, क्रतात् प्ररोदनादपि, मुमुदे कौतुकादाननन्द, तया क्रतात्, स्मितात् ईषद्धास्यप्रकारादपि, सपदि तत्क्षणात्, विस्मितं विस्मयापन्नं बभूव। तया क्रतात्, करेरणात् हस्तसञ्चालनादपि, मुदा आनन्देन, धृतिं निश्चलतानिबन्धनाश्रद्धायां धैर्य्यम् अधृत अधारयच्च; तत्तल्लोकस्वभाववैचित्र्यादिति भावः।

अत्र विषादजनकरोदनरूपकारणात् हास्यजनकानन्दोत्पत्तेर्विषमा-लङ्कारश्छेकानुप्रासेन संसृज्यते ॥५०॥

বাঙ্গালা—কন্যাটীর রোদনেও জননীপ্রভৃতি উপস্থিত ব্যক্তিগণের মন আনন্দিত হইতে লাগিল, সে ঈষৎ হাস্যের ন্যায় ওষ্ঠযুগলের অবস্থা

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

দর্শেক্ষণাৎ সমবতি যা প্রজাব্রজং
তদা নু তাং পরমবিতুং পুরন্ধ্রয়ঃ ।
মহৌষধিব্রততিততিপ্রবন্ধনৈঃ
বিবেষ্টিরে তৃণকৃতসূতিকাগৃহম্ ॥৫১॥

করিলেও তত্রত্যলোকদিগের বিস্ময় জন্মিতে থাকিল এবং সে হস্ত সঞ্চালন করিলেও আনন্দে তাহাদের চিত্ত ধৈর্য্য ধারণ করিতে লাগিল ॥৫০॥

অন্বয়ঃ—যা দর্শেক্ষণাৎ (এব) প্রজাব্রজং সমবতি, তাং অবিতুং তদা নু পুরন্ধ্রয়ঃ মহৌষধিব্রততিততিপ্রবন্ধনৈঃ তৃণকৃতসূতিকাগৃহং পরং বিবেষ্টিরে ॥৫১॥

সূতিকাগৃহে যোষিদাচারসিদ্ধৌষধিবন্ধনমাহ তদেতি । যা লক্ষ্মীঃ, দয়য়া ঈক্ষণং দর্শনং তস্মাৎ দর্শেক্ষণাদেব, প্রজাব্রজং জনসমূহম্, সমবতি সম্যক্ রক্ষতি ; তাং তদবতাররূপাং রাজকন্যাম্ অবিতুং রক্ষিতুং তদা নু পুরন্ধ্রয়ঃ প্রৌঢ়া যোষিতঃ মহৌষধিরূপা যা ব্রততিততিঃ লতাসমূহঃ তস্যাঃ প্রবন্ধনাৎ তৃণকৃতসূতিকাগৃহম্, পরম্ অত্যন্তং বিবেষ্টিরে পরিবেষ্টিতবত্যঃ ।

অত্র বৃত্ত্যনুপ্রাসচ্ছেকানুপ্রাসয়োঃ সংসৃষ্টিরলঙ্কারঃ ।

"স্যাত্তু কুটুম্বিনী । পুরন্ধ্রী" ইত্যমরঃ । "পুরং গৃহং ধরতি বাহুলকাৎ ক্বি মুমাগমঃ" ইত্যমরটীকায়াং রঘুনাথঃ । অমরোক্তৌ তু পুরন্ধ্রীশব্দস্য "ইতশ্চ ক্তিবর্জ্জিতাদ্বা" ইতি ঈপ্রত্যয়ান্ততয়া দীর্ঘান্তত্বম্ ॥৫১॥

বাঙ্গালা—যে লক্ষ্মীদেবী দয়াপূর্ব্বক দৃষ্টিপাত করিয়াই [জনসধারণকে রক্ষা করেন, সেই লক্ষ্মীদেবীকেই রক্ষা করিবার জন্য প্রৌঢ় গৃহিণীরা, মহৌষধিলতাসমূহ বন্ধনদ্বারা সেই তৃণনির্ম্মিত সূতিকাঘরখানিকে বিশেষভাবে পরিবেষ্টন করিলেন ॥৫১॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदङ्गके समुदितशैत्यशान्तये
यदा जनो ज्वलनमजिज्वलद्गृहे।
तदा तयोर्मिलितसुवर्णभायुगं
पृथक्तया न खलु बुधोऽप्यबुध्यत ॥५२॥
हिमैरिवाम्बुजकलिकां निशीथिनी
विधोः कलां प्रकृतिरिवामृतद्रवैः।
असिस्नपद्विमलकवोष्णवारिभिः
करस्थितां मृदु मृदु कापि कामिनी ॥५३॥

अन्वयः—जनः यदा तदङ्गके समुदितशैत्यशान्तये गृहे ज्वलनं अजिज्वलत्, तदा बुधः अपि तयोः मिलितसुवर्णभायुगं पृथक्तया न खलु अबुध्यत ॥५२॥

प्रसूतिकन्ययोर्गात्रे तापदानाय वह्निप्रज्वलनमाह तदिति। जनः किङ्करीलोकः, यदा तयोः प्रसूतिकन्ययोः अङ्गके अङ्गसमूहे समुदितं प्रसवादेव समुत्पन्नं यत् शैत्यं शीतलत्वं तस्य शान्तये निवृत्तये, गृहे सूतिकाभवने, ज्वलनमग्निम्, अजिज्वलत् प्रज्वलितवान्; तदा तु बुधो बुद्धिमानपि तयोर्वह्निकन्ययोः मिलितयोः, सुवर्णभयोः सुवर्णतुल्यप्रभयोः युगं द्वयं पृथक्तया न खलु अबुध्यत।

अत्र मीलितं नामालङ्कारः, बोधसम्बन्धेऽपि तदसम्बन्धोक्तेरति-शयोक्तिश्चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासेन संसृज्यते ॥५२॥

বাঙ্গালা—সেই বালিকাটী ও প্রসূতির অঙ্গের শৈত্যনিবৃত্তির জন্য কোন দাসী যখন সূতিকাগৃহে অগ্নি প্রজ্বলিত করিল, তখন সেই বালিকা ও অগ্নির সম্মিলিত স্বর্ণতুল্য দুইটী প্রভাকে বুদ্ধিমান্ লোকও পৃথক্‌রূপে বুঝিতে পারিলেন না ॥৫২॥



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जनार्द्दनप्रियमहिला न निर्द्दया
जनान् बहून् समुपगता न चासती ।
सरस्वतीप्रतिवनिता न वाग्मिनी
चिरन्तनी न परिचिता च साऽभवत् ॥५४॥

---

अन्वयः—निशीथिनी हिमैः अम्बुजकलिकामिव प्रकृतिः अमृतद्रवैः विधोः कलामिव (च) कापि कामिनी विमलकवोष्णवारिभिः करस्थितां मृदु मृदु असिस्नपत् ॥५३॥

उष्णवारिणा बालिकायाः स्नपनं वर्णयति हिमैरिति। निशीथिनी रात्रिः, हिमैस्तुषारैः, अम्बुजकलिकां पद्मकलिकामिव, प्रकृतिः अमृतद्रवैः सुधाधाराभिः विधोश्चन्द्रस्य कलामिव च, कापि कामिनी, विमलकवोष्णवारिभिः निर्म्मलेषदुष्णजलैः, करस्थितां हस्तवर्त्तिनीं तां बालिकाम्, मृदु मृदु शनैः शनैः, असिस्नपत् स्नपितवती।

अत्र मालोपमालङ्कारो वृत्त्यनुप्रासेन संसृज्यते ॥५३॥

বাঙ্গালা—রাত্রি যেমন হিমদ্বারা পদ্মকলিকাকে এবং প্রকৃতি যেমন অমৃতরসদ্বারা চন্দ্রের কলাকে স্নান করায়, সেইরূপ কোন মহিলা নির্ম্মল ও ঈষদুষ্ণ জলদ্বারা হস্তস্থিত সেই কন্যাটীকে ধীরে ধীরে স্নান করাইয়া দিল ॥৫৩॥

अन्वयः—सा जनार्द्दनप्रियमहिलापि निर्द्दया न, बहून् जनान् समुपगतापि च असती न, सरस्वतीप्रतिवनितापि वाग्मिनी न, चिरन्तनी अपि परिचिता च न अभवत् ॥५४॥

तस्या वैचित्र्यमाह जनेति। सा लक्ष्मीरूपा कन्या तत्कन्या प्रकृतिभूता लक्ष्मीर्वा, जनानर्द्दयति निर्द्दयभावेन पीड़यतीति जनार्द्दनो नारायणः तस्य प्रियमहिला सत्यपि निर्द्दया नाभवत्, बहून् जनान् भाग्यवतो लोकान्, समुपगतापि धनादिसम्पद्रूपेण प्राप्ता सत्यपि, असती व्यभिचारिणी च नाभवत्; सरस्वत्या वाग्देव्याः प्रतिवनिता सपत्नीप्रतिनिधिभूता वनिता स्त्री च सत्यपि, वाग्मिनी वाक्पटुः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथामनाङ्मुदितमना महीपतिः
स्मितश्रिया धवलितलोहिताधरः।
फलान्वितं करमनु रुक्ममागतः
वितीर्य्य सोऽधिकतरमोदमग्रहीत् ॥५५॥

नाभवत्, तथा चिरन्तनी पुरातनी सत्यपि, परिचिता लोकेषु स्वरूपेणावगता च नाभवत्।

अत्र जनार्द्दनप्रियमहिलात्वादिकारणसत्त्वेऽपि तत्कार्य्यभूतनिर्द्दय-त्वाद्यभावात् विशेषोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते ॥५४॥

বাঙ্গালা—স্বয়ং লক্ষ্মীস্বরূপা সেই কন্যাটী (অথবা সেই কন্যাটীর প্রকৃতিভূতা লক্ষ্মীদেবী) জনার্দ্দনের প্রিয়তমা হইয়াও নির্দ্দয়া ছিলেন না, বহুলোকসংসৃষ্টা হইয়াও অসতী বলিয়া প্রসিদ্ধ হন নাই; সরস্বতীর প্রতিমহিলা হইয়াও বাক্‌পটুতা লাভ করেন নাই এবং প্রাচীনা হইয়াও লোকসমাজে স্বরূপে পরিচিতা ছিলেন না ॥৫৪॥

अन्वयः—अथ अमनाङ्मुदितमनाः स्मितश्रिया धवलितलोहिताधरः स महीपतिः आगतः (सन् तस्याः) करं अनु फलान्वितं रुक्मं वितीर्य्य अधिकतरमोदं अग्रहीत् ॥५५॥

उपहारप्रदानपूर्वकं राज्ञः कन्यादर्शनमाह अथेति। अथ कन्या-जन्मश्रवणानन्तरम्, अमनाक् अनल्पं मुदितम् आनन्दितं मनो यस्य सः, स्मितश्रिया ईषद्धास्यधवलकान्त्या, धवलितौ शुभ्रवर्णीकृतौ लोहिताधरौ रक्तोष्ठौ यस्य स तादृशश्च स महीपतिर्भीष्मकः, आगतः तत्सूतिका-गृहान्तिकमुपगतः सन्, करं तस्याः कन्यायाः हस्तम्, अनु लक्ष्यीकृत्य, फलान्वितं किञ्चित्फलयुक्तम्, रुक्मं स्वर्णम्, वितीर्य्य निक्षेपेण दत्त्वा, अधिकतरमोदं पूर्वापेक्षयातिरिक्तमानन्दम् अग्रहीत्, तत्सौन्दर्य्य-दर्शनादित्याशयः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुसम्भृतैः सपदि पुरः पुरोधसा
क्षितीश्वरो व्यधित च जातकर्म्म सः ।
ततः सुता कनकलतेव मार्ज्जनात्
महीयसीं रुचिररुचिं दधौ च सा ॥५६॥

---

अत्र पूर्वार्द्धे लोहिताधरयोः धावल्यगुणग्रहणात् तद्गुणालङ्कारः, परार्द्धे तु फलान्वितस्वर्णदानेन अधिकतरानन्दग्रहणात् परिवृत्तिरलङ्कारश्छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः ।

"किञ्चिदीषन्मनागल्पे" इति "रुक्मं कार्त्तस्वरम्" इति च स्वर्ण-पर्य्यायेऽमरः । धवलः कृत इति धवलितः करोत्यर्थे णिजन्तात् धवलशब्दात् कर्म्मणि क्तप्रत्ययः ॥५५॥

বাঙ্গালা—কন্যাজন্মবৃত্তান্তশ্রবণে ভীষ্মকরাজার মন অত্যন্ত আনন্দিত হইয়াছিল; তাহাতে ঈষৎ হাস্যের শুভ্রকান্তিতে তাঁহার রক্তবর্ণ ওষ্ঠযুগল শুভ্রবর্ণ হইয়া গিয়াছিল; সেই অবস্থায় ভীষ্মকরাজা সূতিকাগৃহের নিকটে আসিয়া কন্যাটীর হস্তে কোন ফলসংযুক্ত একখণ্ড স্বর্ণ সমর্পণ করিয়া অধিকতর আনন্দ লাভ করিলেন ॥৫৫॥

अन्वयः—सः क्षितीश्वरः सपदि पुरोधसा पुरः सुसम्भृतैः जातकर्म्म व्यधित च, सा सुता मार्ज्जनात् कनकलतेव ततः महीयसीं रुचिररुचिं दधौ च ॥५६॥

तत्कन्याया जातकर्म्मकरणं सूचयति सुसम्भृतैरिति । स क्षितीश्वरो भीष्मको राजा, सपदि सद्यः, पुरोधसा पुरोहितेन, पुरः पूर्वम्, सुसम्भृतैर्द्रव्यैः, तस्याः कन्यायाः जातकर्म्मसंस्कारम्, व्यधित अकरोत्, सा सुता कन्या, मार्ज्जनात्, कनकलता स्वर्णवल्लीव, ततो जातकर्म्मसंस्कारादेव महीयसीं महत्तराम्, रुचिररुचिं मनोहरकान्तिं दधौ धारयामास च । चकारद्वयं क्रिययोर्यौगपद्यं सूचयति ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ निजजननाद्भू रुक्मरूपीकृतत्वात्
तदधिपतिसुतानां रुक्मयोगाच्च नाम्नाम्।
गहनदहनरोचीरुक्मसावर्ण्यतो वा
समलभत सुता सा रुक्मिणीनाम नाम ॥५७॥

---

अत्र व्यधित च दधौ चेति क्रिययोर्यौगपद्यात् समुच्चयोऽलङ्कारः, "धूनोति चासिं तनुते च कीर्त्तिम्" इति दर्पणोदाहरणवत्; श्रौतोपमा चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासेन संसृज्यते ॥५६॥

বাঙ্গালা—রাজপুরোহিত পূর্ব্বেই জাতকর্ম্মের সমস্ত দ্রব্য আয়োজন করিয়া রাখিয়াছিলেন; সুতরাং ভীষ্মকরাজা তৎক্ষণাৎ কন্যাটীর জাতকর্ম্ম সংস্কার করিলেন; তখন মার্জ্জনা করায় স্বর্ণলতার ন্যায় কন্যাটী অধিকতর মনোহর কান্তি ধারণ করিল ॥৫৬॥

अन्वयः—अथ सा सुता निजजननात् भूरुक्मरूपीकृतत्वात्, तदधिपतिसुतानां नाम्नाञ्च रुक्मयोगात्, गहन-दहन-रोची-रुक्मसावर्ण्यतः वा नाम रुक्मिणीनाम समलभत ॥५७॥

"एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः" इत्यालङ्कारिकवचनप्रामाण्यात् सर्गान्ते वृत्तान्तरेण तस्या नामकरणमाह अथेति। अथाशौचापगमानन्तरम्, सा सुता, निजं यत् जननं जन्म तस्मात्, भुवः पृथिव्याः रुक्मरूपीकृतत्वात् आत्मनो लक्ष्मीरूपतया प्रायेण सम्पदुपचयात् स्वर्णतुल्यमहामूल्यीकरणात्; तस्या भुवः योऽधिपतिर्भीष्मकस्तस्य सुतानां सन्तानानाम्, नाम्नाञ्च रुक्मयोगात् रुक्मीत्यादिरूपेण रुक्मशब्दसम्बन्धात्, गहनं निविड़ं दहनस्य अग्नेरिव रोचिः प्रभा यस्य तत्तादृशं यत् रुक्मं स्वर्णं तस्य सावर्ण्यतः समानवर्णत्वाद्वा; नाम सम्भावनायाम्, रुक्मिणीनाम रुक्मिणीति संज्ञां समलभत प्राप्नोत्।

अत्र रुक्मिणीनामलाभं प्रति कारणत्रयोपन्यासात् समुच्चयोऽलङ्कारः, वृत्त्यनुप्रासश्छेकानुप्रासश्च त्वेतेषां संसृष्टिः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रातः पयोभिरधिकं परिपूयमानं
सन्ध्यां भजद्विशदधर्म्मि जपाय योग्यम् ।
दंशेन भीतिजनकं वदने क्रमेण
तस्या द्विजद्वयमुदित्य परं रराज ॥५८॥

"रुक्मं कार्त्तस्वरम्" इति स्वर्णपर्य्यायेऽमरः ।
मालिनी वृत्तम्—"न-न-म-य-य-युतेयं मालिनी भोगीलोकैः" इति लक्षणात् ॥५७॥

বাঙ্গালা—সেই কন্যাটী নিজের জন্মদ্বারা পৃথিবীকে রুক্মের (স্বর্ণের) তুল্য মহামূল্য করিয়াছিল বলিয়া, কিংবা ভূপতি ভীষ্মকের সন্তানগণের নামে রুক্মশব্দের যোগ চলিতেছিল বলিয়া, অথবা অগ্নির ন্যায় নিবিড়-কান্তিসম্পন্ন রুক্মের (স্বর্ণের) সমান বর্ণ ছিল বলিয়া, "রুক্মিণী" এই নাম লাভ করিয়াছিল ॥৫৭॥

अन्वयः—प्रातः पयोभिः अधिकं परिपूयमानं, सन्ध्यां भजत्, विशदधर्म्मि, जपाय योग्यं, दंशेन भीतिजनकं (च) द्विजद्वयं क्रमेण उदित्य तस्या वदने परं रराज ॥५८॥

अथ तत्कन्यायाः प्रथमदन्तजननमाह प्रातरिति। प्रातः प्रातः-काले अरुणोदये च, पयोभिर्जलैः, अधिकं यथा स्यात्तथा, परिपूयमानं प्रक्षालनेन दास्या अन्येन वा निर्म्मलीक्रियमाणम्, अन्यत्र तु स्नानेन पवित्रीक्रियमाणम् ; सन्धयां सन्धानं परस्परसंयोगमिति यावत्, भजत् आश्रयत्, अन्यत्र तु सन्ध्यां तदधिष्ठात्रीं देवीम्, भजत् आराध्नुवत् ; विशदः शुभ्र एव धर्म्मो गुणोऽस्यास्तीति विशदधर्म्मि, अन्यत्र तु विशदा व्यक्तो धर्म्मः पुण्यमस्यास्तीति विशदधर्म्मि, जपाय मृदुवर्णोच्चारणाय अनुस्वै-र्मन्त्रोच्चारणाय च योग्यं समर्थम् ; दंशेन दशनेन अभिसम्पातेन च, भीतिजनकञ्च ; द्विजद्वयं सम्मुखदन्तद्वयं ब्राह्मणद्वयञ्च ; क्रमेण उदित्य उत्पद्य आविर्भूय च, तस्याः कन्यायाः वदने, परमत्यन्तं रराज शुशुभे ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

साक्षादियं किल रमापि धरावतीर्णा
बाल्यादिभावमुदभावयदात्मनीनम् ।
नारी सुरीमभिनिनीषुरुपेत्य रङ्गं
सर्वं करोत्यभिनयं हि तदीयमेव ॥५८॥

---

अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः, द्विजद्वयं ब्राह्मणद्वयमिव द्विजद्वयं दन्तद्वयमित्युपमालङ्कारश्च व्यङ्ग्य इति शब्दार्थशक्तिमूलोऽलङ्कारध्वनिः । न तु श्लेषः, द्वितीयार्थस्याप्राकरणिकत्वात् ।

"पयः स्यात् क्षीरनीरयोः" इति मेदिनी । "सन्ध्या नदीकालभिदोश्चिन्तामर्य्यादयोरपि । प्रतिज्ञायाञ्च सन्धाने सन्ध्या च कुसुमान्तरे ॥" इति विश्वः । "विशदः पाण्डुरे व्यक्ते" इति हेमचन्द्रः । "दन्तविप्राण्डजा द्विजाः" इत्यमरः ।

ननु विशदधर्म्मीत्यत्र "न कर्म्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकरः" इति निषेधात् कथं मत्वर्थीय इन्प्रत्यय इति न वाच्यम् । बहुव्रीहिणा प्रशंसाया वक्तुमशक्यत्वात्, अत्र तु प्रशंसायामेव मत्वर्थीयेन्प्रत्ययविधानात्, अतएव बहुव्रीहिश्चेदर्थप्रतिपत्तिकर इत्यभिधानात् "नीलोत्पलवत् सरः, कृष्णसर्पवान् वल्मीकः" इत्यादिवत् । एतच्च कातन्त्रपरिशिष्टटीकायां गोपीनाथतर्काचार्य्यैरप्युक्तम् ।

वसन्ततिलका वृत्तम्—"उक्ता वसन्ततिलका त-भ-जा जगौ गः" इति लक्षणात् ॥५८॥

বাঙ্গালা—ক্রমে রুক্মিণীর মুখের ভিতরে সুন্দর দুইটী দন্ত উৎপন্ন হইয়া শোভা পাইতে থাকিল ; সে দন্ত দুইটী পরস্পর সংযুক্ত ও কোমল শব্দ উচ্চারণ করিতে সমর্থ ছিল এবং দংশনদ্বারা ভয় উৎপাদন করিত ; আর ধাত্রী বা দাসী প্রত্যহ প্রাতঃকালে জলদ্বারা সেই দন্ত দুইটীকে প্রক্ষালন করিয়া দিত ॥৫৮॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कीरालापे पिककलरवे किञ्च वीणानिनादे
श्रद्धामन्दा न खलु पुपुषुः कण्ठमस्याः पिबन्तः ।
हास्यज्वालं द्विगुणितसितं कुन्ददन्तप्रभाभिः
संपश्यन्तो दृदृशुरपि नो कौमुदीं मोदयन्तीम् ॥६०॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
रुक्मिणीसम्भवो नाम प्रथमः सर्गः ॥०॥

——:०:——

अन्वयः—इयं धरावतीर्णा साक्षात् किल रमापि आत्मनीनं बाल्यादिभावं उदभावयत् । सुरीं अभिनिनीषुः नारी हि रङ्गं उपेत्य तदीयमेव सर्व्वं अभिनयं करोति ॥५९॥

स्वयं लक्ष्मीदेव्या अवताररूपापि सा कन्या मानवीभावमेव सर्वमादत्ते स्मेत्याह साक्षादिति । इयम्, धरायां पृथिव्यां रुक्मिणीरूपे-णावतीर्णा, साक्षात् किल रमा लक्ष्मीरपि, आत्मनीनं शरीरसम्बन्धिनम्, बाल्यादिभावं मानवीव शैशवाद्यवस्थाम् उदभावयत् क्रमेणाविरभावयत् । सुरीं देवीम्, अभिनिनीषुर्नाटकादावभिनेतुमिच्छुः, नारी मानवी हि, रङ्गमभिनयस्थानम्, उपेत्य प्राप्य, तदीयमेव देवीसम्बन्धिनमेव, सर्वम्, अभिनयम् अवस्थानुकरणम्, करोति ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानु-प्रासेन संसृज्यते ।

उदन्तप्रत्ययस्य निष्ठादितया "न निष्ठादिषु" इति कर्म्मणि षष्ठी-निषेधात् सुरीमिति द्वितीयैव ॥५९॥

বাঙ্গালা—পৃথিবীতে রুক্মিণীরূপে অবতীর্ণা স্বয়ং লক্ষ্মীদেবী ও ক্রমশঃ নিজের বাল্য ও পৌগণ্ডপ্রভৃতি অবস্থা প্রকাশ করিতে লাগিলেন ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

কারণ, মানবী, কোন দেবীর অভিনয় ইচ্ছা করিয়া রঙ্গালয়ে যাইয়া সেই দেবীসম্বন্ধেই সমস্ত অভিনয় করিয়া থাকে ॥৫৯॥

**अन्वयः**—अस्याः कण्ठं पिबन्तः (जनाः) कीरालापे पिककलरवे किञ्च वीणानिनादे अद्धा खलु श्रद्धां न पुपुषुः। (तथा) कुन्ददन्तप्रभाभिः द्विगुणितसितं हास्यं अलं संपश्यन्तश्च (जनाः) मोदयन्तीमपि कौमुदीं नो दद्दशुः ॥६०॥

रुक्मिण्याः स्वरहास्ययोरसाधारणसौन्दर्य्यं सूचयति कीरेति। अस्या रुक्मिण्याः, कण्ठं कण्ठस्वरम्, पिबन्तः सादरं शृण्वन्तो जनाः, कीरस्य शुकपक्षिणः आलापे स्पष्टभाषणे, पिकस्य कोकिलस्य कलरवे अस्फुटमधुरध्वनौ, किञ्च अपि च, वीणायाः स्वनामख्यातस्य तन्त्रियन्त्रस्य निनादे शब्दे च, अद्धा निश्चितमेव, खलु श्रद्धां माधुर्य्यविश्वासम्, न पुपुषुः न धारयामासुः। शुककोकिलस्वरापेक्षया तत्स्वरस्य माधुर्य्यातिशयादिति भावः। तथा, कुन्दानि कुसुमानीव ये शुभ्रा दन्ता तेषां प्रभाभिः, द्विगुणितः द्विगुणीकृतः सितः शुभ्रवर्णो यस्य तद्द्विगुणितसितम्, हास्यम्, अलमत्यर्थम्, संपश्यन्तश्च जनाः, मोदयन्तीम् आनन्दयन्तीमपि कौमुदीं ज्योत्स्नाम्, नो दद्दशुः, कौमुद्या अपि हास्यस्य सौन्दर्य्यातिरेकादित्याशयः।

अत्र कीरालापादौ जनानां श्रद्धापोषणसम्बन्धेऽपि कौमुदीदर्शनसम्बन्धेऽपि च तत्तदसम्बन्धोक्तेरतिशयोक्तिद्वयम्, छेकानुप्रासश्चेत्येतेषां परस्परनिरपेक्षतया संसृष्टिः। अतिशयोक्तिद्वयेन च शुककोकिलस्वरापेक्षया तत्स्वरस्य कौमुद्यपेक्षया तदीयहास्यस्य च सौन्दर्य्यातिरेकसूचनात् व्यतिरेकालङ्कारद्वयं व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः।

"तत्त्वे त्वद्धाञ्जसाद्वयम्" इत्यमरः। "कण्ठो ध्वनौ सन्निधाने ग्रीवायां मदनद्रुमे" इति हेमचन्द्रः। "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इत्यमरोक्तिप्रामाण्यात् द्विगुणितसितेत्यत्र सितशब्दो गुणवचनः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

মন্দাক্রান্তা বৃত্তম্—"মন্দাক্রান্তাম্বুধি-র-স-নগৈর্মো ভনৌ গৌ য-যুগ্মম্" ইতি লক্ষণাৎ ॥৬০॥

ইতি শ্রীহেমচন্দ্রতর্কবাগীশবিরচিতায়াং রুক্মিণীহরণটীকায়াং বিচিত্রায়াং প্রথমঃ সর্গঃ ॥০॥

———:০:———

বাঙ্গালা—যাহারা রুক্মিণীর কণ্ঠস্বর আগ্রহের সহিত শুনিত, তাহারা শুকপক্ষীর কথা, কোকিলের অস্ফুট মধুরধ্বনি এবং বীণার শব্দও নিশ্চয়ই শুনিবার আগ্রহ পোষণ করিত না। আর কুন্দকুসুমের ন্যায় শুভ্রবর্ণ দন্তগুলির প্রভায় যাহার শুভ্রবর্ণকে দ্বিগুণ করিত; রুক্মিণীর সেই হাস্য-দর্শনকারী লোকেরা আমোদকারিণী জ্যোৎস্নাও দেখিত না ॥৬০॥

———০———

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## द्वितीयः सर्गः ।

——:०:——

अथातिलोला: वितनोति बाला
लावण्यलीलाललिता स्म खेलाम् ।
पश्यज्जनान् सैव चमच्चकार
स्वभावरम्यो हि शिशुस्वभावः ॥१॥

अन्वयः—अथ अतिलोला लावण्यलीलाललिता बाला खेलां वितनोति स्म । सा एव पश्यज्जनान् चमत् चकार । हि शिशुस्वभावः स्वभावरम्यः ॥१॥

अथेतः सप्तदशभिः श्लोकैः रुक्मिण्या बाल्यभावं वर्णयिष्यन् प्रस्तौति अथेति । अथ अतिलोला अतीवचञ्चला, लावण्येन कान्तिविशेषेण लीलया लोभनीयबालभावेन च, ललिता ईप्सिता हृद्येति यावत्, बाला भीष्मककन्या खेलां क्रीड़ां वितनोति स्म विशेषेण करोति स्म । सा खेलैव पश्यन्तश्च ते जनाश्चेति तान् चमत् विस्मयापन्नान् चकार । हि यस्मात्, शिशुस्वभावो बालभावः स्वभावेनैव रम्यो मनोहरः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, वृत्त्यनुप्रासो यमकञ्चेत्येतेषां संसृष्टिः ।

"मुक्ताफलस्य छायायां तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥"

इत्युज्ज्वलनीलमणिः । चमदिति विस्मयार्थकमव्ययम् । तथा च—"अर्वाञ्चो यदि गद्यपद्यरचनैश्चेतश्चमत् कुर्व्वते" इति कर्णाटराजमहिषी-वाक्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

অঙ্কান্তরোত্তানশয়াং বিধায়
যদা পয়ঃ পায়য়িতুং প্রসূতিঃ ।
নিনায় ভাণ্ডং তদসাবকাণ্ডে
স্বপাণিকম্পেন বিলুম্পতি স্ম ॥২॥

পঞ্চজনানিতি "চলৎপতাকং গৃহম্" ইত্যাদিবৎ প্রথমৈকাধিকরণ্যেঽপি ক্রিয়াপেক্ষায়ামিব সমানাধিকরণশব্দান্তরাপেক্ষায়াং শন্তৃঙ্ । অস্মিন্ সর্গে উপেন্দ্রবজ্রেন্দ্রবজ্রয়োর্মিলনাদুপজাতির্বৃত্তম্ ॥১॥

বাঙ্গালা—অত্যন্ত চঞ্চলা এবং লাবণ্য ও লীলার গুণে সকলেরই প্রীতির পাত্রী সেই কন্যাটী ক্রমে বিশেষভাবে বাল্যখেলা করিতে আরম্ভ করিল, সেই খেলাই দর্শনকারী লোকদিগের বিস্ময় জন্মাইতে থাকিল। কারণ, শিশুর স্বভাব স্বভাবতই মনোহর হইয়া থাকে ॥১॥

অন্বয়ঃ—যদা প্রসূতিঃ অঙ্কান্তরোত্তানশয়াং বিধায় পয়ঃ পায়য়িতুং ভাণ্ডং নিনায়, (তদা) অসৌ স্বপাণিকম্পেন তৎ অকাণ্ডে বিলুম্পতি স্ম ॥২॥

অঙ্কেতি। যদা প্রসূতির্জননী, অঙ্কান্তরে ক্রোড়মধ্যে উত্তানশয়াং তাং পৃষ্ঠস্যাধঃস্থাপনেন শয়িতাম্, বিধায় কৃত্বা, পয়ো দুগ্ধম্, পায়য়িতুম্, ভাণ্ডং দুগ্ধপাত্রম্, মুখান্তিকে নিনায়, তদা অসৌ রুক্মিণী, স্বপাণিকম্পেন নিজহস্তসঞ্চালনেন, তৎ ভাণ্ডম্, অকাণ্ডে অনবসরে, বিলুম্পতি স্ম পাতনেন ব্যর্থীচকার।

অত্র স্বভাবোক্তিরলঙ্কারশ্ছেকানুপ্রাসেন সংসৃজ্যতে ॥২॥

বাঙ্গালা—মাতা যখন রুক্মিণীকে ক্রোড়ের মধ্যে চিৎ করিয়া শোয়াইয়া তাহাকে দুগ্ধ পান করাইবার জন্য দুগ্ধের পাত্র মুখের নিকটে লইয়া যাইতেন, তখন রুক্মিণী হস্ত সঞ্চালন করিয়া সে দুগ্ধপাত্রটীকে অনবসরে ব্যর্থ করিয়া দিত (মাতার হাত হইতে ফেলাইয়া দিত) ॥২॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पानाय नीतं नवनीतकस्य
करं मुखेऽस्या दशनैर्दशन्त्याः ।
विलोक्य वक्त्रे शुचि हासशोचिः
ववर्ज मा तर्ज्जनमार्त्तिजन्यम् ॥३॥

---

अन्वयः—मा नवनीतकस्य पानाय मुखे नीतं करं दशनैः दशन्त्याः अस्याः वक्त्रे शुचि हासशोचिः विलोक्य आर्त्तिजन्यं तर्जनं ववर्ज ॥३॥

पानायेति । मा माता, नवनीतकस्य नवोद्धृतस्य, पानाय पान-सम्पादनाय, रुक्मिण्या मुखे नीतम् अर्पितम्, करं नवनीतयुक्तं हस्ताग्रम्, दशनैर्दन्तैः, दशन्त्या दंशं कुर्वत्याः, अस्या रुक्मिण्याः, वक्त्रे मुखे, शुचि शुभ्रम्, हासस्य शोचिः प्रभाम्, विलोक्य दृष्ट्वा, आर्त्तिजन्यं दशनपीड़या उत्पाद्यम्, तर्जनं भर्त्सनम्, ववर्ज तत्याज न चकारेत्यर्थः, हास-शोभादर्शनेनैव सन्तोषोदयादिति भावः ।

अत्रापि स्वभावोक्तिरलङ्कारः, तर्ज्जनवर्ज्जनं प्रति हासशोभादर्शनस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्चानयोरङ्गाङ्गिभावेन सङ्करः ; सोऽपि च छेकानुप्रासेन संसृज्यते ।

"नवनीतं नवोद्धृतम्" इत्यमरः । "मा च मातरि मानि च" इति शब्दरत्नावली । नवनीतकस्येति अल्पार्थे कप्रत्ययः ॥३॥

বাঙ্গালা—মাতা যখন ননী পান করাইবার জন্য রুক্মিণীর মুখের ভিতরে ননীযুক্ত হাতখানি প্রবেশ করাইয়া দিতেন ; তখন রুক্মিণী দন্তদ্বারা সেই হাতে দংশন করিত ; তাহাতে মাতা বেদনাও পাইতেন বটে, কিন্তু তৎকালে রুক্মিণীর মুখে নির্ম্মল হাস্যশোভা দেখিয়া আর ভর্ৎসনা করিতে পারিতেন না ॥৩॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

घटादि धात्रीनिहितं हितार्थं
यदा सकाशाज्जननी निनाय।
ययौ हसन्त्याः सहसा विशङ्कं
प्रसारिपाणिरुपमातुरङ्कम् ॥४॥
उत्सङ्गसुप्ता चुचुकं पिबन्ती
स्ववक्त्रचुम्बार्थमधःकृते सा।
चपेटपातैरपि तत्कपोले
धिनोति धन्यां जननीं स्म कन्या ॥५॥

अन्वयः—यदा जननी सकाशात् हितार्थं धात्रीनिहितं घटादि निनाय, (तदा सा) सहसा (सती) विशङ्कं हसन्त्याः प्रसारिपाणिः उपमातुः अङ्कं ययौ ॥४॥

घटेति। यदा जननी, रुक्मिण्या एव सकाशात्, हितार्थं स्वकौतुक-रूपहितसम्पादनार्थम्, धात्र्या निहितं स्थापितम्, घटादि वस्तु निनाय; तदा सा रुक्मिणी, हसेन हासेन सहेति सहसा सती, विशङ्कं निःशङ्कं यथा स्यात्तथा, हसन्त्याः कौतुकहासं कुर्वत्याः, प्रसारिणौ विस्तारवन्तौ पाणी हस्तौ यस्यास्तस्या उपमातुः अङ्कं क्रोड़ं ययौ।

अत्रापि पूर्ववत् स्वभावोक्तिरलङ्कारः, पूर्व्वार्द्धे छेकानुप्रासः, परार्द्धे तु अन्त्यानुप्रास इत्येतेषां संसृष्टिः।

हस इति "स्वनहसोर्व्वा" इति हसतेरल्। प्रसारीति मत्वर्थीय इन् ॥४॥

বাঙ্গালা—ধাত্রী কৌতুক করিবার জন্য রুক্মিণীর সম্মুখে ঘট বা অন্য কোন বস্তু রাখিত; তখন তাহার মাতা তাহার নিকট হইতে সে বস্তু লইয়া যাইতেন; সেই সময়ে ধাত্রী সহাস্য মুখে হাত বাড়াইয়া দিত। তখন রুক্মিণীও হাস্য করিয়া যাইয়া তাহার কোলে উঠিত ॥৪॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यदा च धात्री नहि सन्निधात्री
तदा सलीलं सलिलं निपात्य ।
मृदुन्यथाङ्गे मृदि तद्विमृद्य
करेण दक्षेण लिलेप दक्षा ॥६॥

---

**अन्वयः**—उत्सङ्गसुप्ता चुचुकं पिबन्ती सा कन्या स्ववक्त्रचुम्बार्थं अधःकृते तत्कपोले चपेटपातैरपि धन्यां जननीं धिनोति स्म ॥५॥

उत्सङ्गेति। उत्सङ्गे जनन्या एव क्रोड़े सुप्ता शयिता, चुचुकं स्तनाग्रं पिबन्ती, सा कन्या रुक्मिणी, स्ववक्त्रचुम्बार्थम्, अधःकृते नामिते, तस्या जनन्याः कपोले गण्डदेशे, चपेटपातैरपि, धन्यां तादृशानन्दानुभवात् पुण्यवतीम्, जननीम्, धिनोति प्रीणयति स्म ।

अत्र स्वभावोक्तिः, चपेटपातात् प्रीत्युत्पत्तेर्विषमालङ्कारश्च अनयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासेन संसृज्यते ।

"चुचुकन्तु कुचाग्रं स्यात्" इत्यमरः । धिनोतीति धिन्वधातोः "धिन्विकृन्व्योर्धि कृचे"ति धिरादेशः ॥५॥

**বাঙ্গালা**—রুক্মিণী জননীর ক্রোড়ে শয়ন করিয়া তাঁহার স্তন পান করিত, সে সময়ে জননী রুক্মিণীর মুখচুম্বন করিবার নিমিত্ত নিজের মুখ অবনত করিলে, রুক্মিণী তাঁহার গণ্ডদেশে চপেটপাত করিয়াও সে ধন্যা জননীর প্রীতি উৎপাদন করিত ॥৫॥

**अन्वयः**—अथ यदा च धात्री नहि सन्निधात्री, तदा दक्षा दक्षेण करेण सलीलं सलिलं निपात्य मृदि तत् विमृद्य ( च ) मृदुनि अङ्गे लिलेप च ॥६॥

यदेति। अथ यदा तु, धात्री नहि सन्निधात्री आसन्ना नासीत्; तदा, दक्षा बालक्रीड़ानिपुणा रुक्मिणी, दक्षेण क्रीड़ापटुना, करेण हस्तेन, सलीलं चापल्यलीलासहितं यथा स्यात्तथा सलिलं घटी-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्वे जानुनी जातु निधाय यान्ती
भुवस्तले हस्तसरोरुहे च ।
अतूतुषन्मामनुसञ्चरन्तीं
सुपेशलं कौशलमेव काले ॥७॥

प्रभृतिनिहितं जलम्, निपात्य भूमौ विकीर्य्य, मृदि मृत्तिकायाञ्च, तत् सलिलं विमृद्य, मृदूनि कोमले, अङ्गे उदरादौ लिलेप च ।

अत्रापि स्वभावोक्तिरलङ्कारश्छेकानुप्रासश्चेत्यनयोः संसृष्टिः ॥६॥

বাঙ্গালা—ধাত্রী যখন নিকটে থাকিত না, তখন বালখেলানিপুণা রুক্মিণী নিপুণ হস্তদ্বারা লীলার সহিত ঘটী বা অন্য কোন পাত্রের জল ঢালিয়া এবং তাহা মাটীতে ডলিয়া নিজের কোমলাঙ্গে লেপন করিত ॥৬॥

अन्वयः—जातु भुवस्तले द्वे जानुनी हस्तसरोरुहे च निधाय यान्ती (सा) अनुसञ्चरन्तीं मां अतूतुषत् । काले कौशलं सुपेशलमेव ॥७॥

द्वे इति । जातु कदाचित्, भुवस्तले भूतले, द्वे जानुनी हस्तसरोरुहे च पाणिपद्मयुगलञ्च, निधाय संस्थाप्य, यान्ती चलन्ती, सा रुक्मिणी, अनुसञ्चरन्तीं पश्चाच्चलन्तीम्, मां जननीम्, अतूतुषत् सन्तोषितवती । तथाहि काले यथासमये, कौशलं तत्तद्भावप्रकाशननैपुण्यम्, सुपेशलम् अतिमनोहरमेव ।

अत्र स्वभावोक्तिः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास-श्छेकानुप्रासश्च इत्येतेषां संसृष्टिः ।

"कदाचिज्जातु" इति "चारौ दक्षे च पेशल" इति चामरः ॥७॥

বাঙ্গালা—রুক্মিণী ভূতলে দুইটী জানু ও দুইটী পাণিপদ্ম সংস্থাপন করিয়া চলিতে থাকিয়া পশ্চাৎ পশ্চাৎ অনুসরণকারিণী জননীকে

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ स्वतः सम्भविना विनैव
शिक्षां क्रमेण ध्वनिना बभूव।
मनोज्ञवाणी शुचिशोभमाना
प्राणोपमाना निजसेवकानाम् ॥८॥

---

আনন্দিত করিত। কারণ, যথাকালে সেই সেই ভাব-প্রকাশন-নৈপুণ্য অত্যন্ত মনোহরই হইয়া থাকে ॥৭॥

अन्वयः—अथ शुचिशोभमाना (सा) शिक्षां विनैव क्रमेण स्वतः सम्भविना ध्वनिना मनोज्ञवाणी (सती) निजसेवकानां प्राणोपमाना बभूव ॥८॥

अथेति। अथ उक्तविधबालखेलानन्तरम्, शुचिना निर्म्मलेन वर्णेन शृङ्गारेण रसेन च शोभमाना सा रुक्मिणी, शिक्षां कस्यचिदुपदेशं विनैव, क्रमेण, स्वतः सम्भविना स्वभावत एवोत्पद्यमानेन, ध्वनिना वर्णात्मकशब्देन, अन्यत्र तु "वस्तु वालङ्कृतिर्वापि द्विधार्थः सम्भवी स्वतः" इत्यादिभिरालङ्कारिकोक्तेन स्वभावतः सम्भवपरेण "दृष्टिं हे ! प्रतिवेशिनि !" इत्यादिदर्पणोदाहरणप्रकारेण ध्वनिना व्यञ्जनावृत्तिप्रतिपाद्यार्थेन च, मनोज्ञा वाणी वाक्यं यस्याः सा, अन्यत्र मनोज्ञा चासौ वाणी चेति सा मनोज्ञा वाणी सती, निजसेवकानां स्वशुश्रूषाकारिणां जनन्यादीनाम्, काव्यालोचनापरायणानां जनानाञ्च; प्राणोपमाना प्राणतुल्यप्रिया बभूव।

अत्र छेकानुप्रासोऽलङ्कारः। स्वतः सम्भविना वस्तुध्वनिना "दृष्टिं हे ! प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि" इत्यादिसाहित्यदर्पणोदाहरणरूपा शृङ्गाररसयुक्ता मनोज्ञवाणी यथा काव्यज्ञानां प्राणोपमाना भवति तद्वदित्युपमालङ्कारो व्यज्यत इति वस्तुनालङ्कारध्वनिः।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ধন্যাভিরন্যাভিরনন্যভাভিঃ
কন্যাভিরাকীর্ণমলা মিলিত্বা ।
জালায়িতং ভূতলধূলিজালং
চিক্রীড় বালা চিকুরে কিরন্তী ॥৯॥

---

"শুচিগ্রীষ্মাগ্নিশৃঙ্গারেষ্বাষাঢ়ে শুদ্ধমন্ত্রিণি। জ্যৈষ্ঠে চ পুংসি ধবলে শুদ্ধেঽনুপহতে ত্রিষু॥" ইতি মেদিনী ॥৮॥

বাঙ্গালা—তাহার পর নির্ম্মলবর্ণশোভিতা রুক্মিণী শিক্ষাদান ব্যতীত ক্রমশঃ স্বভাবত উৎপন্নবর্ণাত্মক শব্দদ্বারা মনোহরবাক্য বলিতে থাকিয়া জননীপ্রভৃতির প্রাণতুল্য হইয়াছিল ॥৮॥

অন্বয়ঃ—ধন্যাভিঃ অনন্যভাভিঃ অন্যাভিঃ কন্যাভিঃ (সহ) মিলিত্বা বালা আকীর্ণমলা জালায়িতং ভূতলধূলিজালং চিকুরে কিরন্তী (সতী) চিক্রীড় ॥৯॥

ধন্যাভিরিতি। ধন্যাভিঃ রুক্মিণীসাহচর্য্যলাভাৎ পুণ্যবতীভিঃ, অনন্যা অভিন্নরূপা ভা কান্তির্যাসাং তাভিঃ, অন্যাভিঃ কন্যাভিঃ সহ, মিলিত্বা, বালা রুক্মিণী, আকীর্ণমলা প্রাগিতস্ততো বিক্ষিপ্তধূলিঃ, পরঞ্চ জালায়িতম্ ঊর্দ্ধ্বং বিক্ষেপসময়ে জালবদাচরিতম্, ভূতলস্য ধূলিজালম্, চিকুরে কেশে, কিরন্তী বিক্ষিপন্তী চ সতী চিক্রীড় খেলাঞ্চকার।

অত্র স্বভাবোক্তিরলঙ্কারঃ, জালায়িতমিতি ক্যঙ্গতোপমা চানযোরঙ্গাঙ্গিভাবেন সঙ্করঃ, সোঽপি চ বৃত্ত্যনুপ্রাসচ্ছেকানুপ্রাসাভ্যাং সংসৃজ্যতে ॥৯॥

বাঙ্গালা—রুক্মিণী নিজের ন্যায় সুন্দরী ও পুণ্যবতী অন্যান্য কন্যার সহিত মিলিত হইয়া প্রথমে ইতস্তত ধূলি নিক্ষেপ করিয়া পরে জালতুল্য ভূতলের ধূলি কেশকলাপে নিক্ষেপ করিতে থাকিয়া খেলা করিত ॥৯॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुभाजने भोजनवस्तु किञ्चित्
सञ्चित्य माता स्म यदीक्षतेऽन्यत्।
द्राक् पाणिना पल्लवितेन चक्रे
तत्प्रोञ्छनं वाञ्छितदर्शना सा ॥१०॥
जड़ं प्रदेहीति जनन्यमुष्याः
सम्प्रार्थनार्थावगमे समर्था।
अन्यस्तु किं वस्तु समिच्छतीति
बुद्धौ जड़ोऽभूदजड़ोऽपि बोद्धुम् ॥११॥

अन्वयः—माता सुभाजने किञ्चित् भोजनवस्तु सञ्चित्य यदि अन्यत् ईक्षते स्म, (तदा) वाञ्छितदर्शना सा पल्लवितेन पाणिना द्राक् तत्प्रोञ्छनं चक्रे ॥१०॥

सुभाजन इति। माता, सुभाजने सुन्दरस्वर्णादिपात्रे, किञ्चित् भोजनवस्तु दुग्धादिकम्, सञ्चित्य संस्थाप्य, यदि अन्यत् वस्तु, ईक्षते पश्यति स्म, तदा वाञ्छितं सर्वैरेवाभिलषितं दर्शनं यस्याः सा, सा रुक्मिणी, पल्लवितेन प्रसारितेन, पाणिना हस्तेन, द्राक् द्रुतम्, तस्य भोजनवस्तुनः प्रोञ्छनं तत्पात्रमेव भूतले पातयित्वा वा आलोड़नं चक्रे।

अत्र छेकानुप्रासेन संसृष्टः स्वभावोक्तिरलङ्कारः।

"स्राग्झटित्यञ्जसाह्नाय द्राङ् मंक्षु सपदि द्रुते" इत्यमरः ॥१०॥

বাঙ্গালা—রুক্মিণীর জননী দুগ্ধপ্রভৃতি কোন খাদ্য বস্তু সুন্দর পাত্রে রাখিয়া যদি অন্য দিকে দৃষ্টিপাত করিতেন, তবে সেই অভীষ্টদর্শনা রুক্মিণী প্রসারিত হস্তদ্বারা সেই বস্তুর আলোড়ন করিত ॥১০॥

अन्वयः—जननी जड़ं प्रदेहि इति अमुष्याः संप्रार्थनार्थावगमे समर्था अभूत्। अन्यस्तु बुद्धौ अजड़ः अपि (सन्) किं वस्तु समिच्छति इति बोद्धुं जड़ः अभूत् ॥११॥

जड़मिति। जननी, जड़ं प्रदेहि इति अमुष्याः रुक्मिण्याः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कन्यामथान्यां प्रति दानमेषा
तदिष्टमिष्टं ददती शिशिच्चे।
याहृक्स्वभावा हि परे भवेयुः
तद्‌योग्यखेलाय चलन्ति बालाः॥१२॥

संप्रार्थनार्थस्य याचनावाक्याभिधेयस्य विषयस्य अवगमं अवबोधं, समर्था अभूत्, रुक्मिण्या जलपिपासाकाले वचुशस्तात्पवाक्यप्रयोगादिति भावः। अन्यस्तु जनः, बुद्धौ बुद्धिविषये, अजड़ोऽपि अहीनोऽपि सन्, किं वस्तु, समिच्छति रुक्मिणी प्रार्थयते, इति बोद्धुम्, जड़ो हीनः अक्षमोऽभूत्।

अत्र अजड़स्य हेतुं विनापि जड़ीभवनात् किं विभावना, उत अजड़त्वरूपे कारणे सत्यपि बोधरूपकार्य्याभावात् विशेषोक्तिरित्यनयोः सन्देहसङ्करोऽलङ्कारः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः॥११॥

বাঙ্গালা—রুক্মিণী "জড়ং প্রদেহি" এইরূপ প্রার্থনা করিলে তাহার মাতাই তাহার অর্থ বুঝিতেন, কিন্তু অন্য বুদ্ধিমান্ লোকও রুক্মিণী কি চাহিতেছে, তাহা বুঝিতে অসমর্থ হইত॥১১॥

अन्वयः—अथ एषा अन्यां कन्यां प्रति तदिष्टं ददती इष्टं फलं शिशिच्चे। हि परे याहृक्स्वभावाः भवेयुः, तद्‌योग्यखेलाय बालाः चलन्ति॥१२॥

कन्यामिति। अथ एषा रुक्मिणी, अन्यां कन्यां प्रति, तस्याः कन्याया इष्टम् अभिलषितं वस्तु ददती सती, इष्टं स्वाभीष्टम्, दानं स्वभक्तजनेभ्यो वितरणं शिशिच्चे। हि यस्मात्, परे योग्यवयसि, याहृक्स्वभावा भवेयुः, तद्‌योग्यखेलाय तदुपयोगिक्रीड़नाय, बालाः शिशवः, चलन्ति उद्यच्छन्ति।

अत्र विशिष्ट... [illegible]

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

सा मातृदत्तं वसनं वसाना
विस्मेरवक्त्रे हसितावसाना।
तद्दर्शयामास सखीं कराभ्यां
पश्यज्जनात्यन्तसुखाकराभ्याम् ॥१३॥

---

लङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्छेकानुप्रास-श्चेत्येतेषां संसृष्टिः।

खेलनं खेल इति भावे घञ् ॥१२॥

বাঙ্গালা—রুক্মিণী অন্য কন্যাকে তাহার অভীষ্ট বস্তু দান করিয়া, পরবর্ত্তী কালে আপন ভক্তদিগকে তাহাদের অভীষ্ট বিতরণই যেন শিক্ষা করিত। কারণ, পরে যাদৃশস্বভাবসম্পন্ন হইবে, তদুপযোগী খেলা করিবার জন্যই বালকেরা উদ্যম করিয়া থাকে ॥১২॥

অন্বয়:—सा मातृदत्तं वसनं वसाना, विस्मेरवक्त्रे हसितावसाना (च सती) पश्यज्जनात्यन्तसुखाकराभ्यां कराभ्यां सखीं तत् दर्शयामास ॥१३॥

सेति। सा रुक्मिणी, मातृदत्तं वसनं वस्त्रम्, वसाना परिदधाना, विस्मेरं स्वभावत एव मन्दहास्ययुक्तं यद्वक्त्रं मुखं तत्र हसितम् आनन्दातिशयात् स्फुटहास्यम् अवसानं शेषीभूतं यस्याः सा, तादृशी च सती, पश्यतां जनानाम् अत्यन्तं यत् सुखं तत् कुरुत इति ताभ्याम्, कराभ्यां हस्ताभ्याम्, तद्वसनं दर्शयामास।

अत्रान्त्ययमकमलङ्कारः।

वसाना इति "वस् आच्छादने" इत्यस्मात् शानचि रूपम्। विस्मेरेति "दीपि-कम्पि—" इत्यादिना स्मयते रः। अवसानामिति अवपूर्वात् स्यतेर्नन्द्यादित्वाद्युः। सुखाकराभ्यामिति सुखशब्दात् "प्रियसुखाभ्या-मानुकूल्ये" इति डाच् प्रत्ययः ॥१३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

যুজ্যস্ব বালে ! ঘনবালুকানাং
পুঞ্জেঽত্র মঞ্জুং কথয়ামি তত্ত্বাম্ ।
কন্যাঽসকৌ কেনচনেত্থমুক্তা
মুক্ত্বাঽঙ্গকং তত্র হঠাদুদস্থাৎ ॥১৪॥
ইয়ং সপত্নী মম ভাবিনীতি
নীতিস্থিতা চেৎ পুরতোঽগ্রহীষ্যৎ ।
তদা তু তস্যা রসনাং বয়স্যা-
ভাবান্ন বাণী ক্বচিদাশ্রয়িষ্যৎ ॥১৫॥

বাঙ্গালা—রুক্মিণী মাতৃদত্ত বস্ত্র পরিধানপূর্ব্বক স্বভাবত সহাস্যমুখে বিশেষ হাস্য প্রকাশ করিয়া দর্শনকারী লোকদিগের অত্যন্ত আনন্দজনক হস্তযুগলদ্বারা সখীকে সেই বস্ত্রখানি দেখাইত ॥১৩॥

অন্বয়ঃ—বালে ! অত্র ঘনবালুকানাং পুঞ্জে যুজ্যস্ব, তৎ ত্বাং মঞ্জুং, কথয়ামি । কেনচন ইত্থম্ উক্তা অসকৌ কন্যা তত্র অঙ্গকং মুক্ত্বা হঠাৎ উদস্থাৎ ॥১৪॥

যুজ্যস্বেতি । হে বালে ! অত্র ঘনবালুকানাং পুঞ্জে রাশৌ, যুজ্যস্ব যুক্তা ভব পতেত্যর্থঃ, তৎ তদা, ত্বাম্, মঞ্জুং সুন্দরীং কথয়ামি । কেনচন কেনচিজ্জনেন, ইত্থম্ উক্তা কথিতা, অসকৌ কন্যা রুক্মিণী, তত্র ঘনবালুকানাং পুঞ্জে, অঙ্গকং ক্ষুদ্রমঙ্গং গাত্রম্, মুক্ত্বা নিক্ষিপ্য পাতয়িত্বেতি যাবৎ, হঠাৎ তৎক্ষণাদেব উদস্থাৎ উত্থিতবতী ।

অত্র স্বভাবোক্তিরলঙ্কারশ্ছেকানুপ্রাসেন সংসৃজ্যতে ॥১৪॥

বাঙ্গালা—"বালিকে ! তুমি এই ঘন বালিরাশির উপরে যদি প'ড়তে পার, তাহা হইলে তোমাকে সুন্দরী বলিব ।" কোন ব্যক্তি এইরূপ বলিলে, রুক্মিণী সেই বালিরাশির উপরে পড়িয়া আবার তৎক্ষণাৎ উঠিত ॥১৪॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रसाधिका भूरिपदस्य साधु
स्वकर्म्मसूत्रेण जगज्जनानाम्।
इयं यथार्था प्रकृतिः किलेति
तस्याः परः प्रत्यय एव जातः ॥१६॥

---

अन्वयः—इयं मम सपत्नी भाविनी इति चेत्, नीतिश्रिता वाणी पुरतः अग्रहीष्यत्, तदा तु वयस्याभावात् क्वचित् ( अपि ) तस्याः रसनां न आश्रयिष्यत् ॥१५॥

इयमिति। इयं रुक्मिणी, मम सपत्नी भाविनी, इति चेत्, नीतिं श्रिता नीतिश्रिता, प्राक्तनकर्म्मानुसारेण न्यूनाधिकभावेन जनवदनाधिष्ठितेत्यर्थः, वाणी सरस्वती, पुरतः अग्रतः, अग्रहीष्यत् अज्ञास्यत्; तदा तु वयस्याभावात् सखीभावात्, क्वचित् कदाचिदपि तस्या रुक्मिण्याः, रसनां जिह्वाम्, न आश्रयिष्यत्। क्रमेण रुक्मिण्या वागभिधानशक्तिराविर्बभूवेति भावः।

अत्र सरस्वत्यास्तद्रसनाश्रयसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिरलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥१५॥

বাঙ্গালা—'ইনি ( রুক্মিণী ) আমার সপত্নী হইবেন' ইহা যদি নীতিমার্গানুসারিণী সরস্বতী পূর্বে বুঝিতে পারিতেন, তাহা হইলে তিনি কখনও তাহার রসনা আশ্রয় করিতেন না ॥১৫॥

अन्वयः—इयं स्वकर्म्मसूत्रेण जगज्जनानां भूरिपदस्य साधु प्रसाधिका यथार्था प्रकृतिः, इति किल तस्याः परः प्रत्ययः एव जातः ॥१६॥

प्रसाधिकेति। इयं रुक्मिणी, स्वकर्म्म धर्म्माधर्म्मरूपं विहितनिषिद्धात्मकं स्वकीयं कार्य्यं तदेव सूत्रं सुखदुःखयोः कारणं तेन, तदनुसारेणेत्यर्थः, जगज्जनानां भूरिपदस्य राजत्वदीनत्वादिबहुतरावस्थायाः, साधु सम्यक्, प्रसाधिका निष्पादिका, यथार्था सत्यभूता,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

শ্রিয়া স্বয়া শ্রীরিয়মেব কন্যা
মায়িপ্রিয়েণেত্থমমন্বমায়ি।
তথাপি চিত্রং ন বুধোঽপ্যবোধি
সাধ্যাবিশেষাখ্যবিশেষদোষম্ ॥১৭॥

প্রকৃতিঃ সত্ত্বরজস্তমোগুণময়ী আদিকারণং মহালক্ষ্মীরিতি যাবত্, ইতি হেতোঃ, কিল সম্ভাবনায়াম্, তস্যা রুক্মিণ্যা উপরি, পর উত্তমঃ, প্রত্যয়ো লোকানাং বিশ্বাস এব জাতঃ, ক্রমশস্তদ্ভাবদর্শনাত্ মুনিজনবচন-শ্রবণাচ্চেতি ভাবঃ। অন্যত্র তু স্বকর্ম্মসূত্রেণ "কর্ত্তুরীপ্সিততমং কর্ম্ম" ইত্যং কর্ম্মবিষয়কসূত্রগ্রন্থেন, ভূরিপদস্য ঘটং পটমিত্যাদিপ্রচুরপ্রয়োগস্য, সাধু সম্যক্, প্রসাধিকা নিষ্পাদিকা, যথার্থা প্রকৃতিঃ ঘটপটাদিরূপো মূলীভূতঃ শব্দঃ, ইতি হেতোঃ, তস্যাঃ প্রকৃতেঃ, পর উত্তরঃ, প্রত্যয় অমাদি-বিভক্তিরেব জাতঃ।

অত্র এতত্পদাবলীরূপেণ বস্তুনা দ্বিতীয়ার্থরূপং বস্তু ব্যজ্যত ইতি বস্তুনা বস্তুর্ধ্বনিঃ।

"দূরানাত্মোত্তমাঃ পরাঃ" ইতি "প্রত্যয়োঽধীনশপথজ্ঞানবিশ্বাসহেতুষু" ইতি চামরঃ ॥১৬॥

বাঙ্গালা—মহালক্ষ্মীরূপা এই রুক্মিণী জগতের লোকের আপন আপন কর্ম্ম অনুসারে সমীচীনভাবে রাজত্ব ও দীনত্বপ্রভৃতি বহুতর পদ সম্পাদন করেন; সুতরাং ইনি যথার্থ প্রকৃতি। এইভাবে তাঁহার উপরে লোকের বিশ্বাস জন্মিয়াছিল ॥১৬॥

অন্বয়ঃ—ইয়ং স্বয়া শ্রিয়া শ্রীঃ এব, ইত্থং মায়িপ্রিয়েণ অন্বমায়ি। তথাপি বুধঃ অপি (যত্) সাধ্যাবিশেষাখ্যবিশেষদোষং ন অবোধি, (তত্) চিত্রং ॥১৭॥

শ্রিয়েতি। ইয়ং রুক্মিণী, স্বয়া স্বকীয়য়া, শ্রিয়া লক্ষ্মীরূপেণ

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रियागुणद्रव्यवती समस्त-
लोकेन या खेलति सर्वदैव।
तथैव कौतूहलवान् समस्त-
लोकस्तदानीं खलु खेलति स्म ॥१८॥

---

कान्त्या च, श्रीः लक्ष्मीरिव, ईदृशम्, माया कृपा अस्यास्तीति मायी, स चासौ प्रियश्चेति मायिप्रियस्तेन, रुक्मिणीं प्रति दयालुना प्रियजनेनेत्यर्थः, अन्वमायि अनुमितम्। तथापि बुधो विद्वान् जनोऽपि, यत् साध्याविशेषाख्यविशेषदोषं "पर्व्वतो वह्निमान् वह्नेः" इतिवत् इयं रुक्मिणी श्रीः श्रीमत्त्वात् इति प्रयोगे हेतुसाध्ययोरभेदाख्यरूपं दोषं न अबोधि नावगच्छति स्म। तदेव चित्रमाश्चर्य्यम्।

अत्र श्रियेति हेतुबोधकश्रीशब्दप्रतिपाद्यलक्ष्मीकान्त्योर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिरलङ्कारः, बुधत्वरूपकारणे सत्यपि बोधरूपतत्फलाभावाद्विशेषोक्तिश्छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः।

"श्रीर्लक्ष्मीर्वेशसम्पत्सु भारतीशोभयोरपि" इति त्रिकाण्डशेषः। "स्यान्माया शाम्बरी धियोः। माया दम्भे कृपायाञ्च" इति विश्वः।

अन्वमायीति अनुपूर्व्वस्य माधातोरद्यतन्याः प्रथमपुरुषैकवचने रूपम् ॥१७॥

বাঙ্গালা—এই কন্যাটী আপন শ্রীর গুণে শ্রী-ই বটে, এইরূপে দয়ালু প্রিয়জন অনুমান করিত, তথাপি বুদ্ধিমান্ লোকও যে সাধ্যাবিশেষনামক বিশেষ দোষ বুঝিতে পারিতেন না, তাহাই আশ্চর্য্য ॥১৭॥

अन्वयः—क्रियागुणद्रव्यवती या सर्व्वदैव समस्तलोकेन खेलति, कौतूहलवान् समस्तलोकः तदानीं तथैव खलु खेलति स्म ॥१८॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कलङ्कहीना हरिणाङ्करेखा
सुवर्णवर्णा सवितुः सवर्णा।
पुराणनिर्णीततनुर्नवीना
सा नन्दिनी बाल्यसुखैरनन्दत् ॥१९॥

---

क्रियेति। क्रिया लोकगृहगमननापसरणादिरूपा गुणाः दयादयः द्रव्याणि धनानि भूषणादीनि च अस्याः सन्तीति सा तथोक्ता, या लक्ष्मीरूपा रुक्मिणी, सर्वदैव समस्तलोकेन, खेलति गमनापसरण-दयाधनदानादिना क्रीड़ति, कौतूहलवान् तस्या एव क्रीड़ादिदर्शन-कौतूकवान्, समस्तलोकः तदानीम्, तयैव बालिकया रुक्मिण्या, खलु खेलति स्म।

अत्र पूर्व्वार्द्धोक्तिभङ्ग्या रुक्मिण्या गम्यलक्ष्मीरूपत्वाभिधानात् पर्य्यायोक्तमलङ्कारश्छेकानुप्रासेन संसृज्यते।

"द्रव्यं वित्तं स्वापतेयं रिक्थमिकथं धनं वसु" इत्यमरः। क्रिया-गुणवत्त्वं समवायेन, द्रव्यवत्त्वन्तु जनकतया प्रतिपत्तव्यम् ॥१८॥

বাঙ্গালা—ক্রিয়া, গুণ ও দ্রব্যযুক্তা লক্ষ্মীরূপা যে রুক্মিণী, সর্ব্বদাই সমস্ত লোকদ্বারা খেলা করিয়া থাকেন, তাঁহাদ্বারাই তৎকালে কৌতুকী সমস্ত লোক খেলা করিত ॥১৮॥

अन्वयः—सान्वय एव श्लोकः ॥१९॥

कलङ्केति। कलङ्को लाञ्छनम् अपवादश्च, तेन हीना, हरिणाङ्क-रेखा चन्द्ररेखास्वरूपा; सुवर्णवर्णा, सवितुः सूर्य्यस्य, सवर्णा समाना-रूपवर्णा तदाख्यप्रियतमास्वरूपा; पुराणैः श्रीमद्भागवतादिभिः निर्णीता लक्ष्मीरूपतया निरूपिता तनुः शरीरं यस्याः सा, अथ च नवीना रुक्मिणीरूपेण नवावतीर्णा; सा नन्दिनी भीष्मककन्या,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रुक्माादिभिः पञ्चभिरञ्चितश्रीः
सहोदरैः सा सह राजकन्या।
अङ्गैर्यथा भूपतिनीतिविद्या
विद्योतते स्माथ समस्तहृद्या ॥२०॥

---

बाल्यसुखैः शैशवोचितसुखजनकव्यापारैः क्रीड़ादिभिः अनन्दत् आनन्दमन्वभवत्।

अत्र पूर्व्वार्द्धे अधिकारूढ़वैशिष्ट्यरूपकद्वयम्, तृतीयपादे विरोधाभासश्छेकानुप्रासो वृत्त्यनुप्रासश्च इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः।

"कलङ्कोऽङ्कापवादयोः" इत्यमरः ॥१९॥

বাঙ্গালা—কলঙ্কবিহীন চন্দ্রলেখা ও স্বর্ণবর্ণা সূর্য্যের সবর্ণাস্বরূপা এবং পুরাণশাস্ত্রনিরূপিতদেহা অথ চ নবীনা সেই ভীষ্মকরাজকন্যা শৈশবোচিত ক্রীড়াসুখে আনন্দানুভব করিতে লাগিল ॥১৯॥

अन्वयः—अथ अञ्चितश्रीः समस्तहृद्या (च) सा राजकन्या रुक्म्यादिभिः पञ्चभिः सहोदरैः सह, भूपतिनीतिविद्या यथा अङ्गैः (तथा) विद्योतते स्म ॥२०॥

रुक्म्यादिभिरिति। अथ बालखेलानन्तरम्, अञ्चिता क्रमेणाधिकं लब्धा श्रीः कान्तिर्यया सा, समस्तानां सर्व्वेषामेव लोकानां हृद्या सौन्दर्य्येण स्वभावेन च प्रिया, सा राजकन्या रुक्मिणी, रुक्म्यादिभिः पञ्चभिः सहोदरैः सह, भूपतीनां राज्ञां नीतिविद्या यथा अङ्गैः सहायादिभिः पञ्चभिरवयवैः विद्योतते तथा विद्योतते स्म विरराज।

अत्र श्रौतोपमालङ्कारो वृत्त्यनुप्रासेन छेकानुप्रासेन च संसृज्यते।

पञ्चाङ्गान्याह कामन्दकः—

"सहायाः साधनोपाया विभागो देशकालयोः।
विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते॥" ॥२०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रुक्म्यादयः पञ्च सहोदरास्च
तां रुक्मिणीं सारतरां स्वसारम् ।
स्कन्धा यथा बुद्धनिबद्धविद्यां
तथाऽनुजग्मुः प्रणयात् सदैव ॥२१॥

বাঙ্গালা—রাজনীতি যেমন সহায়প্রভৃতি পঞ্চাঙ্গের সহিত মিলিত হইয়া শোভা পায়, সেইরূপ ক্রমবর্দ্ধমানকান্তি রাজকন্যা রুক্মিণী রুক্মিপ্রভৃতি পাঁচটী সহোদরের সহিত মিলিত হইয়া শোভা পাইত ॥২০॥

अन्वयः—रुक्म्यादयः पञ्च सहोदराश्च, तां, सारतरां स्वसारं रुक्मिणीं स्कन्धाः यथा बुद्धनिबद्धविद्यां तथा प्रणयात् सदैव अनुजग्मुः ॥२१॥

रुक्म्यादय इति। रुक्म्यादयः पञ्च सहोदराश्च, ताम्, सारतराम् अतीवोत्तमाम्, स्वसारं भगिनीं रुक्मिणीम्, स्कन्धा विज्ञानवेदनासंज्ञा-संस्काररूपात्मका पञ्चावयवाः, यथा, बुद्धेन निबद्धा प्रवर्त्तिता या विद्या ताम्, तथा प्रणयात् स्नेहात् सम्बन्धादेश्च, सदैव अनुजग्मुः।

अत्र श्रौतोपमालङ्कारश्छेकानुप्रासेन संसृज्यते।

भीष्मकस्य पञ्च पुत्रानाह श्रीमद्भागवते—

"राजासीद्भीष्मको नाम विदर्भाधिपतिर्महान् ।
तस्य पञ्चाभवन् पुत्राः कन्यैका रुचिरानना ॥
रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तरः ।
रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥"

पञ्च स्कन्धा यथा सर्वदर्शनसंग्रहे—

"दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्त्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥"

एषां विस्तरस्तु तत्रैवानुसन्धेयः ॥२१॥

বাঙ্গালা—বিজ্ঞানপ্রভৃতি পঞ্চস্কন্ধ যেমন বৌদ্ধবিদ্যার অনুসরণ

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पैशुन्यशून्यं कृतपुण्यजन्यं
नैपुण्यपूर्णं चरितं सुतानाम् ।
स लोकनाथो ववृधे विलोक्य
चन्द्रोदयोत्ताल इवोर्म्मिमालः ॥२२॥
ततः शिशून् शिक्षयितुं समग्रान्
समग्रवर्त्ती क्षितिशिक्षितानाम् ।
शास्त्राण्यभीष्टान्यर्यतिष्ट शिष्ट-
प्रधानभूतः किल भूतलेन्द्रः ॥२३॥

---

করে, সেইরূপ রুক্মিপ্রভৃতি পঞ্চ সহোদরও সর্ব্বদাই স্নেহবশতঃ উত্তমা-ভগিনী রুক্মিণীর অনুসরণ করিতেন ॥২১॥

अन्वयः—सः लोकनाथः पैशुन्यशून्यं कृतपुण्यजन्यं नैपुण्यपूर्णं ( च ) सुतानां चरितं विलोक्य चन्द्रोदयोत्तालः ऊर्म्मिमालः इव ववृधे ॥२२॥

पैशुन्य ति । स लोकनाथो राजा भीष्मकः, पैशुन्यशून्यं खलता-रहितम्, कृतेन पुण्येन जन्यं जन्म यस्य तत् प्राक्तनपुण्यजनितमित्यर्थः, नैपुण्येन सर्वविषयकौशलेन पूर्णञ्च, सुताश्च सुता चेति सुताः एकशेषात् पुत्रकन्यास्तासां सुतानाम्, चरितं व्यवहृतं विलोक्य, चन्द्रोदये उत्ताल उद्वेलितः, ऊर्म्मिमालः समुद्र इव, ववृधे आनन्देन स्फीतपूरागमेन वृद्धिं प्राप्तश्च बभूव ।

अत्रापि श्रौतीपमालङ्कारो वृत्त्यनुप्रास-छेकानुप्रासान्त्यानुप्रासैः संसृज्यते ॥२२॥

বাঙ্গালা—পুত্র কয়টী ও কন্যাটীর খলতাশূন্য, প্রাক্তনপুণ্যজনিত এবং সমস্ত বিষয়ে নৈপুণ্যপূর্ণ চরিত্র দেখিয়া ভীষ্মকরাজা চন্দ্রোদয়ে উদ্বেলিত সমুদ্রের ন্যায় আনন্দে স্ফীত হইতেন ॥২২॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

স দক্ষিণাত্মা দিশি দক্ষিণস্যাং
স্বস্যাঃ পুরো নব্যপুরঞ্চ কাঞ্চিৎ ।
মনোঽনুরূপাং প্রকৃতাভিরূপাং
বিনির্ম্মমে মর্ম্মবিদঃ পুরীণাম্ ॥২৪॥

অন্বয়ঃ—ততঃ ক্ষিতিশিক্ষিতানাং সমগ্রবর্ত্তী শিষ্টপ্রধানভূতঃ (চ) ভূতলেন্দ্রঃ সমগ্রান্ শিশূন্ অভীষ্টানি শাস্ত্রাণি কিল শিক্ষয়িতুং অযতিষ্ট ॥২৩॥

তত ইতি। ততস্তদনন্তরম্, ক্ষিতৌ যে শিক্ষিতাস্তেষাং ক্ষিতিশিক্ষিতানাম্, সম্যগগ্রবর্ত্তীতি সমগ্রবর্ত্তী, শিষ্টেষু শাস্ত্রনিয়মিতেষু জনেষু প্রধানভূতশ্চ, ভূতলেন্দ্রো রাজা ভীষ্মকঃ, সমগ্রান্ শিশূন্, অভীষ্টানি শাস্ত্রাণি কিল শিক্ষয়িতুম্ অযতিষ্ট যত্নমকার্ষীৎ।

অত্র ছেকানুপ্রাসবৃত্ত্যনুপ্রাসয়োঃ সংসৃষ্টিরলঙ্কারঃ ॥২৩॥

বাঙ্গালা—তাহার পর পৃথিবীর শিক্ষিতগণের অগ্রবর্ত্তী ও শিষ্টলোকদিগের মধ্যে প্রধান ভীষ্মকরাজা শিশুসন্তানদিগকে অভীষ্ট শাস্ত্র শিক্ষা দিবার জন্য যত্ন করিলেন ॥২৩॥

অন্বয়ঃ—দক্ষিণাত্মা পুরীণাং মর্ম্মবিদঃ (চ) সঃ স্বস্যাঃ পুরঃ দক্ষিণস্যাং দিশি মনোঽনুরূপাং প্রকৃতাভিরূপাঞ্চ কাঞ্চিৎ নব্যপুরং বিনির্ম্মমে ॥২৪॥

অত্র রাজপুত্রাণাং শিক্ষোদ্যোগমাহ স ইতি। দক্ষিণাত্মা উদারচেতাঃ, পুরীণাম্, মর্ম্মবিদস্তত্ত্বজ্ঞশ্চ, স ভীষ্মকো রাজা, স্বস্যাঃ পুরঃ, দক্ষিণস্যাং দিশি, মনোঽনুরূপাম্, প্রকৃতাভিরূপাং স্বভাবত এব মনোহরাম্, কাঞ্চিৎ নব্যপুরং বিনির্ম্মমে।

অত্র ছেকানুপ্রাসোঽলঙ্কারঃ।

মর্ম্মাণি বেত্তীতি মর্ম্মবিদঃ নাম্যুপধত্বাৎ কঃ ॥২৪॥

বাঙ্গালা—উদারচেতা ও রাজধানীর মর্ম্মজ্ঞ ভীষ্মকরাজা আপন

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्यासमारम्भदिनेऽथ तेषाम्
एकेऽप्यनेके गुरवः समीयुः।
एकोऽभवत्तत्र च वासरेशः
बभूवुरध्यापनकारिणोऽन्ये ॥२५॥

ভবন হইতে দক্ষিণদিকে অভিপ্রায়ের অনুরূপ ও স্বভাবসুন্দর একটী নূতন পুরী নির্ম্মাণ করিলেন ॥২৪॥

अन्वयः—अथ तेषां विद्यासमारम्भदिने एके अपि अनेके गुरवः समीयुः। तत्र च एकः वासरेशः अभवत्, अन्ये च अध्यापनकारिणः बभूवुः ॥२५॥

अथ कुमाराणां शिक्षोपक्रमं सूचयन्नाह विद्येति। अथ विद्यापुरी-निर्म्माणानन्तरम्, तेषां कुमाराणाम्, विद्यासमारम्भदिने, एकेऽपि गुरुत्वेनैकजातीया अपि, एके श्रेष्ठा अपि इति वा, अनेके अश्रेष्ठा इति विरोधः, अनेके बहव इति तत्समाधानम्, गुरवः, समीयुः राजयत्नेन समागताः। तत्र तेषु गुरुषु च मध्ये, एको गुरुः बृहस्पतिः, वासरेशः तद्दिनाधिपतिः अभवत् विद्यारम्भे बृहस्पतिवारस्यैव श्रेष्ठत्वादिति भावः। तथा च ज्योतिषम्—"विद्यारम्भे गुरुः श्रेष्ठो मध्यमौ भृगुभास्करौ। मरणं शनिभौमाभ्यामविद्या बुधसोमयोः॥" अन्ये च गुरवः अध्यापनकारिणः बभूवुः।

अत्र एकेऽप्यनेक इति श्लेषेण विरोधसमाधानाद्विरोधाभासोऽलङ्कारः। "गुरू गीष्पतिपित्राद्यौ" इत्यमरः ॥२५॥

বাঙ্গালা—বিদ্যাভবন নির্ম্মাণের পরে কুমারগণের বিদ্যারম্ভদিনে শ্রেষ্ঠ অনেক গুরু আসিয়াছিলেন। তাঁহাদের মধ্যে এক গুরু (বৃহস্পতি) ছিলেন সেই দিনের অধিপতি। (অর্থাৎ সেই দিনটী বৃহস্পতিবার ছিল,) আর অন্য গুরুরা ছিলেন অধ্যাপনকারী ॥২৫॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चातुर्य्यगाम्भीर्य्यगुणे धुरीणाः
शिक्षापरीक्षाधिगमेऽनवीनाः ।
दिवस्पतेः प्रत्युपदेशदक्षम्
अध्यापका गीष्पतिमन्वकार्षुः ॥२६॥
स्वरानुदात्तप्रभृतीन् प्रकाश्य
ध्यायन्नुपाध्यायवरः स्फुटार्थम् ।
प्रभातकाले किल तान् कुमारान्
अध्यापिपद्वेदगणं गुणाढ्यान् ॥२७॥

---

अन्वयः—चातुर्य्यगाम्भीर्य्यगुणे धुरीणाः शिक्षापरीक्षाधिगमे अनवीनाः अध्यापकाः दिवस्पतेः प्रत्युपदेशदक्षं गीष्पतिं अन्वकार्षुः ॥२६॥

चातुर्य्येति । चातुर्य्यं शिक्षादाननैपुण्यं गाम्भीर्य्यञ्च विद्यास्वगाधत्वं तदुभयमेव गुणस्तस्मिन्, धुरीणा धुरन्धराः, तथा शिक्षापरीक्षाया अधिगमे ग्रहणे, अनवीनाः अनव्या असक्तत्तद्ग्रहणात् प्राचीना इत्यर्थः अध्यापकाः, दिवस्पतेः इन्द्रस्य, प्रत्युपदेशे शिक्षादाने दक्षं निपुणम्, गीष्पतिं वृहस्पतिम्, अन्वकार्षुः तदनुरूपप्रत्युपदेशदानादनुकृतवन्तः ।

अत्र आर्थीपमालङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ॥२६॥

বাঙ্গালা—শিক্ষাদাননৈপুণ্য ও বিদ্যার গভীরতায় ধুরন্ধর এবং শিক্ষার পরীক্ষাগ্রহণে বিশেষ অভ্যস্ত সেই অধ্যাপকগণ (কুমারগণের শিক্ষাদানকালে) ইন্দ্রের শিক্ষাদানে দক্ষ বৃহস্পতির অনুকরণ করিতেন ॥২৬॥

अन्वयः—उपाध्यायवरः स्फुटार्थं ध्यायन् उदात्तप्रभृतीन् स्वरान् प्रकाश्य प्रभातकाले गुणाढ्यान् तान् कुमारान् किल वेदगणं अध्यापिपत् ॥२७॥

अथ कुमाराणां वेदाध्यापनमाह स्वरानिति । उपाध्यायेषु वरो

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सप्रत्ययं सप्रकृतिप्रयोगं
विभक्तियुक्तं पुरुषान्वितञ्च।
गुणाश्रितं वृद्धियुतञ्च पेठुः
सांख्योपमं व्याकरणं कुमाराः ॥२८॥

---

वेदाध्यापकत्वादेव प्रधानः, स्फुटार्थं वेदवाक्यानां स्पष्टमभिधेयम्, ध्यायन् चिन्तयन् चिन्तया मनसि प्रत्युपस्थापयन्नित्यर्थः, उदात्तप्रभृतीन् उदात्तानुदात्तसमाहाररूपान्, स्वरान् प्रकाश्य, प्रभातकाले दिवसप्रथम-भागे, "प्रथमे च तथा भागे वेदाभ्यासो विधीयते" इति दक्षस्मृतेः, गुणा-ढ्यान् बुद्धिमेधादिगुणसम्पन्नान्, तान् कुमारान् किल, वेदानां गणं समूहम् अध्यापिपत् अध्यापितवान्।

अत्र छेकानुप्रासोऽलङ्कारः ॥२७॥

বাঙ্গালা—প্রধান অধ্যাপকমহাশয় বেদবাক্যের স্পষ্ট অর্থ চিন্তা করিতে থাকিয়া, উদাত্তপ্রভৃতি স্বর প্রকাশ করিয়া, প্রভাতকালে বুদ্ধি মেধাদিগুণসম্পন্ন সেই কুমারগণকে বেদ পড়াইতেন ॥২৭॥

अन्वयः—कुमाराः सप्रत्ययं सप्रकृतिप्रयोगं विभक्तियुक्तं पुरुषान्वितञ्च गुणाश्रितं वृद्धियुतञ्च सांख्योपमं व्याकरणं पेठुः ॥२८॥

कुमाराणां सांख्यवद्व्याकरणशिक्षामाह—सप्रत्ययमिति। कुमाराः, प्रत्ययेन सुप्तिङादिना विविक्तज्ञानेन च सहेति सप्रत्ययम्, प्रकृतेः नाम-धातुप्रभृतेः सत्त्वरजस्तमसां साम्यावस्थारूपस्य प्रधानस्य च प्रयोगेण उल्लेखेन सहेति सप्रकृतिप्रयोगम्, विभक्तिभिः सुप्तिङ्भिः विभक्त्या प्रकृतिमहदादितत्त्वविभागेन च युक्तम्, पुरुषैः नामयुष्मदस्मद्योगे प्रयुज्य-मानैः प्रथममध्यमोत्तमरूपैः, पुरुषैः नित्यशुद्धबुद्धमुक्तस्वभावैश्चिन्मयैः अन्वितञ्च, गुणैः अरादिभिः सत्त्वरजस्तमोभिश्च आश्रितम्, बुद्धिभिः



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

অদ্বৈতমানন্দমুদাহরন্তীং
নিবেদয়ন্তীং রসমুখ্যতাঞ্চ ।
শিশিক্ষিরে বিভ্রমবৎপ্রপঞ্চাং
বেদান্তবিদ্যামিব কাব্যবিদ্যাম্ ॥২৯॥

আরাদিভিঃ অণিমাদ্যষ্টৈশ্বর্য্যৈশ্চ যুতঞ্চ, সাংখ্যং দর্শনমিব উপমা যস্য তৎ, ব্যাকরণম্, পেঠুঃ অধীতবন্তঃ ।

অত্র শ্লেষানুপ্রাণিতা আর্থী পূর্ণোপমালঙ্কারঃ ।

"প্রতীয়তে যেনার্থঃ স প্রত্যয় ইতি রূঢ়িঃ ।" "প্রত্যয়াৎ প্রথমং ক্রিয়ত ইতি প্রকৃতিঃ" ইতি কাতন্ত্রবৃত্তৌ দুর্গসিংহঃ । "প্রত্যয়োঽধীনশপথজ্ঞান-বিশ্বাসহেতুষু" ইতি "প্রধানং প্রকৃতিঃ স্ত্রিয়াম্" ইতি চামরঃ ।

"সত্ত্বরজস্তমসাং সাম্যাবস্থা প্রকৃতিঃ, প্রকৃতের্মহান্ মহতোঽহঙ্কারঃ অহঙ্কারাৎ পঞ্চতন্মাত্রাণ্যুভয়মিন্দ্রিয়ম্, স্থূলভূতানি পুরুষ ইতি পঞ্চবিংশতির্গণাঃ" "ন নিত্যশুদ্ধবুদ্ধমুক্তস্বভাবস্য তদ্‌যোগস্তদ্‌যোগাদৃতে" ইতি সাংখ্যসূত্রদ্বয়ম্, "···পুরুষবহুত্বং সিদ্ধম্···" ইতি সাংখ্যকারিকা । "সুপো বিভক্তয়স্তিঙশ্চ" "অৎ পূর্ব্বং দ্বে সন্ধ্যক্ষরে চ গুণাঃ" "আৎ উত্তরে চ বৃদ্ধিঃ" ইতি ব্যাকরণসূত্রাণি । অণিমাদ্যষ্টৈশ্বর্য্যাণি চ সাংখ্যতত্ত্ব-কৌমুদ্যাদাবনুসন্ধেয়ানি ॥২৮॥

বাঙ্গালা—বিবেকজ্ঞান, প্রকৃতি, তত্ত্ববিভাগ, পুরুষ, সত্ত্ব, রজ ও তমোগুণ এবং অণিমাদি অষ্ট ঐশ্বর্য্যসমন্বিত সাংখ্যদর্শনের ন্যায় প্রত্যয়, প্রকৃতি, বিভক্তি, পুরুষ, গুণ ও বৃদ্ধিযুক্ত ব্যাকরণ শাস্ত্র রাজকুমারেরা অধ্যয়ন করিয়াছিলেন ॥২৮॥

অন্বয়ঃ—অদ্বৈতমানন্দং উদাহরন্তীং রসমুখ্যতাঞ্চ নিবেদয়ন্তীং বিভ্রমবৎ প্রপঞ্চাং বেদান্তবিদ্যামিব কাব্যবিদ্যাং শিশিক্ষিরে ( কুমারাঃ ) ॥২৯॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हितोपदेशे सततप्रवृत्तां
पानाशनादौ विहितव्यवस्थाम्।
धर्म्मञ्च नीतिञ्च निदर्शयन्तीम्
अम्बामिवामी जगृहुः स्मृतिञ्च ॥३०॥

तेषां वेदान्तविद्याया इव काव्यविद्यायाः शिक्षामाह—अद्वैतमिति। अत्र कुमारा इत्यनुवर्त्तते। अद्वैतम् असाधारणम्, आनन्दम् आमोदम्, उदाहरन्तीं रसवत्तया प्रकाशयन्तीम्, अन्यत्र अद्वैतं सजातीय-विजातीयद्वितीयरहितम्, आनन्दं ब्रह्म, उदाहरन्तीं वदन्तीम्, रसस्य "सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः" इति लक्षणलक्षितस्य, अन्यत्र ब्रह्मणः, मुख्यतां प्राधान्यञ्च, निवेदयन्तीं बोधयन्तीम्, विभ्रमवान् शृङ्गारादिमत्तया विलासवान्, प्रपञ्चो विस्तारो यस्यास्ताम्, अन्यत्र विभ्रम-वान् विषयतया विशेषेण भ्रमवान् भ्रान्तिविषय इत्यर्थः प्रपञ्चो जगत् यस्यां ताम्, वेदान्तविद्यामिव काव्यविद्याम्, शिशिक्षिरे अधिगतवन्तः।

अत्र श्लेषानुप्राणिता श्रौती पूर्णोपमालङ्कारः।

"शान्तं शिवमद्वैतं तुरीयं मन्यन्ते स आत्मा स विज्ञेयः" "सत्यं ज्ञानमानन्दं ब्रह्म" "रसो वै सः" इति श्रुतयः। "वेदान्तो नाम उपनिषत्प्रमाणं तदुपकारीणि च शारीरकसूत्रादीनि" इति वेदान्तसारः ॥२९॥

বাঙ্গালা—অদ্বিতীয় ব্রহ্মপ্রকাশক, ব্রহ্মের প্রাধান্যবোধক এবং জগতের ভ্রান্তিবিষয়তাজ্ঞাপক বেদান্তশাস্ত্রের ন্যায় অসাধারণ আনন্দ-প্রকাশক, রসের শ্রেষ্ঠতাবোধক ও শৃঙ্গারাদিবিলাসযুক্ত কাব্যশাস্ত্র রাজকুমারেরা শিক্ষা করিয়াছিলেন ॥২৯॥

अन्वयः—अमी हितोपदेशे सततप्रवृत्तां पानाशनादौ विहितव्यवस्थां धर्म्मञ्च नीतिञ्च निदर्शयन्तीं अम्बां इव स्मृतिञ्च जगृहुः ॥३०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अङ्गानि तेऽन्यानि च दर्शनानि
नैपुण्यवन्तः समधीतवन्तः ।
प्राप्य स्वतन्त्रा न महामनीषां
मनीषितायां विरमन्त्यधीतेः ॥२१॥

কুমারাণাং স্মৃতিশাস্ত্রাধিগমমাহ হিতোপদেশ ইতি । অমী কুমারাঃ, হিতোপদেশে সততপ্রবৃত্তাম্, নিয়োজ্যস্নেহাৎ পুত্রবাৎসল্যাচ্চেতি ভাবঃ, পানাশনাদৌ পানভোজনাদিকার্য্যে বিহিতা কৃতা ব্যবস্থা নির্দ্দেশো যয়া তাম্, তথা ধর্ম্মস্য নীতিশ্চ নিদর্শয়ন্তীং জ্ঞাপয়ন্তীম্, অম্বাং মাতরমিব স্মৃতিং ধর্ম্মসংহিতাঞ্চ, জগৃহুঃ অধিগতবন্তঃ ।

অত্র অর্থশ্লেষানুপ্রাণিতা শ্রৌতী পূর্ণোপমালঙ্কারঃ ॥৩০॥

বাঙ্গালা—সর্ব্বদা হিতোপদেশে প্রবৃত্তা, পান ও ভোজনাদির ব্যবস্থাকারিণী এবং ধর্ম্ম ও নীতির শিক্ষয়িত্রী জননীর ন্যায় স্মৃতিও তাঁহারা লাভ করিয়াছিলেন ॥৩০॥

অন্বয়ঃ—নৈপুণ্যবন্তঃ তে অঙ্গানি অন্যানি দর্শনানি চ সমধীতবন্তঃ । স্বতন্ত্রাঃ মহামনীষাং প্রাপ্য মনীষিতায়াঃ অধীতেঃ ন বিরমন্তি ॥২১॥

অঙ্গানীতি । নৈপুণ্যবন্তঃ সর্ব্বেষ্বেব বিষয়েষু দক্ষতাশালিনঃ, তে কুমারাঃ, অঙ্গানি শিক্ষাকল্পাদীনি বেদাঙ্গশাস্ত্রাণি অন্যানি ন্যায়াদীনি দর্শনানি চ, সমধীতবন্তঃ । স্বতন্ত্রাঃ স্বাধীনাঃ, মহামনীষাং তীক্ষ্ণবুদ্ধিং প্রাপ্য, মনীষিতায়া অভীষ্টায়াঃ, অধীতেঃ অধ্যয়নাৎ, ন বিরমন্তি ন নিবর্ত্তন্তে ।

অত্র সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসোঽলঙ্কারঃ অন্ত্যানুপ্রাসচ্ছেকানুপ্রাসশ্চেতি সংসৃষ্টিঃ ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चिरोपकारि विहितप्रयत्नां
स्वातिक्रमादैहिकहानिहेतुम् ।
स्वसारमेति गुरुतोऽग्रजाताम्
अनुप्रयाता इव नीतिविद्याम् ॥३२॥

---

अङ्गानि यथा—

"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः ।
ज्योतिषामयनञ्चैव वेदाङ्गानि वदन्ति षट् ॥"

मनस ईषिता मनीषिता "ईषिते च मनसः" इति मनसः अकारलोपः, "संयोगान्तस्य लोपः" इति सकारलोपश्च ॥३१॥

বাঙ্গালা—সমস্ত বিষয়ে নিপুণ সেই কুমারেরা বেদাঙ্গশাস্ত্র এবং অন্যান্য দর্শনশাস্ত্রও অধ্যয়ন করিয়াছিলেন। কারণ, স্বতন্ত্রলোকেরা তীক্ষ্ণবুদ্ধি পাইয়া অভীষ্ট অধ্যয়ন হইতে বিরত হন না ॥৩১॥

अन्वयः—एते गुरुतः चिरोपकारि विहितप्रयत्नां स्वातिक्रमात् ऐहिकहानिहेतुं अग्रजातां स्वसारमिव नीतिविद्यां अनुप्रयाताः ॥३२॥

चिरोपकार इति । एते कुमाराः, गुरुतः अध्यापकात् पितृतश्च, चिरोपकारि, विहितप्रयत्नाम्, स्वस्या नीतिविद्यायाः स्वस्य अतिक्रमात् लङ्घनात्, ऐहिक्या हानेः गर्त्तपातादेः हेतुं कारणीभूताम्, अग्रजातां प्रागुत्पन्नां ज्येष्ठामिति यावत्, स्वसारं भगिनीमिव, नीतिविद्याम्, अनुप्रयाताः परमवगता अधीतवन्त इत्यर्थः अनुगताश्च ।

अत्र आर्थश्लेषानुप्राणिता श्रौती पूर्णोपमालङ्कारः ॥३२॥

বাঙ্গালা—যে চিরকালের উপকারে যত্ন করিয়া থাকে এবং যাহাকে লঙ্ঘন করিলে ইহলোকে কোন না কোন ক্ষতি হয়, পিতা হইতে প্রথম উৎপন্না (জ্যেষ্ঠা) ভগিনীর ন্যায় সেই নীতিবিদ্যা, তাঁহারা অধ্যাপকের নিকট অধ্যয়ন করিয়াছিলেন ॥৩২॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधौ रणानां सुविधाविधायी
प्रवीणवीरोऽप्यपरः परघ्नः ।
कालेऽनुकूले किल तान् समेतान्
शिक्षां धनुर्वेदगतामदिक्षत् ॥३३॥
तेषामथो धीरधुरन्धराणां
नवं नवं शीलयतान्व नित्यम् ।
योद्धा च कश्चित् कृतपूर्वयुद्ध-
शिक्षापरीक्षामकरोत् सुदक्षः ॥३४॥

---

अन्वयः—रणानां विधौ सुविधाविधायी परघ्नः अपरः प्रवीणवीरः अपि अनुकूले काले किल समेतान् तान् धनुर्वेदगतां शिक्षां अदिक्षत् ॥३३॥

विधाविति । रणानां विधौ युद्धकार्य्ये, सुविधां सुष्ठु प्रकारं विदधातीति सुविधाविधायी सुकौशलशिक्षक इत्यर्थः, परान् शत्रून् हन्तीति परघ्नः, अपरः, प्रवीणवीरोऽपि, सर्वयुद्धाभिज्ञः कोऽपि शूरश्च, अनुकूले व्यायामानुगुणे काले किल, समेतान् समागतान्, तान् कुमारान् धनुर्वेदगतां शिक्षाम्, अदिक्षत् उपदिष्टवान् अवोचदिति यावत् ।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः ।

"विधा प्रकारे च" इति "प्रवीणे निपुणाभिज्ञ-विज्ञ-निष्णातशिक्षिताः" इति चामरः ।

अत्र दिशधातोर्वेदत्यर्थतया द्विकर्म्मकत्वात् कर्म्मद्वयम् ॥३३॥

বাঙ্গালা—যুদ্ধকার্য্যে সুকৌশলশিক্ষক, শত্রুহন্তা ও প্রবীণ অপর কোনও বীর যথাসময়ে উপস্থিত সেই কুমারগণকে ধনুর্ব্বেদ শিক্ষা করাইতেন ॥৩৩॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शस्त्रेषु शास्त्रेषु गुरूपदिष्टं
रागं किलाङ्गेषु च दासदत्तम् ।
स्नानाह्निकापूर्त्तिभृतो दधाना
वेलामतीयुश्चतुराश्चतुर्थीम् ॥२५॥

---

अन्वयः—अथो सुदक्षः कश्चित् योद्धा च धीरधुरन्धराणां नित्यं नवं नवं शीलयताञ्च तेषां कृतपूर्व्वं युद्धशिक्षापरीक्षां अकरोत् ॥२४॥

तेषामिति । अथो धनुर्वेदशिक्षानन्तरम्, सुदक्षः कश्चित् योद्धा च, धीरधुरन्धराणां बुद्धिमत्प्रधानानाम्, नित्यं प्रत्यहम्, युद्धविषये नवं नवं प्रकारम्, शीलयताम् अभ्यस्यताञ्च, तेषां कुमाराणां कृतपूर्व्वा या युद्धशिक्षा तस्याः परीक्षाम् अकरोत् ।

अत्र वृत्त्यनुप्रासोऽलङ्कारः ॥२४॥

বাঙ্গালা—ধনুর্ব্বেদশিক্ষার পরে তীক্ষ্ণবুদ্ধিগণের অগ্রগণ্য সেই কুমারেরা যুদ্ধসম্বন্ধে প্রতিদিন নূতন নূতন প্রকার অভ্যাস করিতে লাগিলেন, সেই সময়ে কোন সুদক্ষ যোদ্ধা তাঁহাদের পূর্ব্বকৃত যুদ্ধশিক্ষার পরীক্ষা করিলেন ॥৩৫॥

अन्वयः—चतुराः शस्त्रेषु शास्त्रेषु च गुरूपदिष्टं अङ्गेषु च दासदत्तं रागं दधानाः स्नानाह्निकापूर्त्तिभृतः ( च सन्तः ) चतुर्थीं वेलां अतीयुः किल ॥२५॥

शस्त्रेष्विति । चतुराः सर्वविषये निपुणाः कुमाराः, शस्त्रेषु शास्त्रेषु च, गुरूपदिष्टं गुरूपदेशप्रयुक्तम्, अङ्गेषु गात्रेषु च, दासदत्तं भृत्यार्पितम्, रागम् अनुरागं तैलहरिद्रादिरञ्जनद्रव्यञ्च, दधानाः धारयन्तः, स्नानाह्निकयोः आपूर्त्तिं समाप्तिं बिभ्रतीति स्नानाह्निकापूर्त्तिभृतश्च सन्तः, चतुर्थीं वेलां दिवसस्य चतुर्थं भागम्, अतीयुः अतिक्रान्तवन्तः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कचेषु कश्चित् परिचर्य्यमाणः
संवाह्यमानश्चरणोऽपरश्च ।
अन्यः समन्तादपि वीज्यमानः
तृप्तो विशश्राम गताशनायः ॥३६॥

अत्रानुरागरञ्जनद्रव्ययोरुभयोरेव प्रस्तुतत्वात् अभिधाया च तयो रागपदेनोक्तत्वात् शब्दश्लेषोऽलङ्कारश्छेकानुप्रासेन संसृज्यते ।

"रागोऽनुरक्तो मात्सर्य्ये क्लेशादौ लोहितादिषु । गान्धारादौ नृपे रागः" इति विश्वः ॥३५॥

বাঙ্গালা—সর্বকার্য্যে নিপুণ কুমারেরা গুরুপদেশনিবন্ধন শস্ত্রবিদ্যা ও শাস্ত্রবিদ্যায় সর্ব্বদা অনুরক্ত থাকিয়া এবং গাত্রে ভৃত্যদত্ত রঞ্জনদ্রব্য ধারণ করিয়া স্নান ও মাধ্যাহ্নিক ক্রিয়া সমাপনে চতুর্থবেলা অতিক্রম করিতেন ॥৩৫॥

अन्वयः—गताशनायः तृप्तः ( च ) कश्चित् कचेषु परिचर्य्यमाणः अपरश्च चरणौ संवाह्यमानः अन्यः अपि समन्तात् वीज्यमानः ( सन् ) विशश्राम ॥३६॥

कचेष्विति । गता भोजनेनातीता अशनाया बुभुक्षा यस्य स गताशनायः, तृप्तः पेयपानेन लब्धतृप्तिश्च । इदं विशेषणद्वयं सर्वत्र योजनीयम् । कश्चित् कुमारः, कचेषु केशेषु, परिचर्य्यमाणः केनचिद्भृत्येन विलोड़नादिना शुश्रूष्यमाणः सन्, अपरश्च कुमारः, चरणौ भृत्येन संवाह्यमानः सन्, अन्योऽपि च कुमारः, समन्तात् सर्वतः चामरादिना वीज्यमानः सन्, विशश्राम विश्रामं चकार ।

अत्र विशश्राम इत्येकया क्रियया त्रयाणां कर्त्तृतयाभिसम्बन्धात् तुल्ययोगितालङ्कारः ।

"अशनायोदन्यधनाया बुभुक्षापिपासाकाङ्क्षासु निपाता रूढ़ाः" इत्यशनायेति निपातः ॥३६॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

আকর্ণয়ন্ত: প্রতি ষষ্ঠবেলাং
কিঞ্চিৎ পুরাণং কিয়তীং কলাঞ্চ।
বিনোদ্যমানা: কথকৈ: কথাভি:
মহান্তমানন্দমবাপ্নবন্ত: ॥৩৭॥

---

বাঙ্গালা—কোন কুমার পান ও ভোজন সমাপ্ত করিয়া বিশ্রাম করিতে লাগিলে, তখন কোন ভৃত্য আসিয়া তাঁহার কেশ বিলোড়ন করিত। অপর কুমার পান ও ভোজন সমাপ্তির পরে বিশ্রাম করিতে লাগিলে, কোন ভৃত্য আসিয়া তাঁহার পাদসংবাহন করিত এবং অন্য কুমার পান ও ভোজন সমাপ্তির পরে বিশ্রাম করিতে প্রবৃত্ত হইলে, ভৃত্যেরা আসিয়া তাঁহার সকল দিকে থাকিয়া বায়ু সঞ্চালন করিত ॥৩৬॥

অন্বয়:—ষষ্ঠবেলাং প্রতি কিঞ্চিৎ পুরাণং কিয়তীং কলাঞ্চ আকর্ণয়ন্ত: কথকৈ: কথাভি: বিনোদ্যমানা: (চ) মহান্তং আনন্দং অবাপ্নবন্ত: ॥৩৭॥

আকর্ণয়ন্ত ইতি। ষষ্ঠবেলাং প্রতি দিবসস্য ষষ্ঠে ভাগে, কিঞ্চিৎ পুরাণম্, কিয়তীং কলাং নর্ত্তক্যাদীনাং নৃত্যং গানঞ্চ আকর্ণয়ন্ত: দিন-ভেদেন শৃণ্বন্ত:, কথকৈ: ইতিহাসপুরাণব্যাখ্যাতৃভি: কথাভি: তত্তদ্ব্যাখ্যাভি: বিনোদ্যমানা: সন্তোষ্যমাণাশ্চ সন্ত:, মহান্তমানন্দম্, অবাপ্নবন্তো লব্ধবন্ত:, তে কুমারা ইতি শেষ:। "ইতিহাসপুরাণাভ্যাং ষষ্ঠঞ্চ সপ্তমং নয়েৎ" ইতি দক্ষস্মৃতিরত্র মূলম্।

অত্র ছেকানুপ্রাসোঽলঙ্কার: ॥৩৭॥

বাঙ্গালা—রাজকুমারেরা দিনের ষষ্ঠভাগে কোন পুরাণ কিংবা কোন সঙ্গীত শ্রবণ করিতে থাকিয়া, অথবা কথকগণের কথকতায় তৃপ্তিলাভ করত বিশেষ আনন্দ অনুভব করিতেন ॥৩৭॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आकर्ण्य ते भागवतं पुराणं
स्वयञ्च ते ते जनकः स एव ।
सा च प्रसूतिर्भगिनी च सैव
नामानि तान्येव तथा निजानि ॥३८॥
तामम्बिकाया भवने प्रयान्तीं
जहार यामिं यदुनन्दनः सः ।
विज्ञाय तस्मिन्निति तिहासमित्थं
ततः प्रभृत्येव विदिद्विषुस्तम् ॥३९॥ (युग्मकम्)

अन्वयः—ते भागवतं पुराणं आकर्ण्य स्वयञ्च ते ते, जनकः सः एव, प्रसूतिश्च सा, भगिनी च सैव, तथा निजानि नामानि तान्येव, सः यदुनन्दनः अम्बिकाया भवने प्रयान्तीं यामिं जहार तस्मिन् इत्थं इतिहासं विज्ञाय ततः प्रभृत्येव तं विदिद्विषुः ॥३८—३९॥

कुमाराणां शिक्षाविशेषेण क्रमप्राप्तां मनोऽवस्थामाह युग्मकेन आकर्ण्येति । ते कुमाराः, शुकप्रोक्तं भागवतं पुराणम् आकर्ण्य, स्वयं स्वे रुक्मिप्रभृतयश्च, ते ते भागवतोक्तरुक्मिप्रभृतय एव, जनकः पिता भीष्मकोऽपि, स भागवतोक्त एव, प्रसूतिर्माता च, सा भागवतोक्तैव, भगिनी रुक्मिणी च सा भागवतोक्तैव, निजानि नामानि तानि भागवतोक्तान्येव, स यदुनन्दनः कृष्णः, अम्बिकाया भवने प्रयान्तीं तद्वन्दनार्थं गच्छन्तीम्, यामिं भगिनीं रुक्मिणीं जहार, तस्मिन् शुकप्रोक्ते भागवते इत्थम् इतिहासं विज्ञाय, ततः प्रभृत्येव, तं यदुनन्दनं कृष्णं विदिद्विषुः । अतएव रुक्मिप्रभृतयः कृष्णमपहाय शिशुपालाय रुक्मिणीं दातुमैच्छन्निति भावः ।

"यामिः स्वसृकुलस्त्रियोः" इत्यमरः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ननु वृत्तान्तजन्मनः परमेव तद्ग्रन्थोत्पत्तेरवश्यम्भावात् अत्र भागवतपात्रीभूतानामेव रुक्मिप्रभृतीनां कथं भागवतश्रवणम्? न च तदानीमेव द्वैपायनेन निर्म्मीयमाणस्य भागवतस्य श्रवणमुपपद्यत इति वाच्यम्, भाविरुक्मिणीहरणादीनां तन्निर्म्माणासम्भवात्। इति चेत् सत्यम्; "इतिहासपुराणाभ्यां षष्ठञ्च सप्तमं नयेत्" इति ब्रह्मणः पुत्रेण दक्षेण स्वसंहितायां पुराणोल्लेखात् "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति॥" इति ब्रह्मणः पुत्रेणैव कृष्णद्वैपायनप्रपितामहेन वशिष्ठेनापि स्वसंहितायां पुराणपदाभिधानात् पुराणानां पूर्वकल्पीयत्वमकामेनाप्यवश्यमङ्गीकार्य्यम्। शुकप्रोक्तं भागवतञ्च "ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा" इत्यादिना पुराणतया परिगणितम्। अतएव हि नैषधचरिते श्रीहर्षेण— "पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे" इत्यनेन प्रथमसर्गे नलस्य सत्ययुगीयत्वमभिधाय तृतीयसर्गे हंसमुखेन नलसमानकालीनदमयन्त्यन्तिके "बुद्धो न दक्षः खलु शेषबुद्धौ" इति कलियुगीयस्य बुद्धस्याभिधानं कृतम्। तथा तन्नवमसर्गे च नलमुखेनैव "हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः" इति त्रेतायुगीयस्य हनूमत उदाहरणं प्रदर्शितम्। पूर्वकल्पीयपुराणेषु हंसेन दमयन्त्या च बुद्धस्यावगमात् नलेन च हनूमच्चरित्रप्राप्तेः सङ्गच्छते च तत्। इत्यञ्च भीष्मकपुत्राणां भागवतश्रवणमुपपद्यते कल्पान्तरजातस्य तस्य तदानीं सत्त्वात्। एवमन्यत्रापि ज्ञेयम्॥३৮—३৯॥

বাঙ্গালা—কুমারগণ ভাগবতপুরাণ শ্রবণ করিয়া জানিয়াছিলেন যে 'নিজেরাও সেই রুক্মিপ্রভৃতি, পিতাও সেই ভীষ্মক, মাতাও তিনি, ভগিনীও সেই রুক্মিণী, নিজেদের নামগুলিও তাহাই এবং ভগিনী রুক্মিণী অম্বিকার গৃহে যাইতেছিলেন, সেই সময়ে কৃষ্ণ তাহাকে হরণ

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

দিনান্তবেলামুপলভ্য সভ্যা
মারোপমানা অপি তে কুমারাঃ।
স্বভাবমিত্রৈঃ সহ রাজপুত্রৈঃ
বিহিত্রিমং সংবিদধুঃ সমীকম্ ॥৪০॥

করিয়াছিলেন' শ্রীমদ্ভাগবতে এইরূপ ইতিহাস জানিয়া তদবধিই কুমারেরা কৃষ্ণের প্রতি বিদ্বেষ করিতে আরম্ভ করিয়াছিলেন ॥৩৮—৩৯॥

অন্বয়ঃ—সভ্যাঃ মারোপমানা অপি তে কুমারাঃ দিনান্তবেলাং উপলভ্য স্বভাবমিত্রৈঃ রাজপুত্রৈঃ সহ বিহিত্রিমং সমীকং সংবিদধুঃ ॥৪০॥

দিনান্তেতি। সভ্যাঃ সজ্জনাঃ, মারঃ কামদেব উপমানং সৌন্দর্য্যে উপমাস্থলং যেষাং তে তাদৃশা অপি, তে কুৎসিতো মারঃ কামদেবো যেভ্যস্তে কুমারা ইতি বিরোধঃ, কুমারা রাজপুত্রা ইতি তৎসমাধানম্, দিনান্তবেলাং দিবসস্য শেষভাগম্, উপলভ্য প্রাপ্য, স্বভাবেনৈব মিত্রৈঃ ন তু ধনদানাদিনা মিত্রৈরিতি স্বভাবমিত্রৈঃ অন্যৈঃ রাজপুত্রৈঃ সহ বিধানেন নির্বৃত্তং বিহিত্রিমং কৃত্রিমম্, সমীকং যুদ্ধম্, সংবিদধুশ্চক্রুঃ।

অত্র দ্বিতীয়পাদে আর্থোপমাবিরোধাভাসয়োরেকাশ্রয়ানুপ্রবেশরূপঃ সঙ্করঃ, সোঽপি পুনশ্ছেকানুপ্রাসেন সংসৃজ্যতে।

"মহাকুলকুলীনার্য্যসভ্যসজ্জনসাধবঃ" ইতি "সমীকং সাম্পরায়িকম্" ইতি চ যুদ্ধপর্য্যায়ে অমরঃ।

বিহিত্রিমমিতি "ড্বনুবন্ধাৎ ত্রিমক্ তেন নির্বৃত্তেঃ" ইতি বিপূর্বধাধাতোস্ত্রিমক্ ॥৪০॥

বাঙ্গালা—সৎস্বভাব ও কামদেবের ন্যায় রূপবান্ সেই কুমারগণ দিবসের শেষভাগে স্বভাবমিত্র অন্যান্য রাজপুত্রগণের সহিত মিলিত হইয়া কৃত্রিম যুদ্ধ করিতেন ॥৪০॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उदीर्णवाद्यस्वनपूर्णकर्ण
प्रत्येकतालप्रतिपादपातम् ।
सज्जा निरीयुर्नृपजा जनौघै:
आरादगाराद्रणभूविभागम् ॥४१॥
कृतात्मनां स्वे खिलता भटानां
पताकिनी साऽभ्यपतत् पुरीतः ।
तरङ्गमालेव तरङ्गवत्याः
तरङ्गिता तीव्रसमीरणेन ॥४२॥

---

अन्वयः—नृपजाः सज्जाः ( सन्तः ) जनौघैः ( सह ) अगारात् आरात् उदीर्ण-वाद्यस्वनपूर्णकर्णं प्रत्येकतालप्रतिपादपातं रणभूविभागं निरीयुः ॥४१॥

उदीर्णेति। नृपजा राजकुमाराः, सज्जाः सन्नद्धाः सन्तः, जनानामोघैः समूहैः सह, अगारात् राजभवनात्, आरात् किञ्चिद्दूरे, उदीर्णा आविर्भूता ये वाद्यानां स्वना ध्वनयस्तैः पूर्णौ कर्णौ यस्मिन् कर्म्मणि तद्‌यथा तथा, वाद्यस्वनानां प्रत्येकतालेषु प्रतिपादपाताः प्रत्येकचरणविन्यासा यस्मिन् कर्म्मणि तद्‌यथा तथा च रणभुवो विभागं प्रदेशविशेषम्, निरीयुः निर्जग्मुः।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः।

"आराद्दूरसमीपयोः" इत्यमरः ॥४१॥

বাঙ্গালা—সেই রাজপুত্রেরা যুদ্ধসজ্জায় সজ্জিত হইয়া পুরবাসি-দর্শনার্থী লোকসমূহের সহিত রাজভবন হইতে কিয়দ্দূরবর্ত্তী সমরভূমিতে নির্গত হইতেন। তৎকালে আবির্ভূত রণবাদ্যধ্বনিতে লোকের কর্ণ পূর্ণ হইয়া যাইত এবং কুমারেরা সেই বাদ্যধ্বনির তালে তালে প্রত্যেক পদক্ষেপ করিতেন ॥৪১॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उरश्छदच्छन्नवपूंषि पुंसां
व्रणं जनस्ताम्रविभां दधन्ति ।
अस्तोन्मुखाताम्रदिवाकरस्य
करस्य मध्ये न च निश्चिकाय ॥४३॥

---

अन्वयः—कृतात्मनां भटानां श्रेणिकृता सा पताकिनी तीव्रसमीरणेन तरङ्गिता तरङ्गवत्याः तरङ्गमाला इव पुरीतः अभ्यपतत् ॥४२॥

कृतेति। कृत आत्मा युद्धशिक्षायां यत्नो यैस्तेषां कृतात्मनाम्, भटानां योद्धॄणाम्, श्रेणिकृता सा पताकिनी सेना, तीव्रसमीरणेन प्रबलवायुना, तरङ्गिता चञ्चलीकृता, तरङ्गवत्या नद्याः, तरङ्गमालेव, पुरीतः राजधानीतः, अभ्यपतत् रणाङ्गनाभिमुखमगच्छत् ।

अत्र श्रौतोपमालङ्कारश्छेकानुप्रासलाटानुप्रासाभ्यां संसृज्यते ।

"आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इति "भटा योधाश्च योद्धारः" इति चामरः ॥४२॥

বাঙ্গালা—যত্নসহকারে যুদ্ধশিক্ষায় শিক্ষিত যোদ্ধগণের শ্রেণীবদ্ধ সেই বাহিনীটী প্রবলবায়ু সঞ্চালিত নদীর তরঙ্গশ্রেণীর ন্যায় রাজধানী হইতে রণস্থলের অভিমুখে গমন করিত ॥৪২॥

अन्वयः—जनः अस्तोन्मुखाताम्रदिवाकरस्य करस्य मध्ये ताम्रविभां दधन्ति पुंसां उरश्छदच्छन्नवपूंषि व्रणं न च निश्चिकाय ॥४३॥

उरश्छदेति। जनः, अस्तोन्मुखः अस्ताचलगमनप्रवृत्तः अतएव आताम्रः सम्यक्ताम्रवर्णो यो दिवाकरः सूर्यस्तस्य, करस्य किरणस्य मध्ये, ताम्रविभां ताम्रनिर्म्मितकवचधारणात् ताम्रद्युतिम्, दधन्ति दधानानि, पुंसां योद्धृपुरुषाणाम्, उरश्छदैः कवचैः छन्नानि आवृतानि च तानि वपूंषि शरीराणि चेति तानि, व्रणं प्रथमदर्शनसमये, न च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततः परं यां पृतना ततान
श्रेणिद्वयीं स्वाभिमुखीमखिन्ना।
बभौ तदा सा रणभूनिशाटी-
दन्तीयपङ्क्तिद्वितयीसमाना ॥४४॥

---

नैव निश्चिकाय पुंशरीरतया नैव निश्चेतुं शशाक, तादृशसूर्य्यकर-पुंशरीरयोरुभयोरेव समानताम्रवर्णत्वात् परन्तु करचरणादिचेष्टादर्शनेन निश्चिकायैवेति भावः।

अत्र तादृशसूर्य्यकरमध्ये तादृशवपुषां गोपनान्मीलितं नामालङ्कारः, निश्चयाभावं प्रति तत्तत्पदार्थानां हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्चेत्युभयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनर्वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते। संसृष्टिसङ्करयोरपि पुनः संसृष्टिसङ्करौ सम्भवत इत्येतत्कविकृतसाहित्यदर्पणटीकायां द्रष्टव्यम्।

उरश्छाद्यते अनेनेति उरश्छदः। "उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्" इत्यमरः। "पुंसि संज्ञायां घः" इति घप्रत्यये "दीर्घं स्योपपदस्ये"त्यादिना ह्रस्वः ॥४३॥

বাঙ্গালা—অস্তাচলগামী সম্যক্ তাম্রবর্ণ সূর্য্যের কিরণের মধ্যে তাম্রনির্ম্মিত কবচে আবৃত তাম্রবর্ণ যোদ্ধাদের শরীরগুলি দেখিয়া তত্রত্য লোকেরা প্রথমে ক্ষণকাল পুরুষের শরীর বলিয়া নিশ্চয় করিতে পারিত না ॥৪৩॥

**अन्वयः**—ततः परं, अखिन्ना पृतना स्वाभिमुखीं यां श्रेणिद्वयीं ततान, सा तदा रणभूनिशाटी-दन्तीयपङ्क्तिद्वितयीसमाना बभौ ॥४४॥

तत इति। ततः परम्, अखिन्ना सोत्साहा, पृतना सा सेना, स्वयोरभिमुखीं स्वाभिमुखीम्, यां श्रेणिद्वयीं ततान विस्तारयाञ्चकार,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वीरोत्तमैर्वैरिषु कृत्रिमेषु
प्राहारि नास्त्रं समदर्शि मात्रम् ।
विलोक्य लोकास्तत एव बिभ्युः
स्वभावसिद्धं हि भयं मृदूनाम् ॥४५॥

सा श्रेणिद्वयी, तदा, रणभूः समरभूमिः निशाटी राक्षसीवेति रणभू-निशाटी तस्या या दन्तीयपङ्क्तिद्वितयी दन्तपङ्क्तिद्वयं तत्समाना सती बभौ रराज ।

अत्र रणीत्यादौ लुप्तोपमार्थोपमयोरेकाश्रयानुप्रवेशरूपः सङ्करः वृत्त्यनु-प्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ।

निशायामटतीति निशाटी निशोपपदादटतेरचि नदादित्वा-दीप्रत्ययः ॥४४॥

বাঙ্গালা—তাহার পর উৎসাহসম্পন্না সেই সেনা আপন আপন অভিমুখে যে দুইটী শ্রেণী করিত, তাহা তখন রাক্ষসীতুল্য সেই সমর-ভূমির দুইটা দন্তশ্রেণীর ন্যায় প্রকাশ পাইত ॥৪৪॥

अन्वयः—वीरोत्तमैः कृत्रिमेषु वैरिषु अस्त्रं न प्राहारि मात्रं समदर्शि । लोकाः विलोक्य तत एव बिभ्युः । हि मृदूनां भयं स्वभावसिद्धं ॥४५॥

वीरोत्तमैरिति । वीरोत्तमैः, कृत्रिमेषु अयथार्थेषु, वैरिषु शत्रुषु, अस्त्रम्, न प्राहारि न प्रयुक्तम्, किन्तु मात्रं केवलं समदर्शि तदस्त्रं प्रदर्शितम् । लोकाः तत्रत्या द्रष्टारो जनाः, विलोक्य, तत एव अस्त्रप्रदर्शनादेव, बिभ्युः भीता बभूवुः । हि तथाहि, मृदूनां दुर्बलतया कोमलानां जनानाम्, अकिञ्चित्करेऽपि भयकारणे भयं स्वभावसिद्धम् ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानु-प्रासेन संसृज्यते ॥४५॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्लुतस्वरैरोर्द्ध्वविकस्वरैस्व
कश्चित् समाहूय विहाय वाहम्।
स्वबाहुयुद्धच्छलमापतन्तं
कश्चिन्नरेन्द्राङ्गजमालिलिङ्ग ॥४६॥
अस्त्रं समेत्य प्रहरन्तमुच्चैः
निवार्य्य शस्त्रञ्च निरस्य कश्चित्।
द्विपेन्द्रपृष्ठादवतीर्य्य तिर्य्यक्
हस्तेन दध्रे कचहस्तमस्य ॥४৭॥

---

বাঙ্গালা—শ্রেষ্ঠ বীরগণ কৃত্রিম শত্রুগণের উপরে অস্ত্র প্রয়োগ করিতেন না, কেবল দেখাইতেন। তত্রত্য লোকেরা দেখিয়া তাহাতেই ভয় পাইত। কারণ, দুর্ব্বল লোকদিগের ভয়টা স্বভাবসিদ্ধ ॥৪৫॥

अन्वयः—कश्चित् वाहं विहाय ऊर्द्ध्वविकस्वरैः प्लुतस्वरैः स्वबाहुयुद्धच्छलं समाहूय आपतन्तं कश्चित् नरेन्द्राङ्गजं आलिलिङ्ग ॥४६॥

प्लुतेति। कश्चित् अश्वारोही योद्धा, वाहम् अश्वम्, विहाय अवतरणेन परित्यज्य, ऊर्द्ध्वं विकसति प्रकाशते इति ऊर्द्ध्वविकस्वरस्तेन प्लुतस्वरैः उच्चकण्ठध्वनिविशेषैः, स्वस्य बाहुयुद्धमेव छलं यस्मिन् कर्म्मणि तद्यथा तथा समाहूय, आपतन्तम् आगच्छन्तम्, कश्चित् नरेन्द्राङ्गजं राजपुत्रम्, आलिलिङ्ग।

अत्र छेकानुप्रासोऽलङ्कारः ॥४६॥

বাঙ্গালা—কোন অশ্বারোহী অশ্ব পরিত্যাগ করিয়া (অশ্ব হইতে নামিয়া) উর্দ্ধগামী উচ্চস্বরে আপন বাহুযুদ্ধচ্ছলে আহ্বান করিয়া আগমনপ্রবৃত্ত কোন রাজপুত্রকে আলিঙ্গন করিত ॥৪৬॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

রণোত্তমাধোরণদর্শ্যমান-
হস্তীন্দ্রহস্তাৎ সহসা নিরিত্য।
তং তৎক্ষণাদ্বক্ষসি মুষ্টিপীড়ং
স্বদন্তিতুন্দস্য তলে বিবিশ্বান্ ॥৪৮॥

---

অন্বয়ঃ—কশ্চিৎ অন্তং সমেত্য উচ্চৈঃ প্রহরন্তং নিবার্য্য শস্ত্রঞ্চ নিবৃশ্চ্য দ্বিপেন্দ্র-পৃষ্ঠাৎ তির্য্যক্ অবতীর্য্য হস্তেন অস্য কচহস্তং দধ্রে ॥৪৭॥

অন্তমিতি। কশ্চিদ্গজারোহী, অন্তং সমীপম্, সমেত্য আগত্য, উচ্চৈঃ ঊর্দ্ধদিশি, প্রহরন্তম্ অন্যং যোদ্ধারম্, নিবার্য্য প্রতিপ্রহারেণ নিবর্ত্ত্য, তদীয়ং শস্ত্রঞ্চ, নিবৃশ্চ্য ছিত্বা, দ্বিপেন্দ্রস্য মহাগজস্য পৃষ্ঠাৎ তির্য্যক্ অবতীর্য্য, হস্তেন করেণ, অস্য প্রহরতো যোদ্ধুঃ কচহস্তং কেশপাশং দধ্রে ধৃতবান্। মহানিপুণোঽয়ং গজারোহীতি ভাবঃ।

অত্র ছেকানুপ্রাসোঽলঙ্কারঃ।

"অন্তঃ স্বরূপে নাশে না ন স্ত্রী শেষেঽন্তিকে ত্রিষু" ইতি মেদিনী। "পাশঃ পক্ষশ্চ হস্তশ্চ কলাপার্থাঃ কচাৎ পরে" ইত্যমরঃ।

নিবৃশ্চ্যেতি "ব্রশ্চু ছেদনে" ইতি ব্রশ্চধাতোঃ ক্তো যপি রূপম্ ॥৪৭॥

বাঙ্গালা—কোন যোদ্ধা নিকটে আসিয়া উপরের দিকে অস্ত্র প্রহার করিতে উদ্যত হইলে, কোন গজারোহী যোদ্ধা প্রতিপ্রহারে তাহাকে নিবারণ ও তাহার অস্ত্রচ্ছেদন করিয়া পার্শ্বদেশ দিয়া হস্তিপৃষ্ঠ হইতে নামিয়া হস্তদ্বারা সেই প্রহারকারীর কেশপাশ ধারণ করিত ॥৪৭॥

অন্বয়ঃ—কশ্চিৎ রণোত্তমাধোরণদর্শ্যমানহস্তীন্দ্রহস্তাৎ সহসা নিরিত্য তৎ-ক্ষণাৎ বক্ষসি তং মুষ্টিপীড়ং স্বদন্তিতুন্দস্য তলে বিবিশ্বান্ ॥৪৮॥

রণেতি। অত্র কশ্চিদিত্যনুবর্ত্ততে। কশ্চিদ্গজারোহী, রণে উত্তমো নিপুণঃ য আধোরণো হস্তিপকঃ তেন দর্শ্যমানস্য হস্তীন্দ্রস্য হস্তাৎ

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तुङ्गैस्तुरङ्गैः खलयुद्धरङ्गे
माद्यद्भिरश्वार्द्धपुलायिताद्यैः ।
सुवद्भिरप्यस्य रथस्य लक्ष्मीं
लक्ष्मीसगर्भैर्नियतं बुभूवे ॥४९॥

वेष्टनकारिण्याः शुण्डायाः, सहसा निरित्य निर्गत्य, तत्क्षणात्, वक्षसि, तमाधोरणम्, मुष्टिना पीड़यित्वेति मुष्टिपीड़ं स्वदन्तितुन्दस्य निजगजोदरस्य, तले अधोदेशे विविश्वान् यन्त्रचालनेन प्रविवेश ।

अत्र छेकानुप्रासोऽलङ्कारः ।

"आधोरणा हस्तिपकाः" इत्यमरः ।

मुष्टिना पीड़यित्वेति मुष्टिपीड़ं "उपपीड़रुधकर्षश्च" इति पीड़यतेर्णम् । विविश्वानिति विशधातोः क्वसुप्रत्यये रूपम् ॥४८॥

বাঙ্গালা—যুদ্ধনিপুণ কোনও হস্তিপক (মাহুত) দেখাইয়া দিলে কোন বিশাল হস্তী শুণ্ডদ্বারা অপর কোন হস্ত্যারোহীকে বেষ্টন করিয়া ধরিত, তখন সেই হস্ত্যারোহী হঠাৎ সেই শুণ্ডবেষ্টন হইতে নির্গত হইয়া তৎক্ষণাৎ সেই হস্তিপকের বক্ষদেশে মুষ্টিপ্রহার করিয়া যন্ত্রসঞ্চালনপূর্ব্বক আপন হস্তীর উদরের নীচে যাইয়া প্রবেশ করিত ॥৪৮॥

अन्वयः—खलयुद्धरङ्गे माद्यद्भिः तुङ्गैः तुरङ्गैः अश्वार्द्धपुलायिताद्यैः अस्य रथस्य लक्ष्मीं सुवद्भिरपि नियतं लक्ष्मीसगर्भैः बुभूवे ॥४९॥

तुङ्गैरिति । खलयुद्धं खलिमसमर एव रङ्गः प्रमोदव्यापारविशेषस्तस्मिन्, माद्यद्भिः मत्तीभवद्भिः, तुङ्गैरुन्नतैः, तुरङ्गैः अश्वैः, अश्वार्द्धपुलायितम् अश्वशास्त्रोक्ताश्वगतिविशेषः, तदाद्यैस्तत्प्रभृतिगमनैः करणैः, अस्य रथस्य लक्ष्मीं शोभां सुवद्भिरपि जनयद्भिश्च सद्भिः, नियतं ध्रुवम्, लक्ष्म्याः क्षीरोदजायाः कमलायाः सगर्भैः उच्चैःश्रवोजातीयतया सहोदरैः, बुभूवे भूतम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुपारदृश्वाऽप्यतिधावतोऽश्वात्
पतन् निषादी व्यथितः स्वयञ्च ।
तदीक्षिणा शिक्षणकारिणोच्चैः
अरुन्तुदोद्‌गर्ज्जनतर्ज्जितश्च ॥५०॥

---

अत्र वाच्या भावाभिमानिनी जात्युत्प्रेक्षालङ्कारः वृत्त्यनुप्रास-श्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ।

"शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते" इति विश्वः ।

बभूव इति भावे प्रत्ययात् "भवतेरः" इत्यभ्यासे नाकारः ॥४९॥

বাঙ্গালা—বিশাল অশ্বগণ সেই কৃত্রিম যুদ্ধরঙ্গে মত্ত হইয়া অর্দ্ধ ও অর্দ্ধপুলায়িতপ্রভৃতি গতিদ্বারা সেই যুদ্ধের শোভা প্রকাশ করিতে থাকিয়া নিশ্চয়ই লক্ষ্মীদেবীর সহোদর হইয়াছিল ( উচ্চৈঃশ্রবা অশ্বের সজাতীয় হইয়াছিল ) ॥৪৯॥

अन्वयः—सुपारदृश्वापि निषादी अतिधावतः अश्वात् पतन् स्वयं व्यथितश्च, तदीक्षिणा शिक्षणकारिणा उच्चैः अरुन्तुदोद्‌गर्ज्जनतर्ज्जितश्च (अभूत्) ॥५०॥

सुपारेति । सुष्ठु पारं दृष्टवानिति सुपारदृश्वा अश्वारोहणे विशेष-निपुणोऽपीत्यर्थः, निषादी कश्चिदारोही, अतिधावतः अतिवेगेन गच्छतः अश्वात्, पतन् सन्, स्वयं व्यथितश्च, तदीक्षिणा तत्पतनदर्शिना, शिक्षण-कारिणा शिक्षकेण, उच्चैर्यत् अरुन्तुदं मर्म्मवेदनाजनकम् उद्‌गर्ज्जनं तेन तर्ज्जितो भर्त्सितश्च अभूत् ।

अत्र व्यथनतर्ज्जनयोः क्रिययोर्यौगपद्यात् समुच्चयोऽलङ्कारश्छेकानु-प्रासश्चेति संसृष्टिः ।

सुपारदृश्वेति "दृशेः क्वनिप् ।" अरुन्तुदेति "विध्वरुषोस्तुदः" इति तुदतेः खश् ॥५०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भ्रमं भटौ भ्रेमतुरुद्भटाङ्घ्री
उत्प्लुत्य निप्लुत्य गदां दधानौ।
भ्रमं रजः स्वस्वकरैः किरन्तौ
भुजाभुजि प्रांशुरवौ व्यधाताम् ॥৫১॥

---

বাঙ্গালা—কোন অশ্বারোহী অশ্বারোহণে বিশেষ নিপুণ হইয়াও অত্যন্তবেগে ধাবিত অশ্ব হইতে পতিত হইয়া নিজেও ব্যথা পাইল, আবার শিক্ষকমহাশয় তাহা দেখিয়া উচ্চস্বরে মর্ম্মবেদনাদায়ক ভৎর্সনাও করিলেন ॥৫০॥

अन्वयः—गदां दधानौ भटौ उद्भटाङ्घ्री (सन्तौ) उत्प्लुत्य निप्लुत्य भ्रमं भ्रेमतुः, भ्रमञ्च स्वस्वकरैः रजः किरन्तौ प्रांशुरवौ (च सन्तौ) भुजाभुजि व्यधाताम् ॥৫১॥

भ्रममिति। गदां दधानौ धारयन्तौ, भटौ द्वौ योद्धारौ, उद्भटौ उद्धतौ अङ्घ्री चरणौ ययोस्तौ तादृशौ सन्तौ, उत्प्लुत्य उद्गत्य, निप्लुत्य निपत्य च, भ्रमम्, भ्रेमतुः रणाङ्गने भ्रमणं चक्रतुः, भ्रमञ्च, स्वस्वकरैः, रजो धूलिम्, किरन्तौ गदां विहाय घर्म्मपिच्छिलतानिवर्त्तये विक्षिपन्तौ, प्रांशुरवौ रवो गर्जनं ययोस्तौ तादृशौ च सन्तौ, भुजाभुजि परस्पर-बाहुप्रहारात्मकयुद्धम्, व्यधातां कृतवन्तौ।

अत्र स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते।

भुजाभुजीति भुजेन च भुजेन च प्रहृत्य युद्धं वृत्तमिति भुजाभुजि "तृतीयान्तं सप्तम्यन्तञ्च" इत्यादिना बहुव्रीहौ निपातः; अव्ययोऽयमिति केचित् ॥৫১॥

বাঙ্গালা—গদাধারী দুইজন যোদ্ধা উল্লম্ফন প্রলম্ফনপূর্ব্বক উদ্ধত পাদক্ষেপে কিছুকাল ভ্রমণ করিল, পরে গদা পরিত্যাগপূর্ব্বক আপন

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

স্বস্বাভিমুখ্যশ্রিতবীরমুখ্যাঃ
অবিভ্রমন্নভ্রমবৃত্তয়োঽসীন্ ।
ততঃ প্রযাতেঽপ্যরুণে রণাব্ধৌ
সরোজপুষ্পাণি সিতান্যপুষ্যন্ ॥৫২॥

আপন হস্তে ধূলি নিক্ষেপ করিয়া এবং উচ্চস্বরে গর্জন করিতে থাকিয়া ভুজাভুজি (হাতাহাতি) যুদ্ধ করিতে লাগিল ॥৫১॥

অন্বয়ঃ—অভ্রমবৃত্তয়ঃ স্বস্বাভিমুখ্য-শ্রিত-বীর-মুখ্যাঃ অসীন্ অবিভ্রমন্ । ততঃ অরুণে প্রযাতেঽপি রণাব্ধৌ সিতানি সরোজপুষ্পাণি অপুষ্যন্ ॥৫২॥

স্বেতি । ন বিদ্যতে ভ্রমবৃত্তির্ভ্রান্তির্যেষাং তে অভ্রমবৃত্তয়ঃ, যুদ্ধকালে ভ্রমে সতি বিপদবশ্যম্ভাবিনীতি ভাবঃ । স্বস্বাভিমুখ্যং নিজনিজ-সাম্মুখ্যং শ্রিতা আশ্রিতাশ্চ তে বীরমুখ্যা বীরশ্রেষ্ঠাশ্চেতি তে, অসীন্ কৃপাণান্, অবিভ্রমন্ ঘূর্ণয়ন্তি স্ম । ততঃ কারণাৎ, অরুণে সূর্য্যে, প্রযাতে অস্তং গতেঽপি সতি, রণাব্ধৌ যুদ্ধসমুদ্রে, সিতানি শ্বেতবর্ণানি, সরোজ-পুষ্পাণি পদ্মকুসুমানি, অপুষ্যন্ প্রাস্ফুটন্নিব । অতিদ্রুতং ঘূর্ণ্যমানানাং নির্ম্মলাসীনাং রণস্থলোর্দ্ধে বিশালশ্বেতপদ্মাকৃতিলাভাদিতি ভাবঃ ।

অত্র প্রতীয়মানা ভাবাভিমানিনী ক্রিয়োৎপ্রেক্ষালঙ্কারঃ, সূর্য্য-স্থিতিরূপহেতুং বিনাপি পদ্মবিকাশরূপকার্য্যোৎপত্তেবিভাবনা, রণাব্ধা-বিতি নিরঙ্গং কেবলরূপকঞ্চেত্যেতেষামঙ্গাঙ্গিভাবেন সঙ্করঃ, সোঽপি পুনশ্ছেকানুপ্রাসেন সংসৃজ্যতে ॥৫২॥

বাঙ্গালা—প্রধান প্রধান বীরেরা ভ্রম শূন্য এবং পরস্পর অভিমুখবর্ত্তী হইয়া তরবারি ঘুরাইতে লাগিলেন। তাহাতে, সূর্য্য অস্তাচলে গমন করিলেও সেই রণসমুদ্রে যেন শ্বেতবর্ণ পদ্মসকল প্রস্ফুটিত হইল ॥৫২॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वीरं गुरुं जेतुमजय्यमन्यः
जनो यथेष्टां व्यतनिष्ट चेष्टाम्।
सा निष्फलाभूच्छिशिरे लतेव
श्रेष्ठान् स्वनामैव गुरून् व्यनक्ति ॥५३॥

असौ धरित्रीपतिपञ्चपुत्री
शिक्षां समासाद्य विशिष्य सद्यः।
सर्वोत्तमा विग्रहवित्तमाभूत्
निसर्गसिद्धो हि सतां स सर्गः ॥५४॥

अन्वयः—अन्यः जनः अजय्यं वीरं गुरुं जेतुं यथेष्टां चेष्टां व्यतनिष्ट, (किन्तु) सा शिशिरे लता इव निष्फला अभूत्। स्वनाम एव गुरून् श्रेष्ठान् व्यनक्ति ॥५३॥

वीरमिति। अन्यो जनः, अजय्यं जेतुमशक्यं वीरं गुरुं शिक्षकम्, जेतुम्, यथेष्टां पर्य्याप्तां चेष्टां व्यतनिष्ट विस्तारयामास अकरोत्। किन्तु सा चेष्टा, शिशिरे शीतकाले लतेव, निष्फला अभूत् जयाभावादिति भावः। उक्तमर्थं समर्थयितुमाह श्रेष्ठानिति। स्वनामैव गुरुरिति संज्ञैव गुरून् श्रेष्ठान्, व्यनक्ति सूचयति।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, श्रौतोपमा वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः।

अजय्यमिति "खरादयः" इति यप्रत्यये "जिय्योः शक्ये" इति अयादेशे रूपम् ॥५३॥

বাঙ্গালা—অন্য কোন লোক বীর ও অজেয় গুরুকে (শিক্ষককে) জয় করিবার জন্য যথেষ্ট চেষ্টা করিল; কিন্তু শীতকালে লতার ন্যায় তাহার সে চেষ্টা নিষ্ফল হইয়া গেল। কারণ, গুরু এই নামটীই গুরুজনের শ্রেষ্ঠতার সূচনা করিয়া থাকে ॥৫৩॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लोको रवौ स्वास्तमिते समस्तः
तेषां प्रशक्तिं विविनक्ति नक्तम् ।
नृपात्मजानान्त्वजनि प्रशंसा
न चन्द्रिका चन्द्रमसं जहाति ॥५५॥

**अन्वयः**—असौ धरित्रीपतिपञ्चपुत्री सद्यः शिक्षां समासाद्य ( अपि ) विशिष्य सर्व्वोत्तमा विग्रहवित्तमा अभूत् । हि स सर्गः सतां निसर्गसिद्धः ॥५४॥

असाविति । असौ, धरित्रीपते राज्ञः पञ्चानां पुत्राणां समाहार इति पञ्चपुत्री, सद्यः शिक्षां समासाद्य प्राप्यापि, विशिष्य स्वान् विशेषीकृत्य, सर्वेभ्य उत्तमा प्रधानवीरभूता, विग्रहवित्तमा युद्धाभिज्ञश्रेष्ठा च अभूत् । हि तथाहि, स सर्गः सर्व्वोत्तमत्वादिसृष्टिः, सतां बुद्धिमत्त्वादिना अभ्यर्हितानां निसर्गेण स्वभावेनैव सिद्धो भवति ।

अत्रापि पूर्ववदर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते ॥५४॥

বাঙ্গালা—ভীষ্মকরাজার সেই পাঁচটী পুত্রই সদ্য শিক্ষালাভ করিয়াও সর্ব্বোত্তম বীর ও যুদ্ধাভিজ্ঞশ্রেষ্ঠ হইয়াছিলেন। কারণ, সেইরূপ শ্রেষ্ঠতা বুদ্ধি ও মেধাপ্রভৃতি গুণবশতঃ প্রশংসনীয় লোকদিগের স্বভাবসিদ্ধ হইয়া থাকে ॥৫৪॥

**अन्वयः**—समस्तः लोकः रवौ अस्तमिते नक्तं ( च ) तेषां प्रशक्तिं विविनक्ति स्म । नृपात्मजानां तु प्रशंसा अजनि । चन्द्रिका चन्द्रमसं न जहाति ॥५५॥

लोक इति । समस्तो लोकः, रवौ सूर्य्ये अस्तमिते सति, नक्तं रात्रौ च, तेषां योद्धृणाम्, प्रशक्तिं सामर्थ्यं सामर्थ्यतारतम्यामिति यावत्, विविनक्ति विचारयति स्म । नृपात्मजानान्तु प्रशंसा युद्धनैपुण्यातिरेकात् प्रशक्तिस्तुतिः, अजनि जाता । तथा च चन्द्रिका ज्योत्स्ना, चन्द्रमसं चन्द्रम्, न जहाति न त्यजति । चन्द्रिका यथा चन्द्रमसं न जहाति, तथा प्रशंसापि नृपात्मजान् न जहाति स्मेति भावः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पतिंवरा वीरजनैकभोग्या
योग्या रणश्रीस्तरला गुणज्ञा।
प्रस्वेदविन्दालिमिषेण कुन्द-
मालां समालम्बयतैतदङ्गे ॥५६॥

---

अत्र वैधर्म्म्येण दृष्टान्तोऽलङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ॥५५॥

বাঙ্গালা—সূর্য্য অস্তাচলে গমন করিলে সমস্ত লোক সেই যোদ্ধাদের শক্তিবিষয়ে বিবেচনা করিত, কিন্তু তাহাতে রাজপুত্রগণেরই প্রশংসা হইত। কারণ, জ্যোৎস্না চন্দ্রকে পরিত্যাগ করে না ॥৫৫॥

अन्वयः—पतिंवरा वीरजनैकभोग्या योग्या तरला गुणज्ञा (च) रणश्रीः एतदङ्गे प्रस्वेदविन्दालिमिषेण कुन्दमालां समालम्बयत ॥५६॥

पतिंवरेति। पतिं वृणीते इति पतिंवरा, वीरजनैकभोग्या केवलवीरजनलभ्या, योग्या, तरला अनियतत्वात् चञ्चला गुणज्ञा च, रणश्रीः युद्धविजयलक्ष्मीः, एतेषां राजपुत्राणाम्, अङ्गे गात्रे कण्ठे च, प्रस्वेदविन्दालेः घर्म्मविन्दुमालाया मिषेण छलेन, कुन्दमालां कुन्दकुसुमस्रजम्, समालम्बयत वरणमाल्यतया पर्य्यधापयदिव।

अत्र राजपुत्ररणश्रियोर्लिङ्गसाम्येन नायकनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः, सापह्नवा भावाभिमानिनी प्रतीयमाना क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासेन संसृज्यते ॥५६॥

বাঙ্গালা—পতিবরণার্থিনী, কেবলবীরজনভোগ্যা, যোগ্যা, চঞ্চলা ও গুণজ্ঞা, যুদ্ধজয়লক্ষ্মী, ঘর্ম্মবিন্দুশ্রেণীচ্ছলে যেন কুমারগণের কণ্ঠদেশে কুন্দকুসুমমালা পরিধান করাইয়া দিত ॥৫৬॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिश्रमाम्भः शिशिरे समीरे
तेषां निराकुर्वति सर्वदेहात् ।
दधज्जलार्द्रां पुनरुक्तिदोषं
सञ्चालयन् सेविजनो जगाम ॥५७॥
उपास्यमाना सकलैरमीभिः
प्रालेयलेशान् जहती प्रभूतान् ।

अन्वयः—शिशिरे समीरे तेषां सर्व्वदेहात् परिश्रमाम्भः निराकुर्व्वति (सति) जलार्द्रां दधत् सेविजनः ताञ्च सञ्चालयन् पुनरुक्तिदोषं जगाम ॥५७॥

परिश्रमेति। शिशिरे शीतले, समीरे सान्ध्यवायौ, तेषां राजकुमाराणाम्, सर्वदेहात्, परिश्रमाम्भो घर्म्मजलम्, निराकुर्वति विलोपं नयति सति, जलार्द्रां जलार्द्रव्यजनम्, दधत् धारयन्, सेविजनो भृत्यः, ताञ्च जलार्द्रां सञ्चालयन् पुनरुक्तिदोषम्, जगाम प्राप। शिशिरसमीरणैनैव घर्म्मविन्दुविलोपनात् पुनस्तद्विलोपनार्थमेव जलार्द्राया धारणात् सञ्चालनाच्चेति भावः।

अत्र पुनरुक्तिदोषप्राप्तिं प्रति पूर्व्वार्द्धगतपदार्थहेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारश्छेकानुप्रासश्चेत्यनयोः संसृष्टिः।

"त्रि विलं तालवृन्तं स्यादुत्क्षेपो व्यजनञ्च यत्। जलेनार्द्रं जलार्द्रा स्यात्" इति वैजयन्ती। "वपुर्जलार्द्रापवनैर्न निर्ववौ" इति शिशुपालवधे प्रयोगान्तरञ्च ॥५७॥

বাঙ্গালা—সন্ধ্যাকালের শীতলবায়ু আসিয়া কুমারগণের সমস্ত গাত্র হইতে ঘর্ম্মবিন্দুসকল লুপ্ত করিতে থাকিলেও ভৃত্য শীতল তালবৃন্ত ধারণ ও তাহা সঞ্চালন করিতে থাকিয়া পুনরুক্তিদোষ লাভ করিত ॥৫৭॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्खलत्करा भास्करसम्प्रयाणात्
पितृप्रसूस्तत्र बभूव लीना ॥५८॥
स्वरप्रवीणा अपि हीनवीणा
जगुर्न वीणा युगपद्वयदेते।
बभूव कोलाहलिकोकिलाली
व्यलीकगाना प्रकृतेन तेन ॥५९॥

अन्वयः—अमीभिः सकलैः भास्करसम्प्रयाणात् उपास्यमाना प्रभूतान् प्रालेयलेशान् जहती स्खलत्करा पितृप्रसूः तत्र लीना बभूव ॥५८॥

उपास्येति। अमीभिः कुमारादिभिः, सकलैर्जनैः, भास्करस्य सूर्य्यस्य सम्प्रयाणात् अस्तगमनेनादर्शनात् पत्युर्मरणाच्च, उपास्यमाना आराध्यमाना आश्वासदानेन सेव्यमाना च, प्रभूतान् प्रचुरान्, प्रालेयलेशान् हिमविन्दून् अश्रुविन्दूंश्च, जहती त्यजन्ती, स्खलन् भ्रश्यन् श्लथीभवंश्च करः किरणो हस्तश्च यस्याः सा, पितृप्रसूः सायंसन्ध्या सती स्त्री च, तत्र तदानीम्, लीना अदर्शनं गता सहमरणेन लयं गता च, बभूव। सन्ध्याकालोऽतीत इत्यर्थः।

अत्र लिङ्गसाम्येन कार्य्येण च सूर्य्यसायंसन्ध्ययोः पतिपत्नीव्यवहार-समारोपात् समासोक्तिरलङ्कारः।

"सायंसन्ध्या पितृप्रसूः" इत्यमरः ॥५८॥

বাঙ্গালা—সূর্য্য অস্তাচলে গমন করিলেন, রাজকুমারপ্রভৃতি সকল লোক সন্ধ্যোপাসনা করিতে লাগিল, প্রচুর হিমবিন্দু পতিত হইতে থাকিল, ক্রমে সান্ধ্যরাগও তিরোহিত হইল এবং সন্ধ্যাকাল অতীত হইয়া গেল ॥৫৮॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन रूपेण कुमारवर्गः
विद्यां गृहीत्वा गुरुतस्ततः सः ।
घृताहुतिं प्राप्य मखे शिखीव
राजप्रयुक्तः सुतरां रराज ॥६०॥

---

अन्वयः—हीनवीणा अपि स्वरप्रवीणा एते नवीनाः युगपत् यत् जगुः, प्रक्रान्तेन तेन कोलाहलि-कोकिलाली व्यलीकगाना बभूव ॥५९॥

स्वरेति। हीनात्यक्ता वीणा यैस्ते हीनवीणा अपि प्रवीणा प्रकृष्टवीणा इति विरोधः, हीना ध्वनौ न्यूना वीणा येभ्यस्ते हीनवीणाः, स्वरे निषादादौ प्रवीणा निपुणा इति तत्समाधानम्, एते नवीनास्तरुणाः कुमाराः, युगपदेकदा, यत् जगुर्गानं चक्रुः, प्रक्रान्तेन आरब्धेन, तेन गानेन, कोलाहलः अस्या अस्तीति कोलाहलिनी चासौ कोकिलाली कोकिलश्रेणी चेति कोलाहलिकोकिलाली व्यलीकं विप्रियेणाप्रियं गानं यस्याः सा व्यलीकगाना बभूव। कोकिलस्वरादप्यमीषां स्वरो मधुर इत्यर्थः।

अत्र प्रागुक्तव्याख्यानात् विरोधाभासोऽलङ्कारः, कोकिलस्वरात् कुमारगणस्वरस्याधिक्यप्रतिपादनाद्व्यतिरेकः, छेकानुप्रासश्रुत्यनुप्रासवृत्त्यनुप्रासाश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः।

"प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः" इति "अलीकन्त्वप्रियेऽनृते" इति चामरः ॥५৯॥

বাঙ্গালা—নিষাদপ্রভৃতি সপ্তস্বরে নিপুণ এবং বীণা অপেক্ষাও মধুরস্বরশালী যুবক রাজপুত্রেরা যে গান করিতেন, তাহা চলিতে লাগিলে, কোলাহলকারী কোকিলগণের গানও লোকের অপ্রিয় হইয়া যাইত ॥৫৯॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सा रुक्मिणी किन्तु गुरोरगृह्णात्
वेदस्थले गीरचनाप्रकारम् ।
सङ्कल्पकार्य्यें ललना प्रवृत्ता
तिलस्थले धान्यमिवास्तिपत्नी ॥६१॥

---

अन्वयः—राजप्रयुक्तः सः कुमारवर्गः अनेन रूपेण गुरुवृन्दतः विद्यां गृहीत्वा मखे घृताहुतिं प्राप्य शिखी इव सुतरां रराज ॥६०॥

कुमारवर्णनामुपसंहरति अनेनेति । राज्ञा प्रयुक्तो राजप्रयुक्तः, स कुमारवर्गः, अनेन रूपेण प्रकारेण, गुरुवृन्दतः शिक्षकगणात्, विद्यां गृहीत्वा, मखे यज्ञे, घृताहुतिं प्राप्य, शिखी वह्निरिव, सुतराम् अतिशयेन रराज ।

अत्र श्रौतोपमालङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ॥६०॥

বাঙ্গালা—রাজপ্রযুক্ত কুমারগণ এইভাবে শিক্ষকগণের নিকট হইতে বিদ্যালাভ করিয়া—যজ্ঞে ঘৃতের আহুতি পাইয়া অগ্নির ন্যায় অত্যন্ত শোভা (দীপ্তি) পাইতে লাগিলেন ॥৬০॥

अन्वयः—किन्तु सा रुक्मिणी सङ्कल्पकार्य्यें प्रवृत्ता, अस्तिपत्नी ललना तिलस्थले धान्यमिव वेदस्थले गीरचनाप्रकारं गुरोः अगृह्णात् ॥६१॥

सेति । किन्तु सा रुक्मिणी, सङ्कल्पकार्य्यें प्रवृत्ता, अस्ति विद्यमानः पतिर्यस्याः सा अस्तिपत्नी सधवा, ललना स्त्री, तिलस्थले धान्यमिव, वेदस्थले वेदशिक्षास्थाने, गीरचनाप्रकारं सरसवाक्यनिर्म्माणप्रणालीम्, गुरोः शिक्षकात्, अगृह्णात् अशिक्षत ।

अत्र श्रौतोपमालङ्कारः ।

"सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति" इति पराशरभाष्य-हुतभुजा स्त्रिया वेदाध्ययननिषेधात् वेदस्थल इत्युक्तम् । "कुशतिलजल-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चित्रादि पित्राहितनीतिरेषा
शिल्पं शिशिक्षे समरस्थले च।
नारी च भद्रेव च शूद्रजातिः
नमःप्रयोगं प्रणवाभिधाने ॥६२॥

---

त्यागरूपः सङ्कल्पः शास्त्रार्थः" इत्युक्तेः स्त्रिया अपि सङ्कल्पे तिलग्रहणप्राप्तौ "न स्पृशेत् तिलदर्भांस्तु यावद्भर्त्तरि जीवति" इति तिलग्रहणनिषेधात् तिलस्थले धान्यमिवेत्यभिहितम्। अस्तीति विद्यमानार्थमव्ययम्। शब्दशक्तिप्रकाशिकायामपि "अस्तिचौरा नास्तिचौरा" इत्युदाहृतम्। अस्तिपत्नीति सपत्नी इत्यादिवत् "पत्युर्नश्च" इति नकार ईकारश्च ॥६१॥

বাঙ্গালা—সঙ্কল্পকার্য্যে প্রবৃত্তা সধবা স্ত্রী যেমন তিলস্থানে ধান্য গ্রহণ করে, তেমন রুক্মিণী গুরুর নিকট বেদশিক্ষাস্থানে মধুর বাক্যরচনা প্রণালী শিক্ষা গ্রহণ করিতেন ॥৬১॥

अन्वयः—पित्राहितनीतिः च एषा नारी च भद्रा शूद्रजातिश्च प्रणवाभिधाने नमःप्रयोगं इव समरस्थले चित्रादि शिल्पं शिशिक्षे ॥६२॥

चित्रेति। पित्रा आहिता शिक्षया स्थापिता नीतिर्यस्यां सा पित्राहितनीतिश्च, एषा रुक्मिणी, नारी सकला स्त्री च, भद्रा शिष्टा शूद्रजातिश्च, प्रणवाभिधाने सङ्कल्पादौ प्रणवप्रयोगे कर्त्तव्ये, नमः-प्रयोगमिव, समरस्थले आत्मगणक्रियमाणयुद्धशिक्षास्थाने, चित्रादि आलेख्यनिर्म्माणप्रभृति शिल्पम्, शिशिक्षे।

अत्र श्रौतोपमालङ्कारश्छेकानुप्रासेन संसृज्यते।

अत्राप्युत्तपराशरभाष्यधृतश्रुत्या स्त्रीशूद्रयोः प्रणवोच्चारणनिषेधात्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्या न चेत् स्यात् क्षितिपात्मजानां
सुमेधसां यत्नवताममीषाम्।
कृषीवलैः सिक्तजला सुकृष्टा
तदोप्तवीजाप्यफलोर्व्वरा स्यात्॥६३॥

प्रणवाभिधाने नमःप्रयोगमिव इत्युक्तम्। अशिष्टः शूद्रस्तु स्वेच्छाचारवशात् प्रणवमभिधत्त इति भद्रेत्युपात्तम्॥६२॥

বাঙ্গালা—স্ত্রী ও শিষ্টশূদ্র যেমন প্রণবস্থলে নমঃপ্রয়োগ শিক্ষা করে, সেইরূপ পিতার নিকট নীতিশিক্ষায় শিক্ষিত রুক্মিণী যুদ্ধশিক্ষাস্থলে চিত্রপ্রভৃতি শিল্প শিক্ষা করিতেন॥৬২॥

অন্বয়ঃ—সুমেধসাং যত্নবতাং (চ) অমীষাং ক্ষিতিপাত্মজানাং চেৎ বিদ্যা ন স্যাৎ, তদা কৃষীবলৈঃ সুকৃষ্টা উপ্তবীজা সিক্তজলা (চ) উর্ব্বরাপি অফলা স্যাৎ॥৬৩॥

অথ দশভিঃ শ্লোকৈঃ কুমারাণাং কতিপয়বিদ্যালাভমাহ বিদ্যেতি। সুমেধসাং শোভনা মেধা যেষাং তেষাম্, যত্নবতাং বিদ্যালাভে যত্নশীলানাঞ্চ, অমীষাং ক্ষিতিপাত্মজানাং রাজপুত্রাণাম্, চেদ্যদি, বিদ্যা ন স্যাৎ, তদা কৃষীবলৈঃ কৃষকৈঃ, সুকৃষ্টা সুষ্ঠু কর্ষণাদ্যদীকৃতা, উপ্তানি রোপিতানি বীজানি যস্যাং সা, সিক্তানি জলানি যস্যাং সা চ, উর্ব্বরা সর্বশস্যজননযোগ্যাপি ভূমিঃ অফলা ফলশূন্যা স্যাৎ। উর্বরায়া নিষ্ফলত্বমিব তাদৃশানাং কুমারাণাং নির্বিদ্যত্বমসম্ভবমেবেতি ভাবঃ।

অতএবাত্র অসম্ভবদ্বস্তুসম্বন্ধা নিদর্শনালঙ্কারঃ॥৬৩॥

বাঙ্গালা—মেধাবী ও যত্নশীল সেই কুমারগণের যদি বিদ্যা না হইত, তাহা হইলে কৃষকেরা সম্যক্ কর্ষণ, বীজরোপণ এবং জলসেচন করিলেঃ পর উর্ব্বরা ভূমি ফলশূন্য হইত॥৬৩॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सामाश्रया निर्म्मलवर्णयुक्ता
विज्ञापयन्ती बहुवस्तुतत्त्वम् ।
एतैः कुमारैः परिशब्द्यमाना
मातेव लेभेऽखिलवेदविद्या ॥६४॥
श्रितान्तकोदण्डमहोपकारी
निष्पादकः सन्ततमाहवस्य ।
सखा धनुर्वेदगतस्य बोधः
परस्परं तेषु बभूव तुल्यः ॥६५॥

---

अन्वयः—एतैः कुमारैः परिशब्द्यमाना सामाश्रया निर्म्मलवर्णयुक्ता बहुवस्तुतत्त्वं विज्ञापयन्ती ( च ) माता इव अखिलवेदविद्या लेभे ॥६४॥

कुमाराणां वेदादिविद्यानिष्पत्तिमाह सामेति। एतैः कुमारैः परिशब्द्यमाना अधीयमाना, साम तदाख्यं वेदं सान्त्ववादञ्च आश्रयत इति सा, निर्म्मलैर्वर्णैरकारादिभिः निर्म्मलेन वर्णेन देहकान्त्या च युक्ता, बहुवस्तुतत्त्वं विज्ञापयन्ती च, माता इव अखिलवेदविद्या लेभे ।

अत्र श्रौती पूर्णोपमालङ्कारः ॥६४॥

বাঙ্গালা—সেই রাজকুমারেরা গুরুর নিকট অধ্যয়ন করিয়া সামবেদ-( সান্ত্বনা বাক্য ) সমন্বিত, নির্ম্মলবর্ণ-( অকারাদি অক্ষর, দেহ-কান্তি ) দেহকান্তিযুক্ত এবং বহুবস্তুতত্ত্ববোধক জননীর ন্যায় সমস্ত বেদবিদ্যা লাভ করিয়াছিলেন ॥৬৪॥

अन्वयः—श्रितान्तकोदण्डमहोपकारी सन्ततं आहवस्य निष्पादकश्च सखा धनुर्वेदगतो बोधश्च तेषु परस्परं तुल्यः बभूव ॥६५॥

श्रितेति । श्रितः अवलम्बितः अन्तः समीपदेशो येन स श्रितान्तकः

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शब्दीयविद्या प्रतिहारिणीव
ज्ञानस्य सोपानमवेक्षयन्ती।
आख्यातनामप्रथिता निनाय
समस्तशास्त्रालयमध्यमेतान् ॥६६॥

---

दण्डेन शत्रुदमनेन महोपकारी, अन्यत्र श्रितः अवलम्बितः अन्तः समोपदेशो येन तेन सर्वदा सन्निहितेनेत्यर्थः कोदण्डेन धनुषा तत्कार्य्यसूचनेन महोपकारी, सन्ततं सर्वदा, आहवस्य युद्धस्य, निष्पादकः प्रकारज्ञापनेन साहाय्यकरणेन च सम्पादकश्च, सखा सहायः, धनुर्वेदगतो बोधो विद्या च तेषु कुमारेषु परस्परं तुल्यो बभूव।

अत्र प्रथमपादे सभङ्गश्लेषः, द्वितीयपादे चार्थश्लेषः, आर्थोपमा चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः। आर्थी पूर्णोपमेति केचित्।

सखिपक्षे श्रितान्तक इति बहुब्रीहौ कप्रत्ययः ॥६५॥

বাঙ্গালা—সর্ব্বদা সন্নিহিত, শত্রুদমনদ্বারা বিশেষ উপকারী এবং অশ্রান্ত যুদ্ধনিষ্পাদক, আর নিকটবর্ত্তী ধনুর কার্য্য উপদেশ করায় বিশেষ উপকারী এবং সর্ব্বদা যুদ্ধনিষ্পাদক ধনুর্বেদবিদ্যা সেই কুমারগণের পরস্পর সমান হইয়াছিল ॥৬৫॥

अन्वयः—आख्यातनामप्रथिता ज्ञानस्य सोपानं अवेक्षयन्ती शब्दीयविद्या प्रतिहारिणी इव एतान् समस्तशास्त्रालयमध्यं निनाय ॥६६॥

शब्दीयेति। आख्यातेन धातुप्रकरणेन नाम्ना नामप्रकरणेन च प्रथिता प्रसिद्धा, अन्यत्र आख्यातेन पुरगतसर्वलोकोच्चारितेन नाम्ना संज्ञया प्रथिता प्रसिद्धा, ज्ञानस्य शास्त्रबोधस्य गृहस्वरूपावगमस्य च सोपानं क्रमिकोन्नतिम्, आरोहणञ्च अवेक्षयन्ती प्रदर्शयन्ती शब्दीयविद्या व्याकरणज्ञानम्, प्रतिहारिणी द्वाररक्षिका इव, एतान् कुमारान्,



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

রসোদ্ধুরা ভাবগুণপ্রমুগ্ধা
সালঙ্কৃতী রীতিমতী নবীনা ।
অতীবচারুধ্বনিভাগমীষাং
জগ্রাহ কণ্ঠং কিল কাব্যবিদ্যা ॥৬৭॥

---

সমস্তশাস্ত্রম্ আলয়ো গৃহমিব তস্য মধ্যম্, নিনায় প্রাপয়ামাস ।
ব্যাকরণবিদ্যা হি সমস্তশাস্ত্রবোধোপায় ইতি ভাবঃ ।

অত্র লুপ্তোপমা সঙ্কীর্ণা শ্রৌতী পূর্ণোপমালঙ্কারঃ ।

"আরোহণং স্যাত্ সোপানম্" ইত্যমরঃ ॥৬৬॥

বাঙ্গালা—প্রসিদ্ধনামসম্পন্না প্রতিহারিণী যেমন সোপান ( সিঁড়ি ) দেখাইতে থাকিয়া গৃহস্থগণকে গৃহমধ্যে লইয়া যায়, সেইরূপ আখ্যাত-প্রকরণ ও নামপ্রকরণদ্বারা প্রসিদ্ধ ব্যাকরণবিদ্যা জ্ঞানের ক্রমিক উন্নতি দেখাইতে থাকিয়া, সেই কুমারগণকে সমস্ত শাস্ত্রমধ্যে লইয়া গিয়াছিল ॥৬৬॥

অন্বয়ঃ—রসোদ্ধুরা ভাবগুণপ্রমুগ্ধা সালঙ্কৃতিঃ রীতিমতী অতীবচারুধ্বনিভাক্ নবীনা চ কাব্যবিদ্যা অমীষাং কণ্ঠং জগ্রাহ কিল ॥৬৭॥

রসোদ্ধুরেতি । রসেন শৃঙ্গারাদিনা অনুরাগেণ চ উদ্ধুরা পরিপূর্ণা, ভাবৈঃ স্থায়িভাবাদিভিঃ লীলাবিলাসাদিভিশ্চ গুণৈঃ ওজঃপ্রভৃতিভিঃ সৌন্দর্য্যাদিভিশ্চ প্রমুগ্ধা মনোহরা, অলঙ্কৃতিভিঃ উপমাদিভিঃ কটক-কুণ্ডলাদিভিশ্চালঙ্কারৈঃ সহেতি সা, রীতয়ো গৌড়ীপ্রভৃতয়ঃ সদ্ব্যবহারাশ্চ অস্যাঃ সন্তীতি সা, অতীবচারু পরমরম্যং ধ্বনিং ব্যঙ্গ্যার্থং কণ্ঠস্বরঞ্চ ভজতে যা সা, নবীনা উভয়ত্রাপি নূতনা চ, কাব্যবিদ্যা কাব্যশাস্ত্রং তরুণী চ, অমীষাং কুমারাণাম্, কণ্ঠম্, জগ্রাহ সংববন্ধ আলিলিঙ্গ চ । কিলেতি...

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अज्ञानतामिस्रमलं हरन्ती
विकासयन्त्याननपङ्कजानि।
तेषां महाच्छे हृदयान्तरीक्षे
स्मृतिव्रतार्कच्छविराविरासीत् ॥६८॥

---

अत्र श्लिष्टविशेषणसाम्येन लिङ्गसाम्येन च काव्यविद्यायां युवति-व्यवहारसमारोपात् समासोक्तिरलङ्कारः ॥६७॥

বাঙ্গালা—রসে পরিপূর্ণা, ভাবে ও গুণে মনোহরা, অলঙ্কারসম্পন্না, রীতিযুক্তা, অতিসুন্দরধ্বনিশালিনী এবং নবীনা কাব্যবিদ্যা, ( কাব্যশাস্ত্র, যুবতী স্ত্রী ) কুমারগণের কণ্ঠস্থ হইয়াছিল ॥৬৭॥

अन्वयः—अज्ञानतामिस्रं अलं हरन्ती आननपङ्कजानि विकासयन्ती (च) स्मृतिव्रतार्कच्छविः महाच्छे तेषां हृदयान्तरीक्षे आविरासीत् ॥६८॥

अज्ञानेति। अज्ञानं सदाचाराद्यनवगमः तामिस्रम् अन्धकार इव तत्, अज्ञानमेव तामिस्रं तदिति वा, अलमत्यर्थम्, हरन्ती नाशयन्ती, आननानि पङ्कजानि पद्मानीव तानि, आननान्येव पङ्कजानि तानीति वा, विकासयन्ती च, स्मृतिव्रता स्मृतिशास्त्रज्ञानम् अर्कच्छविः सूर्य्य-द्युतिरिव सा, स्मृतिव्रता स्मृतिशास्त्रज्ञानमेव अर्कच्छविः सूर्य्यद्युतिः सेति वा, महाच्छे अतीवनिर्म्मले, तेषां कुमाराणाम्, हृदयमन्तरीक्षमिव तस्मिन्, हृदयमेव अन्तरीक्षं तस्मिन्निति वा, आविरासीत् प्रकाशितासीत्।

अत्र साधकबाधकप्रमाणाभावादुपमारूपकयोः सन्देहसङ्करोऽलङ्कार-स्तेकानुप्रासेन संसृज्यते ॥६८॥

বাঙ্গালা—অজ্ঞানান্ধকারনাশিনী এবং মুখপদ্মবিকাশিনী স্মৃতি-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दशाविशेषेण समाददाना
स्नेहं तमःशान्तिविधानदक्षा ।
द्रष्टव्यमर्थं परिदर्शयन्ती
प्रदीपिकेवास्थित नीतिरेषु ॥६९॥

---

শাস্ত্রজ্ঞানসূর্য্যদ্যুতি সেই কুমারগণের অতিনির্ম্মল হৃদয়-আকাশে প্রকাশ পাইয়াছিল ॥৬৮॥

अन्वयः—दशाविशेषेण स्नेहं समाददाना तमःशान्तिविधानदक्षा द्रष्टव्यं अर्थं परिदर्शयन्ती च नीतिः एषु प्रदीपिका इव अस्थित ॥६९॥

दशेति। दशाविशेषेण सङ्कटाद्यवस्थया हेतुना, स्नेहं वात्सल्यम् आत्मानं प्रति प्रभोरनुरागमित्यर्थः, समाददाना सम्यग्गृह्णती, अन्यत्र दशाविशेषेण उत्तमवर्त्तिकया, स्नेहं तैलादिकम्, समाददाना संगृह्णती, तमसः तमोगुणजनितकर्त्तव्यविषयकाज्ञानस्य, अन्यत्र अन्धकारस्य शान्तिविधाने निवृत्तिकरणे दक्षा निपुणा, द्रष्टव्यं ज्ञातव्यम्, अवलोकितव्यञ्च, अर्थं युद्धादौ कौशलादिकं घटपटादिकञ्च विषयम्, परिदर्शयन्ती स्वोपदेशेन बोधयन्ती स्वप्रभया ईक्षयन्ती च, नीतिः नीतिशास्त्रविद्या, एषु कुमारेषु, प्रदीपिका प्रदीप इव प्रदीपशिखेव वा, अस्थित सन्देहसमये निश्चयाय स्थितवती।

अत्र पूर्णोपमालङ्कारः। श्लेषोपमेति केचित्।

"दशावस्था दीपवर्त्त्योर्विस्रान्ते भूम्नि योषिति" इति मेदिनी। "स्नेहस्तैलादिकरसद्रव्ये स्यात् सौहृदेऽपि च" इति विश्वः। "तमो राहौ गुणे पापे ध्वान्ते" इति हेमचन्द्रः।

अस्थितेति "प्रतिज्ञानिर्णयप्रकाशनेषु स्था" इति निर्णयार्थे रुधादित्वात्तिष्ठतेरात्मनेपदम् ॥६९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

স্ববংশজাতান্ পরিচায়য়ন্তী
দক্ষান্বয়োৎকীর্ত্তনকারিণী চ।
এতান্ বভাজোপযমোপযোগ্যান্
পুরাণবিদ্যা ঘটকাবলীব ॥৭০॥

বাঙ্গালা—যাহা সঙ্কট অবস্থায় সকলেরই অনুরাগ আকর্ষণ করে, যাহা ভ্রমের নিবৃত্তি করিতে নিপুণ এবং যাহা জ্ঞাতব্যবিষয় জানাইয়া থাকে, দীপশিখার ন্যায় সেই নীতিবিদ্যা জ্ঞাতব্যনির্ণয় করিবার জন্য কুমারগণের হৃদয়ে অবস্থান করিত ॥৬৯॥

অন্বয়ঃ—স্ববংশজাতান্ পরিচায়য়ন্তী দক্ষান্বয়োৎকীর্ত্তনকারিণী চ পুরাণবিদ্যা ঘটকাবলী ইব উপযমোপযোগ্যান্ এতান্ বভাজ ॥৭০॥

স্ববংশেতি। স্ববংশে জাতানুৎপন্নান্ পুরুষান্ পরিচায়য়ন্তী ভাগবতাদ্যাত্মনা জ্ঞাপয়ন্তী, অন্যত্র স্বয়োঃ কন্যাবরয়োর্বংশজাতান্ পুরুষান্, পরিচায়য়ন্তী কুলগ্রন্থদর্শনেন জ্ঞাপয়ন্তী, দক্ষস্য ব্রহ্মণঃ পুত্রস্য দক্ষপ্রজাপতেঃ অন্যত্র আদিশূরেণ রাজ্ঞা বঙ্গেষ্বানীতানাং পঞ্চানাং ব্রাহ্মণানাং মধ্যে দক্ষনামকস্য ব্রাহ্মণস্য, অন্বয়োৎকীর্ত্তনকারিণী বংশপ্রকটনকর্ত্রী চ, পুরাণবিদ্যা, ঘটকানাং কন্যাবরয়োর্বিবাহ-যোজকানাম্, আবলী সমূহ ইব, উপযমোপযোগ্যান্ বিবাহযোগ্যান্, এতান্ কুমারান্, বভাজ আশ্রয়তি স্ম।

অত্রাপি পূর্ণোপমালঙ্কারঃ শ্রুত্যনুপ্রাসেন সংসৃজ্যতে ॥৭০॥

বাঙ্গালা—স্ববংশজাত পুরুষগণের পরিচয়দাতা এবং আদিশূরকর্ত্তৃক বঙ্গদেশে আনীত পঞ্চব্রাহ্মণের মধ্যে দক্ষনামক ব্রাহ্মণের উল্লেখকারী ঘটকগণের ন্যায়, স্ববংশজাত পুরুষগণের পরিচয়দাতা এবং দক্ষপ্রজা-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्या च बुद्धिश्च मनोज्ञता च
सापत्न्यवैरेण परस्परं ताः ।
स्वविप्रयोगे परयोगचिन्तां
कृत्वेव शश्वत् परिरेभिरे तान् ॥७१॥

उपेन्द्रः स्वसारं प्रसह्यापहर्त्ता
महस्वी मनस्वीति जानन् पुरैव ।
विशेषात् समीकं स रुक्मी शिशिक्षे
दुरन्तः प्रयत्नो हि गाढ़ोद्यमानाम् ॥७२॥

---

পতির বংশকীর্ত্তনকারী পুরাণশাস্ত্র বিবাহযোগ্য রাজকুমারগণকে আশ্রয় করিয়াছিল ॥৭০॥

**अन्वयः**—विद्या च बुद्धिश्च मनोज्ञता च ताः परस्परं सापत्न्यवैरेण स्वविप्रयोगे परयोगचिन्तां कृत्वा इव शश्वत् तान् परिरेभिरे ॥७१॥

विद्येति। विद्या च बुद्धिश्च, मनोज्ञता कान्तिश्च, ता एतास्तिस्र एव, परस्परम्, सापत्न्येन सपत्नीभावेन यद्वैरं विद्वेषस्तेन, स्वस्या आत्मनः विप्रयोगे विच्छेदकाले परयोरन्ययोः योगचिन्तां कुमारैरेव सह संयोगाशङ्कां कृत्वा इव, शश्वत् सर्व्वदैव, तान् कुमारान्, परिरेभिरे आलिलिङ्गुः आश्लिश्लियुरित्यर्थः ।

अत्र कार्य्येण विद्याबुद्धिमनोज्ञतासु नायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः, क्रियोत्प्रेक्षा च अनयोरङ्गाङ्गिभावेन सङ्करः ।

"परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्" इत्यमरः ॥७१॥

**বাঙ্গালা**—বিদ্যা, বুদ্ধি ও কান্তি এই তিনটীই পরস্পর সাপত্ন্য-বিদ্বেষনিবন্ধন নিজের বিচ্ছেদের সময়ে অন্য দুই জনের সংযোগ হইতে পারে এই আশঙ্কা করিয়াই যেন সর্ব্বদাই রাজকুমারগণকে আলিঙ্গন করিত ॥৭১॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जानन् स्वयं जनमुखाच्च निशम्य सम्यक्
विद्यां ननन्द नृपतिर्निजनन्दनानाम्।
विद्या सुतेषु रजनीषु च पौर्णमासी
च्चैत्रेषु शस्यमपि कस्य न तोषकारि॥७३॥

अन्वयः—महस्वी मनस्वी (च) स रुक्मी 'उपेन्द्रः प्रसह्य स्वसारं अपहर्त्ता' इति पुरा जानन् इव विशेषात् समीकं शिशिक्षे। गाढ़ोद्यमानां प्रयत्नो हि दुरन्तः॥७२॥

उपेन्द्र इति। महस्वी तेजस्वी, मनस्वी प्रशस्तमनाश्च, स रुक्मी, उपेन्द्रः कृष्णः, प्रसह्य बलेन, स्वसारं भगिनीं रुक्मिणीम्, अपहर्त्ता अपहरिष्यति, इति पुरा पूर्व्वम्, जानन्निव, विशेषात् विद्यान्तरेभ्य आधिक्यात्, समीकं युद्धम्, शिशिक्षे गुरुभ्यः शिक्षितवान्, रुक्मिणी-हरणनिवारणार्थमिति भावः। तथा च गाढ़ोद्यमानां दृढ़ाध्यवसायानां जनानाम्, प्रयत्नो हि, दुरन्तः सर्वथा दुर्निवारः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, क्रियोत्प्रेक्षा, छेकानुप्रासश्चेत्येतेषां परस्परनिरपेक्षतया संसृष्टिः।

"महस्तूत्सवतेजसोः" इत्यमरः।

भुजङ्गप्रयातं वृत्तम्—"भुजङ्गप्रयातं यकारैश्चतुर्भिः" इति लक्षणात्॥७२॥

বাঙ্গালা—'কৃষ্ণ বলপূর্ব্বক রুক্মিণীকে হরণ করিবেন' ইহা পূর্ব্বে জানিতে পারিয়াই যেন তেজস্বী ও প্রশস্তহৃদয় রুক্মী অন্যান্য বিদ্যা অপেক্ষা বিশেষভাবে যুদ্ধবিদ্যাই শিক্ষা করিয়াছিলেন। কারণ, দৃঢ়াধ্যবসায়ী লোকদিগের যত্নটা দুর্নিবারই হইয়া থাকে॥৭২॥

অন্বয়ঃ—नृपतिः स्वयं निजनन्दनानां विद्यां जानन् जनमुखात् सम्यक् निशम्य च ननन्द। सुतेषु विद्या, रजनीषु च पौर्णमासी, चैत्रेषु शस्यं अपि कस्य न तोषकारि (भवन्ति)॥७३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राजानीतान् निजपुरममून् सर्व्वदोर्ज्जन्यशून्यान्
धन्याः कन्याः परमभिमतान् वल्लभान् लेभिरे तान् ।
किन्तु चौणी यदि च न जड़ा सर्व्वथैवाभविष्यत्
राज्ञः पुत्रान् स्वयमपि तदा पाणिमग्राहयिष्यत् ॥७४॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
विद्याग्रहणं नाम द्वितीयः सर्गः ॥०॥

---

जानन्निति। नृपतिर्भीष्मकः, स्वयम्, निजनन्दनानां स्वपुत्राणाम्, विद्यां जानन्, जनमुखात् सम्यक् निशम्य श्रुत्वा च, ननन्द आनन्दमनुबभूव। तथा च सुतेषु पुत्रेषु विद्या, रजनीषु रात्रिषु च, पौर्णमासी पूर्णिमा, चैत्रेषु आत्मभूमिषु शस्यमपि च, एतानि कस्य जनस्य, तोषकाणि सन्तोषजनकानि, न भवन्ति। अपि तु सर्वस्यैव भवन्तीत्यर्थः।

अत्रापि पूर्ववदर्थान्तरन्यासः, प्रस्तुतायाः सुतगतविद्यायाः अप्रस्तुतयोश्च पूर्णिमाशस्ययोस्तोषकत्वरूपैकधर्म्माभिसम्बन्धात्तुल्ययोगिता च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः, सोऽपि पुनरुक्तेकानुप्रासेन संसृज्यते।

वसन्ततिलका वृत्तम्—"उक्ता वसन्ततिलका त-भ-जा गौ गः" इति लक्षणात् ॥७३॥

বাঙ্গালা—ভীষ্মকরাজা আপন পুত্রগণের বিদ্যার বিষয় নিজে জানিয়া এবং অন্যান্যের নিকট শুনিয়া বিশেষ আনন্দিত হইয়াছিলেন। কারণ, পুত্রগত বিদ্যা, রাত্রির মধ্যে পূর্ণিমা এবং ক্ষেত্রে শস্য, এগুলি কাহার সন্তোষ উৎপাদন না করে ? ॥৭৩॥

अन्वयः—धन्याः कन्याः राज्ञा निजपुरं आनीतान् सर्व्वदौर्ज्जन्यशून्यान् परं अभिमतान् तान् एतान् वल्लभान् लेभिरे। किन्तु चौणी यदि च सर्व्वथैव जड़ा न अभविष्यत्, तदा स्वयमपि राज्ञः पुत्रान् पाणिं अग्राहयिष्यत् ॥७४॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संक्षिप्य कुमाराणां परिणयमाह राज्ञेति । धन्याः पुण्यवत्यः, कन्याः, राजा भीष्मकेण, निजपुरम्, आनीतान्, सर्वदौर्जन्यशून्यान्, परमत्यन्तम्, अभिमतान्, तान्, एतान् कुमारान्, वल्लभान् दयितान् पतीन्, लेभिरे प्रापुः । किन्तु, क्षौणी पृथिवी, यदि च सर्वथैव जड़ा अचेतना, न अभविष्यत् । तदा स्वयमपि आत्मनैव, राज्ञो भीष्मकस्य पुत्रान्, पाणिम् अग्राहयिष्यत् ।

अत्र क्षौण्या पाणिग्राहणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्ति-रलङ्कारश्छेकानुप्रासेन संसृज्यते ।

"राज्ञि राट्, पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इत्यमरः ।

मन्दाक्रान्ता वृत्तम् ॥७४॥

इति श्रीहेमचन्द्रतर्कवागीशविरचितायां रुक्मिणीहरणटीकायां विचित्रायां द्वितीयः सर्गः ॥०॥

বাঙ্গালা—রাজা কুমারগণকে আপন রাজধানীতে আনয়ন করিলে, নানাদেশীয় পুণ্যবতী কন্যারা সর্ব্বদুর্জনতাশূন্য এবং অত্যন্ত অভিমত সেই কুমারগণকে পতিরূপে লাভ করিয়াছিলেন। কিন্তু পৃথিবী যদি সর্ব্বপ্রকারেই অচেতনা না হইত, তাহা হইলে নিজেই রাজপুত্রগণকে পাণিগ্রহণ করাইত ॥৭৪॥

———०———

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# तृतीयः सर्गः ।

——:०:——

वसुन्धराधीशधुरन्धरः परं
सुताभिषेकार्थमचिन्तयत् कियत् ।
स्वयं हि विज्ञो विविनक्ति शक्तितः
प्रवक्ति बन्धून् विदधात्यथो विधिम् ॥१॥

---

अन्वयः—परं वसुन्धराधीशधुरन्धरः सुताभिषेकार्थं कियत् अचिन्तयत् । हि विज्ञः स्वयं शक्तितः विविनक्ति, अथो बन्धून् प्रवक्ति, अथो विधिं विदधाति ॥१॥

अथ ज्येष्ठकुमारस्य रुक्मिणो यौवराज्याभिषेकं प्रस्तौति वसुन्धरेति । परं कुमाराणां परिणयानन्तरम्, वसुन्धराधीशानां भूपतीनां धुरन्धरः श्रेष्ठो भीष्मकः, सुतस्य ज्येष्ठपुत्रस्य रुक्मिणो यौवराज्ये अभिषेकार्थम्, कियदचिन्तयत् । हि यस्मात्, विज्ञो जनः, स्वयमात्मना, प्रथमं शक्तितः शक्त्यनुसारेण, विविनक्ति कर्त्तव्यं विचारयति, अथो अनन्तरम्, बन्धून् प्रवक्ति, बन्धुभिः सह तत्कर्त्तव्यं पर्य्यालोचयतीत्यर्थः, अथो ततपरम्, विधिं तदालोचितक्रियाम्, विदधाति निष्पादयति ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ।

अस्मिन् सर्गे वंशस्थविलं वृत्तम्—"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ॥१॥

বাঙ্গালা—পুত্রগণের বিবাহ হইয়া গেলে পর, রাজশ্রেষ্ঠ ভীষ্মক

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुतस्य मे नव्यवधूर्विनाऽवनीं
विराजते नापि विवाहिता हिता।
दिवो न चेच्चन्दति चन्द्रिका तदा
न विद्यते हृद्यतमा तमस्विनी ॥२॥

कृते च राज्यान्नहि केवलाबला-
समाश्रितो राजजनो विराजते।
विना हि वादेन मनीषिमण्डलीं
न पण्डितो मण्डयते वितण्डया ॥३॥

---

রুক্মীর যৌবরাজ্যাভিষেকের বিষয়ে কিছু চিন্তা করিলেন। কারণ, অভিজ্ঞ লোক প্রথমে কর্ত্তব্যবিষয়ে শক্তি অনুসারে নিজে বিবেচনা করেন, পরে বন্ধুদিগকে তাহা বলেন এবং তৎপরে সেই কার্য্য সম্পাদন করিয়া থাকেন ॥১॥

अन्वयः—अवनीं विना विवाहिता हिता नव्यवधूः अपि मे सुतस्य न विराजते। चेत् दिवः चन्द्रिका न चन्दति, तदा तमस्विनी हृद्यतमा न विद्यते ॥२॥

अथ पञ्चदशभिः श्लोकै राज्ञश्चिन्ताप्रकारमाह सुतस्येति। अवनीं भूमिं राज्यं विना; विवाहिता सञ्जातविवाहा, हिता हितैषिणी, नव्यवधूरपि, मे मम, सुतस्य ज्येष्ठपुत्रस्य रुक्मिणः, न विराजते न शोभते। राज्याभावेन महिषीत्वाभावादिति भावः। तथाहि, चेद्यदि, दिवो गगनस्य, चन्द्रिका ज्योत्स्ना, न चन्दति न दीप्यते, तदा तमस्विनी रात्रिः, हृद्यतमा सौन्दर्य्येण प्रियतमा, न विद्यते न भवति।

अत्र साधर्म्म्येण दृष्टान्तोऽलङ्कारश्छेकानुप्रासेन संसृज्यते ॥२॥

বাঙ্গালা—রাজ্য ব্যতীত বিবাহিতা এবং হিতৈষিণী নবীনা বধূও আমার পুত্র রুক্মীর পক্ষে শোভা পাইতেছে না। আকাশের জ্যোৎস্না যদি প্রকাশ না পায়, তবে রাত্রি মনোহর হয় না ॥২॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जनोऽतियोग्योऽपि न योग्यभोग्यभाक्
न कर्त्तुमिष्टं क्षमते क्षमातले ।
प्रवर्त्तमानोऽन्तरपूर्वपर्वते
विभाकरोऽप्राप्य नभो न भासते ॥४॥

---

**अन्वयः**—राज्यात् ऋते च केवलाबलासमाश्रितः राजजनः नहि विराजते । हि पण्डितः वादेन विना वितण्डया मनीषिमण्डलीं न मण्डयते ॥३॥

ऋत इति । राज्यादृते राज्यं विना च, केवलामेकाम् अबलां भार्य्यां समाश्रितः, राजजनो राजत्वयोग्यो लोकः, नहि विराजते । राज्याभावे राजत्वस्यैवाभावादिति भावः । हि तथाहि, पण्डितः, वादेन तत्त्वनिर्णायकवाक्येन विना, वितण्डया स्वपक्षस्थापकपरपक्षनिरासक-वाक्येन, मनीषिमण्डलीं विद्वत्सभाम्, तद्गतमात्मानमित्यर्थः, न मण्डयते न शोभयति ।

अत्रापि साधर्म्म्येण दृष्टान्तोऽलङ्कारः, छेकानुप्रासो वृत्त्यनुप्रास-श्चेत्येतेषां संसृष्टिः ।

वादवितण्डयोर्विस्तरस्तु न्यायदर्शने गौतमसूत्रे, "वादः प्रवदतामहम्" इति भगवद्गीतावाक्यव्याख्याने श्रीधरस्वामिटीकायाञ्च द्रष्टव्यः ॥३॥

**বাঙ্গালা**—রাজলোক রাজ্য ব্যতীত কেবল ভার্য্যাদ্বারা শোভা পাইতে পারেন না। কারণ পণ্ডিতলোক বাদবিচার ব্যতীত কেবল বিতণ্ডাদ্বারা পণ্ডিতসভায় নিজের শোভা জন্মাইতে সমর্থ হন না ॥৩॥

**अन्वयः**—अतियोग्योऽपि जनः योग्यभोग्यभाक् न (सन्) क्षमातले इष्टं कर्त्तुं न क्षमते । अन्तरपूर्व्वपर्वते प्रवर्त्तमानः विभाकरः नभः अप्राप्य न भासते ॥४॥

जन इति । कार्य्यमात्रे अतियोग्योऽपि जनः, योग्यं भोग्यं स्थानं भजत इति योग्यभोग्यभाक्, न सन्, क्षमातले भूतले, इष्टं वाञ्छितं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विहाय राज्यं किल राजसम्भवं
गुणैरनेकैरपि रीतिभिर्युतम्।
कृती विनालङ्कृतिमुत्तमां जनः
कवेर्महाकाव्यमिवावमन्यते ॥५॥

---

विषयम्, कर्त्तुं न क्षमते न शक्नोति, उपयुक्तक्षेत्रालाभादित्याशयः।
तथा च पूर्वपर्वतस्य उदयाचलस्य अन्तरं मध्यदेश इति अन्तरपूर्वपर्वत-स्तस्मिन्, प्रवर्त्तमानस्तिष्ठन्, विभाकरः सूर्य्यः, नभो गगनम्, अप्राप्य, न भासते न दीप्यते, गगनस्यैव तद्भासनस्थानत्वादिति भावः।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारो वृत्त्यनुप्रास-च्छेकानुप्रासाभ्यां संसृज्यते ॥४॥

বাঙ্গালা।—অতিযোগ্য লোকও যদি উপযুক্ত ক্ষেত্র না পায়, তবে সে পৃথিবীতে কোন অভীষ্টকার্য্যই করিতে সমর্থ হয় না। উদয়পর্ব্বতের অভ্যন্তরবর্ত্তী সূর্য্য আকাশে না আসিয়া প্রকাশ পাইতে পারেন না ॥৪॥

अन्वयः—कृती जनः राजसम्भवं अनेकैः गुणैः रीतिभिः (च) युतं अपि राज्यं विहाय (सन्तं) उत्तमां अलङ्कृतिं विना कवेः महाकाव्यं इव अवमन्यते ॥५॥

विहायेति। कृती लोकचरित्रज्ञाने काव्यज्ञाने च निपुणो जनः, राजसम्भवं राजपुत्रम्, अनेकैर्गुणैः शौर्य्यवीर्य्यादिभिः ओजःप्रसादा-दिभिश्च, रीतिभिः सदाचारैः गौड़ीप्रभृतिभिश्च, युतं समन्वितमपि, राज्यं विहाय, सन्तमिति शेषः, उत्तमाम्, अलङ्कृतिम् अलङ्कारं विना, कवेर्महाकाव्यमिव, अवमन्यते अवजानाति।

अत्र च्छेकानुप्राससंसृष्टः पूर्णोपमालङ्कारः ॥५॥

বাঙ্গালা—রাজপুত্র অনেকগুণসম্পন্ন ও সদাচারযুক্ত হইয়াও যদি

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पिता च दद्यादुपयुक्तपुत्रके
भरं कियन्तं कमपि स्वयं वहेत् ।
तथाहि वेदः स्मृतिशास्त्रसञ्चये
स्ववाच्यशेषं बहुमर्थमार्पयत् ॥६॥
जरन्नहन्त्वास्मि जरातुरा तनुः
बलञ्च जातं क्षितिरक्षणाक्षमम् ।
धुरन्धरे कोढ़धुरा वसुन्धरा
न तत् स्थिरं स्थास्यति मे स्थिरापि सा ॥७॥

---

राज्यलाभ না করেন, তবে উত্তমালঙ্কারবিহীন কবির মহাকাব্যের ন্যায় তিনি কৃতীলোকের নিকট অবজ্ঞার পাত্র হইয়া থাকেন ॥৫॥

अन्वयः—पिता उपयुक्तपुत्रके कियन्तं भरं दद्यात् कथमपि च स्वयं वहेत् । तथाहि वेदः स्मृतिशास्त्रसञ्चये स्ववाच्यशेषं बहुं अर्थं आर्पयत् ॥६॥

पितेति । किञ्चेति चार्थः, पिता, उपयुक्तपुत्रके, कियन्तं भरं कार्य्यभारम्, दद्यात्, कमपि च भरं कार्य्यभारम्, स्वयमात्मना, वहेत् । तथाहि, वेदः, स्मृतिशास्त्राणां सञ्चयः समूह इति तस्मिन्, स्ववाच्यशेषं निजवक्तव्यावशिष्टम्, बहुं प्रचुरम्, अर्थं विषयम्, आर्पयत् अर्पितवान् । "अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः । अर्घं दद्युरगस्त्याय गौड़देशनिवासिनः ॥" इत्यादिवदिति भावः ।

अत्रापि सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ।

"पुत्रक" इत्यनुकम्पायां कप्रत्ययः ॥६॥

বাঙ্গালা—পিতা উপযুক্ত পুত্রের উপরে কিছু ভার দিবেন এবং কিছু নিজে বহন করিবেন। বেদ স্মৃতিশাস্ত্রের উপরে নিজবক্তব্যের অবশিষ্ট বহু বিষয় অর্পণ করিয়াছে ॥৬॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जनेन जीर्णेन्द्रियशालिना सता
प्रजावतीं कारयितुं विशक्तिना ।
धरावधानात् परिरक्षितापि असौ
छलेन वीरं परमेव गच्छति ॥८॥

---

अन्वयः—अहञ्च जरन् अस्मि, तनुः ( च ) जरातुरा, बलञ्च क्षितिरक्षणाक्षमं जातं । तत् धुरन्धरैकोढधुरा सा वसुन्धरा स्थिरापि मे स्थिरं न स्थास्यति ॥७॥

स्वपक्षे चिन्तामाह जरन्निति । अहञ्च जरन् वृद्धः अस्मि, तनुः शरीरञ्च जरया वार्द्धकेन आतुरा पीड़िता, बलं दैहिकी मानसिकी शक्तिश्च, क्षितिरक्षणे राज्यपालने, अक्षममशक्तं जातम् । तत्तस्मात्, धुरन्धरेण राज्यभारवहनक्षमेण जनेन एकं केवलम् ऊढ़ा धृता धूर्भारो यस्याः सा तथोक्ता, सा प्रसिद्धा, वसुन्धरा पृथिवी, स्थिरापि अचलापि, मे ममाधिकारे, स्थिरं यथा स्यात्तथा, न स्थास्यति । ममाक्षमतया शत्रुभिर्ग्रहणावश्यम्भावादिति भावः ।

अत्र स्थिरत्वरूपे कारणे सत्यपि स्थिरस्थितिरूपतत्कार्य्याभावा-द्विशेषोक्तिरलङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ।

"जीनो जीर्णो जरन्नपि" इत्यमरः ।

धुरेति "धुरनक्षस्य च" इति राजादित्वादत्प्रत्यये "स्त्रियामादा" इति आप्रत्ययः ॥७॥

বাঙ্গালা—আমি বৃদ্ধ হইয়াছি, আমার শরীরও জরাজীর্ণ হইয়া গিয়াছে এবং দেহ-মনের শক্তিও রাজ্য রক্ষায় অক্ষম হইয়া পড়িয়াছে। সুতরাং রাজ্যভার বহনসমর্থ পুরুষেরাই কেবল যাহার ভারবহন করিয়া আসিতেছেন, সেই পৃথিবী (রাজ্য) অচলা হইয়াও আমার অধিকারে স্থিরভাবে থাকিবে না ॥৭॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

असौ पतिप्रेम नहि व्यपेक्षते
नवा स्मरत्याद्यभवां कृतज्ञताम् ।
विकृष्यमाणा पुरुषैर्बलात् परैः
भवेच्च तेष्वेव मुदा वशंवदा ॥८॥

अन्वयः—जनेन जीर्णेन्द्रियशालिना प्रजावता कारयितुं विशक्तिना ( च ) सता अवधानात् परिरक्षिता अपि असौ धरा छलेन परं वीरमेव गच्छति ॥८॥

जनेनेति । जनेन, जीर्णैः स्वस्वकार्य्याक्षमैः इन्द्रियैर्नयनादिभिः शालते युज्यत इति तेन, अन्यत्र जीर्णेन्द्रियेण क्षीणमेहनेन शालत इति तेन, अतएव प्रजावतीं प्रशस्तजनयुक्तां सन्तानयुक्ताञ्च, कारयितुम्, विगता शक्तिः सामर्थ्यं यस्य तेन विशक्तिना च सता, अवधानात् चित्तैकाग्र्यात्, परिरक्षिता अपि, असौ धरा पृथिवी भार्य्या च, छलेन, परमन्यम्, वीरं बलवन्तं जनमेव, गच्छति आश्रयते ।

अत्र प्रजाजननशक्त्यभावं प्रति जीर्णेन्द्रियशालिनेति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, श्लिष्टविशेषणसाम्येन कार्य्यसाम्येन च धरायां स्त्रीव्यवहारसमारोपात् समासोक्तिश्चानयोरङ्गाङ्गिभावेन सङ्करः ।

"प्रजा स्यात् सन्ततौ जने" इत्यमरः ।

प्रजावतीमिति पक्षे प्रशंसायां वन्तुः ॥८॥

বাঙ্গালা—ইন্দ্রিয়ের জীর্ণতাবশতঃ প্রজাবর্গের উন্নতিবিধানে অসমর্থ মানুষ যদি বিশেষ সাবধানতা সহকারেও রক্ষা করিতে থাকে, তথাপি এই পৃথিবী ছলপূর্ব্বক অন্য বীরের হস্তগত হইয়া যায় ॥৮॥

अन्वयः—असौ पतिप्रेम नहि व्यपेक्षते, आद्यभवां कृतज्ञतां वा न स्मरति, परैः पुरुषैः बलात् विकृष्यमाणा (सती) तेष्वेव मुदा वशंवदा भवेच्च ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विलक्षणं रज्यति रक्षणक्षणे
विचक्षणा पक्षवधूरपि प्रिये ।
इयन्तु रक्षाक्षण एव दुष्कृता
वसुन्धरासूयति हन्त पुष्यते ॥१०॥

असाविति । असौ धरा स्त्री च, पतिप्रेम राजवात्सल्यं भर्त्तृप्रणयञ्च, नहि व्यपेक्षते, आद्यभवां प्रथमजाताम्, कृतज्ञतां वा न स्मरति, तत्-स्मरणेन तदनुरूपं कार्य्यं न करोतीत्यर्थः । परैः पुरुषेन्द्रैः पुंभिश्च, बलात् विकृष्यमाणा आकृष्यमाणा सती, तेषु परपुरुषेष्वेव, मुदा हर्षेण, वशंवदा अधीना, भवेच्च ।

अत्रापि कार्य्यसाम्येन धरायां कुलटाव्यवहारसमारोपात् समासोक्ति-रलङ्कारो वृत्त्यनुप्रासश्चानयोः संसृष्टिः ॥९॥

বাঙ্গালা—এই পৃথিবী পতিপ্রণয়ের অপেক্ষা রাখে না, কিংবা পূর্ব্বজাত কৃতজ্ঞতা স্মরণ করে না এবং পরপুরুষ আসিয়া বলপূর্ব্বক আকর্ষণ করিলে আনন্দ সহকারে তাহারই বশীভূত হইয়া থাকে ॥৯॥

अन्वयः—विचक्षणा पक्षवधूरपि रक्षणक्षणे प्रिये विलक्षणं रज्यति । हन्त ! इयं दुष्कृता वसुन्धरा तु रक्षाक्षणे एव पुष्यते असूयति ॥१०॥

विलक्षणमिति । विचक्षणा कान्तया, पक्षवधूरन्यापि, रक्षणक्षणे रक्षासमये, प्रिये पत्यौ, विगतं लक्षणम् अननुरक्तत्वचिह्नं यस्मिन् कर्म्मणि तद्यथा तथा, रज्यति अनुरक्ता तिष्ठति । हन्त खेदे, इयं दुष्कृता दुःखेनायत्तीकृता, वसुन्धरा भूमिस्तु, रक्षाक्षणे रक्षणसमय एव, पुष्यते पोषणं कुर्वते जनाय, असूयति दोषाविष्कारं करोतीव, पराश्रयो-द्यमादिति भावः ।

अत्र पक्षवध्वपेक्षया वसुन्धराया न्यूनत्ववर्णनाद्व्यतिरेकालङ्कारः,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जरन्तमुद्वीक्ष्य दुरन्तशत्रवः
समीहितारः किल जेतुमेव माम् ।
गुहागतो ध्वान्तचयो दिवातने
दिवः पतङ्गं निपतन्तमिच्छति ॥११॥

प्रतीयमाना क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनर्वृत्त्यनुप्रासेन संसृज्यते ।

पुष्णात इति "क्रुधद्रुहेर्ष्ये"त्यादिना सम्प्रदानत्वाच्चतुर्थी ॥१०॥

বাঙ্গালা—কালজ্ঞা বেশ্যাও রক্ষা করিবার সময়ে পতির প্রতি বিশেষ অনুরক্ত থাকে; কিন্তু দুঃখে অধিকৃত এই পৃথিবী রক্ষা করিবার সময়েই যেন রক্ষকের প্রতি অসূয়া প্রকাশ করে ॥১০॥

अन्वयः—दुरन्तशत्रवः मां जरन्तं उद्वीक्ष्य जेतुमेव समीहितारः किल । दिवातने गुहागतः ध्वान्तचयः पतङ्गं दिवः निपतन्तं इच्छति ॥११॥

जरन्तमिति । दुरन्ता दुर्द्धर्षाश्च ते शत्रवश्चेति ते दुरन्तशत्रवः, माम्, जरन्तं वृद्धम्, उद्वीक्ष्य अवलोक्य, जेतुमेव, समीहितारः चेष्टिष्यन्ते किल । दिवातने दिवसचर्य्ये, गुहागतः पर्वतकन्दरस्थः, ध्वान्तचयः अन्धकारसमूहः, पतङ्गं सूर्य्यम्, दिवो गगनात्, निपतन्तमिच्छतीव, तस्य शत्रुरूपत्वादित्याशयः ।

अत्र दृष्टान्तालङ्कारः, प्रतीयमाना क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः, छेकानुप्रासश्चेति समुदाये संसृष्टिः ।

"पतङ्गौ पक्षिसूर्य्यौ च" इत्यमरः ।

दिवा वर्त्तत इति दिवातनः "सायं चिरम्" इत्यादिना तनट्प्रत्ययः ।
अत्र अवाच्य दिनरात्र्युभयवृत्तिकतया सङ्गच्छते ॥११॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अतीतवान् षट् परिपन्थिमन्थनं
तथापि तेषां विषयं विशामि चेत्।
तदा क्षमेरन्न समक्षमागतं
विधुं तुदत्येव विधुन्तुदो न किम् ॥१२॥

বাঙ্গালা—দুর্দ্ধর্ষ শত্রুরা আমাকে বৃদ্ধ দেখিয়া নিশ্চয়ই জয় করিবার চেষ্টা করিবে। কারণ, দিনের বেলায় পর্ব্বতগুহাস্থিত অন্ধকারসমূহ যেন আকাশ হইতে সূর্য্যের পতন কামনা করে বলিয়া মনে হয় ॥১১॥

अन्वयः—षट् परिपन्थिमन्थनं अतीतवान्, तथापि तेषां विषयं चेत् विशामि, तदा समक्षं आगतं (मां) न क्षमेरन्। विधुन्तुदः समक्षमागतं विधुं न किं तुदत्येव ॥१२॥

अतीतवानिति। षसां परिपन्थिनाम् अन्तःशत्रूणां काम-क्रोध-लोभ-मोह-मद-मात्सर्य्याणाम्, मन्थनं पीड़नम्, अतीतवान् अतिक्रान्तवान्, वार्द्धक्यागमेन क्रमशो विषयवर्जनादिति भावः। तथापि, तेषां षट्परिपन्थिनाम्, विषयं गोचरम्, चेद्यदि, विशामि राज्यशासनार्थं प्रत्यावृत्त्य गच्छामि, तदा समक्षमागतं माम्, न क्षमेरन् ते षट् परिपन्थिनो न वर्जयेयुरित्यर्थः। तथा च विधुन्तुदो राहुः, समक्षमागतं विधुं चन्द्रम्, न किम्, तुदत्येव? ग्रहणेन व्यथयत्येव? अपि तु व्यथयत्येवेति तात्पर्य्यम्।

अत्रापि साधर्म्म्येण दृष्टान्तालङ्कारश्छेकानुप्रासेन संसृज्यते।

"अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः" इति "तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः" इति चामरः।

विधुं तुदतीति विधुन्तुदः, "विध्वरुषोस्तिलेषु तुद" इति तुदतेः खश्प्रत्यये "अरुर्द्विषदजन्तस्य मुम्" इति मकारागमः ॥१२॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

নিমীল্য নেত্রে তুলসীতলস্থিতে
ময়ি ক্ষণং বা হরিভারতীরতে ।
সমন্ততঃ সন্ততমন্তিকে পুরঃ
পুরৈত্য দুঃখী সুজনো জনিষ্যতি ॥১৩॥

বাঙ্গালা—আমি বৃদ্ধভাবশতঃ ক্রমে ছয়টা অন্তঃশত্রুর উৎপীড়ন অতিক্রম করিয়াছি, তথাপি যদি পুনরায় সেগুলির গোচরীভূত হই, তবে তাহারা সমীপাগত আমাকে ক্ষমা করিবে না। কারণ, চন্দ্র সমক্ষে আসিলে রাহু তাঁহাকে গ্রাস করিয়া ব্যথিত করে না কি ? ॥১২॥

অন্বয়ঃ—ময়ি ক্ষণং নেত্রে নিমীল্য তুলসীতলস্থিতে হরিভারতীরতে বা (সতি) পুরা সুজনঃ সমন্ততঃ পুরঃ (চ) অন্তিকে এত্য সন্ততং (এব) দুঃখী জনিষ্যতি ॥১৩॥

নিমীল্যেতি। ময়ি ক্ষণম্, নেত্রে নিমীল্য, তুলসীতলস্থিতে হরিধ্যান-পরায়ণে ইত্যর্থঃ। ক্ষণং হরিভারতীরতে হরিকথাসংসক্তে বা সতি, পুরা আগামিনি কালে, সুজনঃ, সমন্ততঃ সর্বাসু দিক্ষু, পুরঃ অগ্রতশ্চ, অন্তিকে এত্য আগত্য, সন্ততং সর্বদৈব, দুঃখী, জনিষ্যতি ভবিষ্যতি, বিষয়ান্তরনিবিষ্টচিত্তস্য মম সকাশাত্, লব্ধব্যর্থালাভাদিতি ভাবঃ।

অত্র চ্ছেকানুপ্রাসবৃত্ত্যনুপ্রাসয়োঃ সংসৃষ্টিরলঙ্কারঃ।

"নিকটাগামিকে পুরা" ইত্যমরঃ।

জনিষ্যতীতি "জন জননে" ইত্যস্য রূপম্ ॥১৩॥

বাঙ্গালা—পরবর্ত্তীকালে আমি নয়ন মুদ্রিত করিয়া ক্ষণকাল তুলসীবৃক্ষের তলে থাকিলে, কিংবা হরিকথায় আসক্ত রহিলে, সজ্জনেরা আমার সকল দিকে কিংবা সম্মুখে নিকটে আসিয়া (আমার নিকট লব্ধব্যবিষয় লাভ করিতে না পারায়) সর্ব্বদাই দুঃখিত হইবেন ॥১৩॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अधीतविद्या कुमतौ न विद्यते
न कृष्णपक्षे हरिणाङ्कवर्द्धनम्।
गतं वयो न प्रतिवर्त्तते पुनः
न चापि वृद्धे पुन ऋद्धिवासना ॥१४॥

न मोहितो वासनयानया पुनः
भवाम्यभव्यस्य भवस्य नश्यतः।
समस्तमस्ताचललीनमौलिना
मरीचिमन्वेति विरोचनो न च ॥१५॥

---

अन्वयः—अधीतविद्या कुमतौ न विद्यते, हरिणाङ्कवर्द्धनं कृष्णपक्षे न (भवति)। गतं वयः पुनर्न प्रतिवर्त्तते। वृद्धे चापि पुनः ऋद्धिवासना न (युज्यते) ॥१४॥

अधीतेति। अधीतविद्या, कुमतौ दुर्मेधसि जने, न विद्यते न तिष्ठति ; हरिणाङ्कस्य चन्द्रस्य वर्द्धनं वृद्धिः, कृष्णपक्षे, न भवति। गतम् अतीतं वयश्च, पुनर्न प्रतिवर्त्तते, वृद्धे चापि जने, पुनः ऋद्धिवासना सम्पत्तिलालसा, न युज्यते इति शेषः।

अत्र त्रय एव दृष्टान्तालङ्काराः, छेकानुप्रासश्चेति संसृष्टिः ॥१४॥

বাঙ্গালা—মেধাশূন্যলোকে অধীতবিদ্যা থাকে না, কৃষ্ণপক্ষে চন্দ্রের বৃদ্ধি হয় না, অতীত বয়স আবার ফিরিয়া আসে না এবং বৃদ্ধলোকের পুনরায় সমৃদ্ধি কামনা সঙ্গত হয় না ॥১৪॥

अन्वयः—अभव्यस्य नश्यतः (च) भवस्य अनया वासनया पुनः मोहितः न भवामि। विरोचनः अस्ताचललीनमौलिना समस्तं मरीचिं न च अन्वेति ॥१५॥

नेति। अभव्यस्य अमङ्गलरूपस्य, नश्यतश्च, भवस्य संसारस्य, अनया विषयसम्बन्धिन्या, वासनया कामनया, पुनर्मोहितो न भवामि। तथाहि,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इहास्मि साम्भोनिधिमेदिनीशिता
सुते च राज्ञि प्रभवामि तत्पिता।
तदेव राज्यं वितरामि सूनवे
निजोन्नतिं साधु सुधीर्जहाति न ॥१६॥

विरोचनः सूर्य्यः, अस्ताचले लीनः प्रविष्टो यो मौलिः शिरोभागस्तेन, समस्तम्, मरीचिं किरणम्, न च नैव अन्वेति पूर्ववद्गृह्णाति। ममापि तथैव चरमावस्थायामवस्थानमिति भावः।

अत्रापि पूर्ववद्दृष्टान्तोऽलङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासश्चेति संसृष्टिः।

"भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्" इत्यमरः। "भवः संसारसम्प्राप्तिश्रेयःशङ्करजन्मसु" इति विश्वः ॥१५॥

বাঙ্গালা—অমঙ্গলময় ও বিনশ্বর সংসারের এই বাসনায় আর মোহিত হইব না। কারণ, সূর্য্য অস্তাচলপ্রবিষ্ট মস্তকদ্বারা পূর্ব্বের ন্যায় আর সমস্ত কিরণ গ্রহণ করেন না ॥১৫॥

अन्वयः—इह साम्भोनिधिमेदिनीशिता अस्मि, सुते राज्ञि च तत्पिता प्रभवामि। तदेव सूनवे राज्यं वितरामि। सुधीः निजोन्नतिं साधु न जहाति ॥१६॥

स्वचिन्तामुपसंहरति इहेति। इह इदानीम्, अम्भोनिधिभिः समुद्रैः सहेति साम्भोनिधिर्या मेदिनी पृथिवी तस्या ईशिता पतिरस्मि, सुते पुत्रे, राज्ञि राजनि सति च, तस्य राज्ञः पिता, ततोऽपि महागौरवास्पदमित्यर्थः, प्रभवामि। तत्तस्मादेव हेतोः सूनवे पुत्राय रुक्मिणे, राज्यं वितरामि ददामि। तथाहि सुधीः सुबुद्धिर्जनः, निजोन्नतिम्, साधु सम्यक्, न जहाति न त्यजति। उपायासत्त्वे तु असम्यक् जहात्येवेति भावः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स मन्त्रयन्नित्थमथान्तरात्मना
न्यवीविदत् स्वञ्च निमन्त्र्य मन्त्रिणम् ।
समुद्रयोः सम्मुखवाहिनोरिव
तरङ्गवृन्दं सुखमैधतानयोः ॥१७॥

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, छेकानु-प्रासश्चेत्यनयो संसृष्टिः ।

"ईश्वरः पतिरीशिता" इत्यमरः ॥१६॥

বাঙ্গালা—আমি এখন সসাগরা পৃথিবীর অধীশ্বর আছি, আর পুত্র রাজা হইলে তাহার পিতা হইব, অতএব পুত্রকে রাজ্য দান করিব। কারণ, বুদ্ধিমান্ লোক নিজের সম্যক্ পরিত্যাগ করেন না ॥১৬॥

अन्वयः—अथ स अन्तरात्मना इत्थं मन्त्रयन् च मन्त्रिणं निमन्त्र्य स्वं न्यवीविदत् । सम्मुखवाहिनोः समुद्रयोः तरङ्गवृन्दमिव अनयोः सुखं ऐधत ॥१७॥

स इति । अथ अनन्तरम्, स भीष्मकः, अन्तरात्मना मनसा, इत्थं पूर्वोक्तप्रकारम्, मन्त्रयन् पर्य्यालोचयंश्च सन्, मन्त्रिणम्, निमन्त्र्य आहूय, स्वं प्रागुक्तं निजमभिप्रायम्, न्यवीविदत् विज्ञापितवान् । तदा च सम्मुखे वहतो जलगतिवैचित्र्यादावर्त्तसन्निधानाद्वा प्रसरत इति तयोः समुद्रयोः, तरङ्गवृन्दमिव अनयो राजमन्त्रिणोः, सुखम् आनन्दः, ऐधत अवर्द्धत ।

अत्र छेकानुप्राससंसृष्टा श्रौतोपमालङ्कारः ॥१७॥

বাঙ্গালা—তদনন্তর রাজা ভীষ্মক মনে মনে এইরূপ পর্য্যালোচনা করিতে থাকিয়া মন্ত্রীকে ডাকিয়া নিজের অভিপ্রায় জানাইলেন। তখন পরস্পর সম্মুখবর্ত্তী দুইটা সমুদ্রের তরঙ্গসমূহের ন্যায় রাজা ও মন্ত্রী দুই জনেরই আনন্দ বৃদ্ধি পাইল ॥১৭॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदैव दैवेन तयोश्च यत्नतः
सुताभिषेको द्रुतभावुकोऽभवत् ।
जलेऽनुकूले पवने च पृष्ठगे
तरिप्रयाणे न भवेद्विलम्बनम् ॥१८॥
समुद्यतोरिङ्गितमात्रतस्तयोः
जनाः समीयुर्बहवो विधित्सवः ।
कटाक्षमात्रेण करोति यत् प्रभुः
न तद्दरिद्रस्य हृदोऽपि गोचरः ॥१९॥

---

**अन्वयः**—तदैव दैवेन तयोः यत्नतश्च सुताभिषेकः द्रुतभावुकः अभवत् । जले अनुकूले पवने च पृष्ठगे सति तरिप्रयाणे विलम्बनं न भवेत् ॥१८॥

तदेति । तदैव मन्त्रिणः सम्मतिकाल एव, दैवेन सुखादृष्टेन, तयो राजमन्त्रिणोः, यत्नतश्च, सुतस्य राजपुत्रस्य रुक्मिणो यौवराज्ये अभिषेकः, द्रुतं भवतीति द्रुतभावुकः शीघ्रभावी, अभवत् । तथाहि जले, अनुकूले पुरोवाहिनि, पवने वायौ च, पृष्ठगे पृष्ठतः सम्मुखगामिनि सति, तरिप्रयाणे नौकाया गमने, विलम्बनम् अधिककालक्षेपः न भवेत् ।

अत्र वैधर्म्येण दृष्टान्तोऽलङ्कारश्छेकानुप्रासेन संसृज्यते ।

द्रुतभावुक इति "स्थ-कम" इत्यादिना भवतेरुकञ् ॥१८॥

**বাঙ্গালা**—সেই সময় হইতেই দৈব এবং রাজা ও মন্ত্রীর যত্নে রাজপুত্রের রাজ্যাভিষেক সত্বর সম্ভবপর হইল। কারণ, জল অনুকূল ও বায়ু পৃষ্ঠগামী হইলে, নৌকার গমনে বিলম্ব হয় না ॥১৮॥

**अन्वयः**—बहवो जनाः समुद्यतोः तयोः इङ्गितमात्रतः विधित्सवः ( सन्तः ) समीयुः । प्रभुः कटाक्षमात्रेण यत् करोति, तत् दरिद्रस्य हृदोऽपि गोचरो न (स्यात्) ॥१९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधत्स्व कर्म्म त्वमदस्त्वमप्यदः
इति प्रदिष्टा परिवारसंहतिः।
शिरस्यथाज्ञामपि मानसे मुदं
मुखे विकासञ्च समाप्नुवदेकदा ॥२०॥

समुद्यतोरिति। बहवो जनाः, समुद्यतो रविसुतराज्याभिषेकार्थं सम्यक् उद्यमं कुर्वतोः, तयो राजमन्त्रिणोः, इङ्गितमात्रतः केवलनयनभङ्गित एव, विधित्सवः कार्य्यजातं विधातुमिच्छवः सन्तः, समीयुः तत्राजग्मुः। तथा च प्रभुर्धनस्वामी जनः, कटाक्षमात्रेण केवलनयनेङ्गितेन, यत्, करोति कर्त्तुं शक्नोति, तत् दरिद्रस्य, हृदो मनसोऽपि गोचरो विषयो न स्यात्।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥१९॥

বাঙ্গালা—রাজা ও মন্ত্রী রাজপুত্রের রাজ্যাভিষেকের জন্য উদ্যত হইলে, তাঁহাদের ইঙ্গিতমাত্রই বহুলোক স্বস্বকার্য্য করিবার ইচ্ছায় সে স্থানে উপস্থিত হইল। কারণ, প্রভাবশালী লোক কেবল নয়নের ইঙ্গিতে যে কার্য্য করিতে পারেন, তাহা দরিদ্রলোকের মনের গোচরও হয় না ॥১৯॥

अन्वयः—अथ त्वं अदः त्वमपि अदः कर्म्म विधत्स्व इति प्रदिष्टा परिवारसंहतिः शिरसि आज्ञां मानसे मुदं मुखे विकासञ्च एकदा अपि समाप्नुवत् ॥२०॥

विधत्स्वेति। अथ त्वम्, अद इदम्, तीर्थजलानयनं कर्म्म, विधत्स्व कुरु, त्वमपि अद इदम्, तीर्थमृत्तिकाहरणं कर्म्म विधत्स्व, इति प्रदिष्टा राज्ञा आदिष्टा, परिवारसंहतिः भृत्यगणः, शिरसि आज्ञाम् उक्तं राजादेशम्, मानसे हृदये, मुदमानन्दम्, मुखे विकासं हर्षप्रफुल्लताञ्च, एकदा अपि युगपदेव, समाप्नुवत् प्राप्नोत्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

কলেবরে স্বচ্ছপরিচ্ছদচ্ছলাৎ
বিভৃত্য ভৃত্যালিরিবামদদ্যুতিম্ ।
বিড়ম্বয়ন্তী দিবিষত্তরঙ্গিণীং
সমন্ততস্তীর্থজলার্থমভ্যগাৎ ॥২১॥

---

অত্র সমাস্বদিত্যেকয়া ক্রিয়য়া আজ্ঞাদীনাং কর্ম্মতয়াভিসম্বন্ধা-ন্তুল্যযোগিতালঙ্কারশ্ছেকানুপ্রাসেন সংসৃজ্যতে ।

সমাস্বদিতি "অস্থ্গতিসম্বন্ধযোঃ" ইত্যস্বধাতোর্ল্লঙ্যাং রূপম্ ॥২০॥

বাঙ্গালা—'তুমি এই কার্য্য কর এবং তুমি ঐ কার্য্য কর' এইভাবে রাজা আদেশ করিলে, ভৃত্যগণ মস্তকে উক্ত রাজাদেশ, মনে আনন্দ এবং মুখে হর্ষপ্রফুল্লতা, এইগুলি একদাই ধারণ করিয়াছিল ॥২০॥

অন্বয়ঃ—ভৃত্যালিঃ স্বচ্ছপরিচ্ছদচ্ছলাৎ কলেবরে আমদদ্যুতিং বিভৃত্যেব দিবিষত্তরঙ্গিণীং বিড়ম্বয়ন্তী (সতী) তীর্থজলার্থং সমন্ততঃ অভ্যগাৎ ॥২১॥

কলেবর ইতি। ভৃত্যানামালিঃ শ্রেণী, স্বচ্ছানাং নির্ম্মলানাং পরিচ্ছদানাং বস্ত্রাদীনাং চ্ছলাৎ, কলেবরে দেহে, আমদদ্যুতিং মনোগত-হর্ষপ্রভাম্, বিভৃত্যেব ধারয়িত্বেব, দিবিষদাং দেবানাং তরঙ্গিণীং নদীং মন্দাকিনীম্, বিড়ম্বয়ন্তী আত্মনঃ শুভ্রতাসাম্যাৎ অনুকুর্ব্বতী সতী, তীর্থজলার্থম্, সমন্ততঃ সর্ব্বাসু দিক্ষু অভ্যগাৎ ।

অত্র সাপহ্নবা ক্রিয়োৎপ্রেক্ষা আর্থোপমা চানয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ, সোঽপি পুনর্ব্বৃত্ত্যনুপ্রাসাভ্যাং সংসৃজ্যতে ॥২১॥

বাঙ্গালা—ভৃত্যেরা শ্রেণীবদ্ধ হইয়া নির্ম্মল পরিচ্ছদের ছলে দেহে যেন আনন্দের প্রভা ধারণ করিয়া (পথে) স্বর্গগঙ্গার অনুকরণ করিতে থাকিয়া তীর্থজল আনয়ন করিবার জন্য সকল দিকে গমন করিল ॥২১॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

युतास्तदैकैकदिशं त्रयस्त्रयः
प्रवव्रजुः श्रेणिकृताः प्रजाव्रजाः।
शतत्रयाङ्कानिव तानलोकयन्
जनास्त्रयस्त्रिंशदधिश्रितान् पथि ॥२२॥
सितोपलैर्निर्म्मितहर्म्म्यपङ्क्तयः
विचित्रचित्रैर्बहुलैरलङ्कृताः।

अन्वयः—तदा युताः त्रयः त्रयः श्रेणिकृताः प्रजाव्रजाः एकैकदिशं प्रवव्रजुः। जनाः पथि तान् त्रयस्त्रिंशदधिश्रितान् शतत्रयाङ्कानिव अलोकयन् ॥२२॥

युता इति। तदा, युताः परस्परं मिलिताः, त्रयस्त्रयः, अश्रेणयः श्रेणयः कृता इति श्रेणिकृताः समसूत्रपातेन स्थिता इत्यर्थः, प्रजाव्रजाः भृत्यजनसमूहाः, एकैकदिशम्, प्रवव्रजुः तीर्थजलाद्यानयनार्थं प्रतस्थिरे। जनाः, पथि, तान्, त्रयस्त्रिंशत् तदङ्कानित्यर्थः अधिश्रितान् आश्रितान्, शतत्रयस्य अङ्कानिव, पत्रारूढ़शतत्रयसंख्याचरानिव, अलोकयन् अपश्यन्।

अत्र छेकानुप्रासससंसृष्टा श्रौतोपमालङ्कारः।

"समूह-निवह-व्यूह-सन्दोह-विसर-व्रजाः" इत्यमरः।

श्रेणिकृता इति श्रेण्यादयस्तार्थवृत्तयः कृतादिभिः" इति समासः ॥२२॥

বাঙ্গালা—তৎকালে তিন তিন জন ভৃত্য শ্রেণীবদ্ধভাবে মিলিত হইয়া এক এক দিকে গমন করিয়াছিল; সুতরাং পথে তত্রত্য লোকেরা তাহাদিগকে (পত্রে লিখিত ৩৩৩) তিন শত তেত্রিশ অঙ্কের ন্যায় দেখিতেছিল ॥২২॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पतत्पताकाभिरनेककान्तिभिः
कराञ्चलैराजुहुवुर्ज नानिव ॥२३॥
वनावनीसद्मनि पद्मिनीजनः
विनिर्म्ममे सुन्दरकुन्दमालिकाम् ।
मुहुर्नितान्तं निजदन्तसन्ततिम्
अनाविलादर्शतले ददर्श च ॥२४॥

---

अन्वयः—बहुलैः विचित्रचित्रैः अलङ्कृताः सितोपलैर्निर्म्मितहर्म्म्यपङ्क्तयः अनेककान्तिभिः पतत्पताकाभिः कराञ्चलैः जनान् आजुहुवुरिव ॥२३॥

अभिषेकोत्सवसज्जामाह श्लोकजातेन सितेति । बहुलैः, विचित्रचित्रैर्नानाविधालेख्यैः, अलङ्कृताः शोभिताः, सितोपलैः शुभ्रप्रस्तरैः, निर्म्मिताश्च ता हर्म्म्यपङ्क्तयो धनिभवनश्रेणयश्चेति ताः, अनेका विविधाः कान्तयः शोभा यासां ताभिः, पततां कम्प्रतया इतस्ततः प्रसरतां कराणामिव ध्वजानामित्यर्थः, पताकाभिः, कराञ्चलैः हस्ताङ्गुलिभिः, जनान् आजुहुवुः आहूतवत्य इव ।

अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारश्छेकानुप्रासेन संसृज्यते ॥२३॥

বাঙ্গালা—নানাবিধ বহুতর চিত্রে পরিশোভিত ও শুভ্র প্রস্তরনির্ম্মিত ধনিভবনগুলি বহুশোভায় শোভিত ও ক্ষুদ্র ক্ষুদ্র ধ্বজের উপরে নিবদ্ধ হস্তাঙ্গুলিতুল্য পতাকাদ্বারা লোকদিগকে যেন আহ্বান করিতে লাগিল ॥২৩॥

अन्वयः—पद्मिनीजनः वनावनीसद्मनि सुन्दरकुन्दमालिकां विनिर्म्ममे, अनाविलादर्शतले मुहुः नितान्तं निजदन्तसन्ततिं ददर्श च ॥२४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुराङ्गनेषु प्रसृताङ्गनागणाः
अयूयुधन् याः किल शोधनीभृतः।
द्विषां नु ता मूर्द्धसु धूलयो लयं
ययुर्यतोऽमी दमिता इव स्थिताः ॥२५॥

वनीति। पद्मिनी स्त्रीविशेषश्चासौ जनश्चेति पद्मिनीजनः, उत्तम-युवतिजन इत्यर्थः, वनावन्याम् उद्यानभूमौ यत्र सद्म गृहं तत्र स्थित्वेति शेषः, सुन्दराणां कुन्दानां कुसुमानां मालिकां स्रजम्, विनिर्ममे जग्रन्थ। अनाविलं स्वच्छं यत् आदर्शतलं दर्पणोपरितनदेशस्तत्र, मुहुर्वारं वारम्, नितान्तं सातिशयम्, निजानां दन्तानां सन्ततिं श्रेणीम्, ददर्श च, कुन्ददन्तयोर्मध्ये कतरत् सुन्दरमिति पर्य्यवेक्षणार्थमिति भावः।

अतएवात्र पर्य्यायोक्तमलङ्कारः, निर्म्माणादर्शनयोः क्रिययोर्यौगपद्यात् क्रियासमुच्चयश्चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासवृत्त्यनु-प्रासाभ्यां संसृज्यते ॥२४॥

বাঙ্গালা—পদ্মিনী যুবতিরা উদ্যানভূমিতে সুন্দর সুন্দর কুন্দপুষ্পের মালা গাঁথিতে লাগিল এবং বার বার বিশেষ আগ্রহসহকারে নির্ম্মল দর্পণে নিজেদের দন্তশ্রেণী দেখিতে থাকিল ॥২৪॥

अन्वयः—शोधनीभृतः प्रसृताङ्गनागणाः पुराङ्गनेषु याः किल अयूयुधन्, धूलयः द्विषां मूर्द्धसु लयं ययुः नु। यतः अमी दमिताः इव स्थिताः ॥२५॥

पुरेति। शोधनीभृतः सम्मार्जनीधारिण्यः, प्रसृता विस्तृता बहुलाश्च ते अङ्गनागणा योषित्समूहाश्चेति ते, पुरस्य भीष्मकराजधान्या अङ्गनेषु चत्वरेषु, याः किल धूलिः, अयूयुधन् शोधितवत्यः, सम्मार्जनेन दूरी-कृतवत्य इत्यर्थः, ता धूलयः, द्विषां भीष्मकशत्रूणाम्, मूर्द्धसु मस्तकेषु,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुवर्णदण्डेषु सुवर्णमण्डिताः
पुरि पताकाः पुरवश्चकम्पिरे ।
लघुस्वभावाश्चपलाश्च संस्थिताः
प्रयान्ति जातु स्थिरतां स्थिरेऽपि न ॥२६॥

---

लयं विलीनभावेनावस्थानम्, ययुर्नु प्रापुः किम् । यतः, अमी द्विषः, दमिता अवनतमस्तका इव, स्थिताः, तद्धूलिभारादिति भावः ।

अत्र नुशब्दस्य सम्भावनार्थबोधकत्वाद्वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ।

"सम्मार्जनी शोधनी स्यात्" इत्यमरः ॥२५॥

বাঙ্গালা—সম্মার্জনীধারিণী রমণীরা রাজধানীর চত্বরে ( উঠানে) সম্মার্জন করিয়া করিয়া যে সকল ধূলি অপসারিত করিতেছিল, সেই সকল ধূলি যাইয়া ভীষ্মকরাজার শত্রুগণের মস্তকে লুক্কায়িতভাবে অবস্থান করিতেছিল কি ? যেহেতু সেই শত্রুরা ( ভারবশতই যেন ) অবনতমস্তকে রহিয়াছিল ॥২৫॥

अन्वयः—पुरि सुवर्णदण्डेषु सुवर्णमण्डिताः पुरवः पताकाः चकम्पिरे । लघुस्वभावाः चपलाश्च स्थिरे संस्थिता अपि जातु स्थिरतां न प्रयान्ति ॥२६॥

सुवर्णेति । पुरि भीष्मकराजधान्याम्, सुवर्णदण्डेषु स्वर्णध्वजेषु, सुवर्णमण्डिताः सुन्दरवर्णशोभिताः, पुरवः प्रचुराः, पताका वैजयन्त्यः, चकम्पिरे वायुवेगेन आन्दोलिता बभूवुः । लघुस्वभावाः स्वभावत एव भारशून्याः, चपलाः स्वभावत एव चञ्चलाश्च पदार्थाः, स्थिरे अचले पदार्थे, संस्थिता अवस्थिता अपि, जातु कदाचिदपि, स्थिरताम्, न प्रयान्ति न प्राप्नुवन्ति । पताकानां स्वभावत एव लघुत्वात् चपलत्वाच्च कम्पनमित्याशयः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धनुर्भटानां परितो रणं यथा
पथो मुखस्योपरि तोरणं बभौ।
विड्डिलिमाः स्मात्र खगा नदन्ति न
क्षताश्च वृक्षच्छदनेन दन्तिनः ॥२७॥

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः।

"पुरुहं पुरु भूयिष्ठम्" इति "कदाचिज्जातु" इति चामरः। पूर्वं क्षुद्राः पताका इह तु वृहत्य इति न पुनरुक्तिदोषः ॥२६॥

বাঙ্গালা—সেই রাজধানীতে স্বর্ণদণ্ডনিবদ্ধ ও সুন্দরবর্ণশোভিত বহুতর পতাকা আন্দোলিত হইতে থাকিল। কারণ, স্বভাবতঃ লঘু (হাল্কা) ও চঞ্চল পদার্থ সকল স্থিরপদার্থে থাকিয়াও কখনই স্থিরত্ব প্রাপ্ত হয় না ॥২৬॥

अन्वयः—यथा रणं परितः भटानां धनुः, (तथा) पथः मुखस्य उपरि तोरणं बभौ। अत्र विड्डिलिमाः खगाः वृक्षच्छदनेन क्षता दन्तिनश्च न नदन्ति स्म ॥२७॥

धनुरिति। यथा, रणं परितः समरस्थलस्य सर्वत्र, भटानां योद्धॄणाम्, धनुः अर्द्धगोलाकारं कार्म्मुकं भाति; तथा, पथो राजभवनप्रवेशमार्गस्य, मुखस्य सम्मुखदेशस्य, उपरि तोरणम्, अर्द्धगोलाकारं पुरद्वारम्, बभौ। अत्र तोरणोपरि विड्डिलिमा विधानेन निर्व्वृत्ताः क्षलिमाः, खगाः पक्षिणः, वृक्षाणां छदनेन पत्रसमूहेन, क्षता द्वारोभयपार्श्वे निर्म्मिताः, दन्तिनो गजाश्च, न नदन्ति स्म न शब्दायन्ते स्म।

अत्र पूर्वार्द्धे श्रौतोपमा मध्ययमकञ्च, उत्तरार्द्धे तु नदन्तीत्येकया क्रियया खगदन्तिनोः कर्त्तृतयाभिसम्बन्धात्तुल्ययोगिता अन्त्ययमकञ्च, इत्येतेषां परस्परनिरपेक्षतया संसृष्टिः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

অমন্দসিন্দূরবিসুন্দরীকৃত-
বিশালকুম্ভা গজরাজরাজয়ঃ।
দিনান্তসন্ধ্যারুণরাগরঞ্জিতাং
সমন্ববর্ত্তন্ত বলাহকাবলীম্ ॥২৮॥

"ভটা যোধাশ্চ যোদ্ধারঃ", "তোরণোঽস্ত্রী বহির্দ্বারম্", "পত্রং পলাশং ছদনম্" ইত্যাদি চামরঃ।

রথ্যামিতি "ততোঽভয়াভিঃ পরিসর্বৈঃ" ইতি পরিতঃশব্দযোগে দ্বিতীয়া। বিহিতিমা ইতি বিপূর্বধাঞ্ ধাতোঃ "ড্বিতঃ ক্ত্রিঃ" "ক্ত্রের্ম্মপ্ নিত্যম্" ইতি ক্ত্রি-প্রত্যয়ঃ, "ভুলুবন্বাক্সিমক্ তেন নির্বৃত্তেঃ" ইতি ক্ত্রিমক্প্রত্যয়ঃ ॥২৭॥

বাঙ্গালা—রণস্থলের সর্ব্বত্র যোদ্ধাদের ধনু যেমন শোভা পায়, সেইরূপ রাজভবনপ্রবেশপথের সম্মুখে তোরণ শোভা পাইতেছিল। আর সেই তোরণের উপরে কৃত্রিম পক্ষিগণ এবং তোরণের উভয়পার্শ্বে বৃক্ষপত্রনির্ম্মিত হস্তিগণ শব্দ করিতেছিল না ॥২৭॥

অন্বয়ঃ—অমন্দসিন্দূর-বিসুন্দরীকৃত-বিশাল-কুম্ভাঃ গজরাজরাজয়ঃ দিনান্ত-সন্ধ্যারুণরাগ-রঞ্জিতাং বলাহকাবলীং সমন্ববর্ত্তন্ত ॥২৮॥

অমন্দেতি। অমন্দেন অনল্পেন সিন্দূরেণ বিসুন্দরীকৃতা বিশিষ্ট-মনোহরীকৃতা বিশালাঃ কুম্ভাঃ যাসাং তাঃ, গজরাজানাং করীন্দ্রাণাং রাজয়ঃ শ্রেণয়ঃ, দিনান্তসন্ধ্যায়াঃ সায়ংসন্ধ্যায়া অরুণেন রাগেণ বর্ণেন রঞ্জিতাম্, বলাহকাবলীং মেঘশ্রেণিম্, সমন্ববর্ত্তন্ত সম্যক্ অন্বকুর্বন্। অত্র শ্রৌতোপমালঙ্কারঃ, বৃত্ত্যনুপ্রাসশ্ছেকানুপ্রাসশ্চেত্যেতেষাং সংসৃষ্টিঃ ॥২৮॥

বাঙ্গালা—প্রচুর সিন্দূরদ্বারা যেগুলির বিশাল কুম্ভ সকল বিশেষ সুন্দর করা হইয়াছিল, সেই বৃহৎ হস্তিগণ সায়ংসন্ধ্যারাগে রঞ্জিত মেঘ-শ্রেণীর অনুকরণ করিতেছিল ॥২৮॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तुरङ्गमा यत्र तरङ्गतां गताः
जलप्रवाहा निवहा नृणां पुनः।
सुधाभसौधा जलयानसञ्चयाः
तरङ्गिणी सा किमभूत् पुरी परा ॥२९॥
नटैश्चमत्कारिणि नाटमन्दिरे
सहायनीकृत्य नटीः पटीयसीः।
तिरस्करिण्यावलिकच्छिन्ना च सा
दिदृक्षमाणांस्तरुणानवारुणत् ॥३०॥

---

अन्वय.—यत्र तुरङ्गमाः तरङ्गतां गताः नृणां निवहाः पुनः जलप्रवाहाः सुधाभसौधाः (च) जलयानसञ्चयाः, सा पुरी किं परा तरङ्गिणी अभूत् ॥२९॥

तुरङ्गमा इति। यत्र पुर्य्याम्, तुरङ्गमा अश्वाः, तरङ्गताम् उत्पतनसाम्यात् वीचित्वं गताः प्राप्ताः, नृणां मानुषाणाम्, निवहाः समूहाः, पुनः, जलप्रवाहाः, सुधाभाः सुधावत् शुभ्रवर्णाश्च ते सौधा राजभवनानि चेति ते च, जलयानसञ्चयाः शुभ्रवर्णपोतसमूहाः आसन्, सा पुरी भीष्मकराजधानी, किम्, परा अन्या, तरङ्गिणी नदीस्वरूपा, अभूत् आसीत्।

अत्र साङ्गं रूपकमलङ्कारः, पूर्व्ववदनुप्रासौ चेति संसृष्टिः।

"सौधोऽस्त्री राजसदनम्" इत्यमरः ॥२९॥

বাঙ্গালা—যে রাজধানীতে অশ্বগণ ছিল—তরঙ্গস্বরূপ, আবার লোকসমূহ ছিল—জলপ্রবাহস্বরূপ এবং সুধার ন্যায় শুভ্রবর্ণ রাজভবনগুলি ছিল—শুভ্রবর্ণ পোতসমূহস্বরূপ, সেই রাজধানীটা কি অপর নদীস্বরূপ হয় নাই? ॥২৯॥



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निमन्त्रिता मन्त्रिभिरेत्य भूभृतः
निजप्रभाभिः समभासयन् सभाम् ।
तदीयतेजोविजितः प्रभाकरः
महावितानेन तिरस्कृतः स्थितः ॥२१॥

अन्वयः—चमत्कारिणि नाटमन्दिरे नटैः पटीयसीः नटीः सहायनीकृत्य (या) तिरस्करिण्यावलिः उच्छ्रिता, सा दिदृक्षमाणान् तरुणान् अवारुणत् ॥२०॥

नटैरिति। चमत्कारिणि सौन्दर्य्येण विस्मयजनके, नाटमन्दिरे नृत्यशालायाम्, नटैः, पटीयसीर्नृत्यादिनिपुणा नटीः, सहायनीकृत्य सहचरीः कृत्वा, या तिरस्करिण्यावलिः यवनिकाश्रेणी, उच्छ्रिता उन्नृत्य बद्धा, सा, दिदृक्षमाणान् अभिनयं द्रष्टुमिच्छतः, तरुणान् युवकान्, अवारुणत् वैचित्र्यातिरेकात् गमनान्न्यवारयत्। तरुणानामेव नटीनैपुण्यदर्शनादावौत्सुक्यातिरेकात् तरुणपदमुपात्तम्।

अत्र च्छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिरलङ्कारः।

"यवनिका स्यात्तिरस्करिणी च सा" इत्यमरः ॥३०॥

বাঙ্গালা—নটেরা নৃত্যগীতাদিনিপুণ নটীগণকে সহচর করিয়া চমৎকার নাটমন্দিরের মধ্যে যে যবনিকা-(সিন) গুলি উপরে বন্ধন করিয়াছিল, সেগুলি অভিনয়দর্শনার্থী যুবকদিগকে অবরুদ্ধ রাখিয়াছিল ॥৩০॥

अन्वयः—निमन्त्रिता भूभृतः मन्त्रिभिः (सह) एत्य निजप्रभाभिः सभां समभासयन्। प्रभाकरः तदीयतेजोविजितः, (अतएव) महावितानेन तिरस्कृतः (सन् इव) स्थितः ॥२१॥

निमन्त्रिता इति। निमन्त्रिता भीष्मकेणाहृताः, भूभृतो राजानः, मन्त्रिभिः सह, एत्य आगत्य, निजप्रभाभिः स्वकीयभूषणादिदीप्तिभिः,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विपश्चितः पश्चिमतः प्रतिष्ठिताः
अहर्म्मुखे पूर्व्वमुखाश्च भूभृतः।
विरेजुरेके तु यमादिसञ्जयात्
न तादृगन्ये यमवश्यवर्त्तिनः ॥३२॥

---

सभाम्, समभासयन् प्रकाशयन्। प्रभाकरः सूर्य्यः, तदीयैस्तेजोभिर्भूभृत्-प्रभाभिर्विजितः, अतएव मन्दाविताननेन विशालचन्द्रातपेन, तिरस्कृत आवृतः सन्निव स्थितः। अन्योऽपि परेण विजितः सुतरामपमानादृ-भित्याद्यावृतस्तिष्ठति।

अत्र सूर्य्यस्य विजितत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्ति-रलङ्कारः, प्रतीयमाना क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥३१॥

বাঙ্গালা—নিমন্ত্রিত রাজারা মন্ত্রিগণের সহিত আসিয়া আপন আপন বসনভূষণের প্রভায় সেই সভাটীকে উদ্ভাসিত করিয়াছিলেন। সূর্য্য তাঁহাদের তেজে পরাজিত হওয়ায় বিশাল চন্দ্রাতপে আবৃত হইয়াই যেন রহিয়াছিলেন ॥৩১॥

अन्वयः—अहर्म्मुखे विपश्चितः पश्चिमतः भूभृतश्च पूर्वमुखाः प्रतिष्ठिताः एके यमादिसञ्जयात् विरेजुः, यमवश्यवर्त्तिनः अन्ये तु तादृक् न ॥३२॥

विपश्चित इति। अहर्म्मुखे प्रत्यूषकाले, त्रिश्रेणिया परिचिन्वन्ति शास्त्राण्यवगच्छन्तीति विपश्चितः पण्डिताः, पश्चिमतः पश्चिमाभिमुखाः, भूभृतो राजानश्च, पूर्वमुखाः, प्रतिष्ठिता राजानुचरैश्च स्थापिताः, एके विपश्चितः, यमादीनां यम-नियमादियोगाङ्गानां संजयात् आयत्ती-करणात्, विरेजुः शुशुभिरे, यमवश्यवर्त्तिनः कृतान्ताधीनाः, अन्ये राजानस्तु, तादृक् न शुशुभिरे।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परः परास्तो विदुषापरेण यः
स जोषमास्ते स्म विनम्रमस्तकः ।
निजैर्महाजन्य इवाहतं जनं
नृपा विचेष्टं तममी अमंसत ॥३३॥

---

अत्र विपश्चिदपेक्षया भूभृतां न्यूनतावर्णनाद्व्यतिरेकालङ्कार-श्छेकानुप्रासेन संसृज्यते ॥३२॥

बाङ्गाला—সেই প্রভাতকালে পণ্ডিতগণ পশ্চিম মুখ হইয়া বসিলেন, রাজারা পূর্ব্বমুখ হইয়া থাকিলেন, ইহার মধ্যে পণ্ডিতগণ যম-নিয়মাদি আয়ত্ত করায় বিশেষ শোভা পাইতে লাগিলেন, কিন্তু যমের বশীভূত রাজগণ সেরূপ শোভা পাইতে থাকিলেন না ॥৩২॥

अन्वयः—यः परः अपरेण विदुषा परास्तः स विनम्रमस्तकः (सन्) जोषं आस्ते स्म। अमी नृपाः महाजन्ये निजैः आहतं जनमिव तं विचेष्टं अमंसत ॥३३॥

पर इति । यः पर उत्तमो विद्वान्, अपरेण अन्येन, विदुषा, परास्तः शास्त्रतर्के पराभूतः, स उत्तमो विद्वान्, विनम्रमस्तकः तत्पराजयाप-मानेनावनतशिराः सन्, जोषं नीरवं यथा स्यात्तथा, आस्ते उपविशति स्म । तदा अमी नृपाः, महाजन्ये महायुद्धे, निजैः सैन्यैः, आहतं जनमिव, तं परं विद्वांसम्, विचेष्टं निष्पन्दम्, अमंसत सम्भावितवन्तः ।

अत्र श्रौतोपमालङ्कारो वृत्त्यनुप्रासेन छेकानुप्रासेन च संसृज्यते ।
"युद्धमायोधनं जन्यम्" इत्यमरः ॥३३॥

बाङ्गाला—সেই সভায় যিনি প্রধান বিদ্বান্ ছিলেন, তিনি শাস্ত্রীয় তর্কে অন্য বিদ্বানের নিকট পরাজিত হইয়া নীরবে ও অবনতমস্তকে অবস্থান করিতেছিলেন। তখন সভাস্থিত রাজারা মনে করিলেন যে,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महीक्षितो वीक्ष्य विदां विचारणं
सुविस्मिताः सस्मितमूचुरीदृशम्।
जयत्यदो मानपणं विचारणं
रणो हि नः प्राणपणः सुदारुणः ॥३४॥

महायुद्धে আপন সৈন্যকর্ত্তৃক আহত ব্যক্তির ন্যায় ইনি নিশ্চেষ্ট রহিয়াছেন ॥৩৩॥

अन्वयः—महीक्षितो विदां विचारणं वीक्ष्य सुविस्मिताः (सन्तः) सस्मितं ईदृशं ऊचुः। अदो मानपणं विचारणं जयति। नः रणः हि प्राणपणः सुदारुणः ॥३४॥

महीति। महीक्षितो राजानः, विदां विदुषां ब्राह्मणानाम्, विचारणं शास्त्रीयतर्कम्, वीक्ष्य अवलोक्य, सुविस्मिताः सन्तः, सस्मितं सेषद्धासम्, ईदृशम् ऊचुः। अद इदम्, मानो जये गौरवं पराजये अपमानश्च पणो यत्र तत्, विचारणम्, जयति रणापेक्षया उत्कर्षेण वर्त्तते, मानपणत्वादित्याशयः। नः अस्माकं क्षत्रियाणाम्, रणो युद्धं हि, प्राणा एव पणो यत्र तादृशः, अतएव सुदारुणः अतीवभयावहः, ब्राह्मणानां जातीयकार्य्यापेक्षया क्षत्रियाणां जातीयकार्य्यं नितान्तमेव निकृष्टमिति भावः।

अतएवात्र पदार्थहेतुकं काव्यलिङ्गद्वयम्, व्यतिरेकश्चेत्येतेषामङ्गाङ्गि-भावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥३४॥

বাঙ্গালা—সভাস্থিত রাজারা ব্রাহ্মণপণ্ডিতগণের বিচার দেখিয়া অত্যন্ত বিস্মিত হইয়া মৃদু হাস্যসহকারে এইরূপ বলিতেছিলেন—"এই, বিচারই শ্রেষ্ঠ; কেন না, ইহার পণ মান, আর আমাদের যুদ্ধ অতিদারুণ; কারণ, তাহাতে পণ প্রাণ" ॥৩৪॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ইতোঽন্তরে রাজকৃতং সভাজনং
অতোষয়ৎ সর্বমিমং সভা-জনম্।
কৃতং নৃণাং যোগ্যজনেন মাননং
করোতি ফুল্লাব্জসমানমাননম্ ॥৩৫॥
শিশির্শিরে যৎ কুটিলেক্ষণং চিরং
গণাঙ্গনাস্তস্য ফলং তদাপ্নুবন্।
বিহায় যেনৈকসদঃসদো বুধান্
মহোচ্চিতস্বচ্চমিরে সমীচ্চিতুম্ ॥৩৬॥

---

অন্বয়:—ইতঃ অন্তরে রাজকৃতং সভাজনং ইমং সর্বং সভা-জনং-অতোষয়ৎ। যোগ্যজনেন কৃতং মাননং নৃণাং আননং ফুল্লাব্জসমানং করোতি ॥৩৫॥

ইত ইতি। ইত অন্তরে অস্মিন্নবসরে, রাজ্ঞা ভীষ্মকেণ কৃতং রাজকৃতম্, সভাজনং বিনয়োক্তিভিঃ সংবর্দ্ধনা, ইমং প্রস্তুতম্, সভা-জনং সভ্যলোকম্ অতোষয়ৎ। পদগৌরবাদিনা যোগ্যজনেন কৃতম্, মাননং গৌরবাস্পদীকরণং কর্তৃ, নৃণাং মনুষ্যাণাম্, আননং মুখম্, ফুল্লং প্রস্ফুটিতং যৎ অব্জং পদ্মং তস্য সমানং করোতি। আনন্দাতিশয়োদয়েন সুখবিকাশাদিতি ভাবঃ।

অত্র সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসোঽলঙ্কারঃ, আর্থোপমা, অন্ত্যযমকঞ্চেত্যেতেষাং সংসৃষ্টিঃ ॥৩৫॥

বাঙ্গালা—এই সময়ে ভীষ্মকরাজা সবিনয় সংবর্দ্ধনা করিলে, সভাস্থ সমস্ত লোকই সন্তুষ্ট হইল। কারণ, যোগ্যলোকে সম্মান করিলে তাহা মুখমণ্ডলকে প্রস্ফুটিত পদ্মের তুল্য করিয়া থাকে ॥৩৫॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निनाय नेत्रं नवनायिकागणः
विदां विचाराश्रवणं त्वसभ्यता।
विधूनितं लिप्सु मनो मनोभुवा
महाविपत्तिर्युवभूभृतामभूत् ॥३७॥

अन्वयः—गणाङ्गनाः चिरं यत् कुटिलेक्षणं शिशिक्षिरे, तस्य फलं तदा आप्नुवन्। येन एकसदःसदः बुधान् विहाय महीक्षितः समीक्षितुं चचमिरे ॥३६॥

शिशिक्षिर इति। गणाङ्गना वारवनिताः, चिरम्, यत् कुटिलेक्षणं वक्रदृष्टिम्, शिशिक्षिरे कुट्टिनीगुरोः शिक्षितवत्यः। तस्य फलम्, तदा आप्नुवन् अलभन्त। येन हेतुना, एकस्मिन् सदसि सीदन्ति वर्त्तन्त इति एकसदःसदः एकसभास्थान्, बुधान् पण्डितान्, विहाय महीक्षितो नृपतीन्, समीक्षितुं द्रष्टुम्, चचमिरे शेकुः। चिरशिक्षावशादेव वेश्यानां तादृशनैपुण्यमिति भावः।

अत्र कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासश्चेति संसृष्टिः।

चचमिरे इति "खमु सहने" इति खम्धातोः परोक्षायां रूपम् ॥३६॥

বাঙ্গালা—বেশ্যারা দীর্ঘকাল ধরিয়া যে বক্রদৃষ্টি শিক্ষা করিয়াছিল, তাহার ফল সেই সময় পাইয়াছিল। যেহেতু তাহারা একই সভায় অবস্থিত ব্রাহ্মণপণ্ডিতগণকে পরিত্যাগ করিয়া রাজগণকে দেখিতে সমর্থ হইয়াছিল ॥৩৬॥

अन्वयः—नवनायिकागणः नेत्रं निनाय, विदां विचाराश्रवणं तु असभ्यता (स्यात्)। लिप्सु मनः मनोभुवा विधूनितं। युवभूभृतां महाविपत्तिः अभूत् ॥३७॥

निनायेति। नवनायिकागणो वारतरुणीसमूहः, नेत्रम्, निनाय वेशभूषादिसौन्दर्य्यातिरेकादाचकर्ष, विदां विदुषाम्, विचारस्य शास्त्रीय-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदैकदैकः करिणां करोपरि
परश्च तीर्थागतदूतसञ्चितः ।
नवाङ्गनानामुरसीतरः पुन-
रलम्भि कुम्भस्त्रिविधो जनेक्षणैः ॥३८॥

तर्कस्य अश्रवणे तत्तरुणीदर्शने व्यापृतत्वात् श्रवणाभिनयाभावे तु असभ्यता स्यात् । लिप्सु, तत्तरुणीजनलोभि मनः, मनोभुवा कामेन, विधूनितं चञ्चलीकृतञ्च । अतएव, युवानश्च ते भूभृतो राजानश्चेति तेषाम्, महाविपत्तिरतीवाकुलता, अभूत् । सर्वं दिग्‌रचणस्य दुष्करत्वा-दित्याशयः ।

अत्र महाविपत्तिं प्रति कारणत्रयोपन्यासात् समुच्चयोऽलङ्कारः, प्रथमपादे वृत्त्यनुप्रासः, तृतीयपादे मनो मनोभुवेत्यत्र लाटानुप्रास-श्चेत्येतेषां संसृष्टिः ॥३७॥

বাঙ্গালা—নবীন রমণীগণ নয়ন আকর্ষণ করিতেছিল, পণ্ডিতগণের বিচার না শুনিলে অসভ্যতা হইবার সম্ভাবনা ছিল, লোভী মন কামাবেশে বিচলিত হইতেছিল; সুতরাং যুবক রাজগণের তৎকালে গুরুতর বিপদ উপস্থিত হইয়াছিল ॥৩৭॥

अन्वयः—एकः करिणां करोपरि, परश्च तीर्थागतदूतसञ्चितः, इतरः पुनः नवाङ्गनानां उरसि (इति) त्रिविधः कुम्भः तदा एकदा (एव) जनेक्षणैः अलम्भि ॥३८॥

तदेति । एकः कुम्भः, करिणां हस्तिनाम्, करोपरि शुण्डोपरिदेशे अतिष्ठत् । परः अन्यः कुम्भश्च, तीर्थेभ्य आगतैर्दूतैः सञ्चितः आहृतः स्थितः, इतरः अपरः पुनः कुम्भः, नवाङ्गनानां वारतरुणीनाम्, उरसि वक्षसि आसीत् । इति त्रिविधः कुम्भः, तदा, एकदैव, जनानाम् ईक्षणै-र्दृष्टिभिः, अलम्भि प्राप्तः । हस्तिशुण्डोपरि अस्थिमांसस्तूपरूपः कुम्भः,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सहाङ्कुशेन प्रथमे च कुङ्कुमः
बभौ द्वितीये च जलं सपल्लवम्।
पटस्तृतीये सह लोकलोचनैः
न कोऽपि कुम्भः किल शून्यतामगात्॥३९॥

अभिषेकसम्पादनाय दूतानीततीर्थजलपूर्णाः स्वर्णकलसमूहः, वसनाहतो वारवनितास्तनसमूहश्चेति त्रिविधानेव कुम्भान् तदानीमेकदैव जनो दृष्टवानित्यर्थः।

अत्र करिकरोपरिस्थितनवाङ्गनोरःस्थितयोश्च मांसस्तूपयोः कुम्भत्वा-सम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते॥३८॥

বাঙ্গালা—তৎকালে হস্তিগণের শুণ্ডের উপরে একপ্রকার কুম্ভ ছিল, তীর্থ হইতে আগত দূতগণ তীর্থজলপূর্ণ অন্য প্রকার কুম্ভ আনিয়া রাখিয়াছিল, আর বারবনিতাগণের বক্ষঃস্থলে অন্যবিধ কুম্ভ রহিয়াছিল; সুতরাং তত্রত্য লোকেরা তখন এক সময়েই ত্রিবিধ কুম্ভ দেখিতেছিল॥৩৮॥

अन्वयः—प्रथमे च अङ्कुशेन सह कुङ्कुमः, द्वितीये च सपल्लवं जलं, तृतीये च लोकलोचनैः सह पटः बभौ। कोऽपि कुम्भः किल शून्यतां न अगात्॥३९॥

सहेति। प्रथमे पूर्वश्लोके प्रथमोक्ते करिकुम्भे च, अङ्कुशेन करिताड़नास्त्रेण सह, कुङ्कुमो लोहितवर्णो द्रव्यविशेषो बभौ। द्वितीये च तीर्थागतदूतसञ्चितकुम्भे, पल्लवेन सहेति सपल्लवं जलं बभौ; तृतीये च नवाङ्गनानां कुचकुम्भे लोकलोचनैः सह पटे वस्त्रं बभौ। अतएव प्रागुक्तानां त्रयाणां कुम्भानां मध्ये कोऽपि कुम्भः किल शून्यतां न अगात् न प्रापत्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

करीन्द्रकुम्भो ननु नित्यनीरसः
चयोत्पतिष्णुश्च रसश्चराहृते ।
रसश्चिरस्थः कुचकुम्भ एव यत्
स आदरात्तद्घनवाससावृतः ॥४०॥

---

अत्र शून्यताप्राप्त्यभावं प्रति पूर्ववाक्यार्थानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, बभाविन्त्येकया क्रियया कुङ्कुमादीनां त्रयाणां कर्तृतयाभिसम्बन्धात्तुल्ययोगिता च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः, वृत्त्यनुप्रासच्छेकानुप्रासयोश्चेति समुदाये संसृष्टिः ॥३९॥

বাঙ্গালা—পূর্ব্বশ্লোকোক্ত ত্রিবিধ কুম্ভের মধ্যে প্রথমকুম্ভে অঙ্কুশের সহিত কুঙ্কুম প্রকাশ পাইতেছিল, দ্বিতীয়কুম্ভে পল্লব ও জল ছিল এবং তৃতীয়কুম্ভে লোকলোচনের সহিত বস্ত্র রহিয়াছিল; সুতরাং কোন কুম্ভই শূন্য ছিল না ॥৩৯॥

अन्वयः—करीन्द्रकुम्भो ननु नित्यनीरसः, चराहृते च चयोत्पतिष्णुः रसः, (किन्तु) कुचकुम्भ एव यत् चिरस्थो रसः, तत् स आदरात् घनवाससा आवृतः (अभूत्) ॥४०॥

करीति । नन्विति शुश्रूषुसम्बोधने अवधारणे वा । प्रथमः करीन्द्रकुम्भः नित्यनीरसः अस्थिमांसमयत्वात् सर्वदैव अपरद्वयसदृशरससशून्यः ; चरैर्दूतैराहृते आनीते द्वितीये च कुम्भे चयेन उत्पतिष्णुर्बहिर्गमनशीलरसो जलं वर्त्तते, किन्तु तृतीये कुचकुम्भ एव यद्यस्मात् चिरं दीर्घकालं यौवनं यावदित्यर्थः तिष्ठतीति चिरस्थः ; रसो दुग्धं जन्यतया शृङ्गारश्च विद्यते ; तत्तस्मात्, स कुचकुम्भः आदरात् घनवाससा निविड़वस्त्रेण आवृतः अभूत् । अन्यदप्युत्कृष्टं वस्तु वस्त्रादीनाव्रियते ।

अत्र प्रथमोक्तकुम्भद्वयापेक्षया तृतीयकुम्भस्य आधिक्यप्रतिपादनाद्व्यतिरेकोऽलङ्कारः ।

"शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः ॥४०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रियच्चलच्चेलतिरोहितस्तन-
सरोजषण्डौ न विरेजतुस्तदा।
निजार्द्धचन्द्राङ्कितवक्त्रचन्द्रमाः
मृगीदृशां येन सभामभासयत् ॥४१॥
गुणैः स्वतुल्यो भवितैष भूपतिः
मनोभवः पूर्वमितीव भावयन्।
दृगाशुग-भ्रूयुगकार्म्मुकाग्रहां
चमूं रमाणामहिनोज्जिगीषया ॥४२॥

বাঙ্গালা—হস্তীর কুম্ভ সর্ব্বদাই নীরস, দূতগণকর্ত্তৃক আনীত কুম্ভের রস (জল) ক্ষণকালমধ্যেই বাহির হইয়া যায়, কিন্তু কুচকুম্ভের রস যেহেতু চিরস্থায়ী, সেই হেতু তাহা নিবিড় বস্ত্রদ্বারা আবৃত রাখিয়াছিল ॥৪০॥

অন্বয়:—क्रियच्चलच्चेल-तिरोहित-स्तन-सरोजषण्डौ तदा न विरेजतुः। येन मृगीदृशां निजार्द्धचन्द्राङ्कितवक्त्रचन्द्रमाः सभां अभासयत् ॥४१॥

क्रियदिति। क्रियच्चलता वायुवेगेन किञ्चिच्चञ्चलीभवता चेलेन वसनेन तिरोहितौ आवृतौ स्तनाविव सरोजषण्डौ पद्मकोरकौ, तदा न विरेजतुः विकाशेन न शुशुभाते। येन हेतुना, मृगीदृशां हरिणी-नयनानां तरुणीनाम्, निजं स्वकीयम्, अर्द्धचन्द्राङ्कितम् अर्द्धचन्द्राकारा-लङ्कारेण चिह्नितं वक्त्रं मुखमेव चन्द्रमाश्चन्द्र इति स तथोक्तः, सभाम्, अभासयत् प्राकाशयत्। चन्द्रे प्रकाशमाने पद्मकलिका न स्फुटतीति भावः।

अत्र निरङ्गं केवलरूपकद्वयं छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥४१॥

বাঙ্গালা—অল্প-চঞ্চল-বসনাবৃত তরুণীগণের স্তনদ্বয়রূপ পদ্মকলিকা দুইটী তখন প্রকাশ পায় নাই। যেহেতু তাহাদের অর্দ্ধচন্দ্রভূষণাঙ্কিত মুখরূপ চন্দ্র সভাটীকে আলোকিত করিতেছিল ॥৪১॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(कुलकारम्भः)

विलम्बिनीलोपलनिर्म्मितस्रजां
सुधासितं चारुरुचा चकासतम् ।
विशालनीलोत्पलसङ्कुलं जलं
विडम्बयन्तं सुरनिम्नगागतम् ॥४३॥

अन्वयः—एष भूपतिः गुणैः स्वतुल्यः भविता इति पूर्वं भावयन्निव मनोभवः दृगाशुग-भ्रूयुग-कार्म्मुक-ग्रहां रमाणां चमूं जिगीषया अहिनोत् ॥४२॥

गुणैरिति । एष भूपतिः रुक्मी, गुणैः शौर्य्यसौन्दर्य्यादिभिः स्वतुल्यः आत्मसमानो भविता इति पूर्व्वं भावयन् चिन्तयन्निव मनोभवः कामदेवः, दृशौ चक्षुषी एव आशुगौ बाणौ भ्रूयुगमेव कार्म्मुकं गृह्णातीति तां रमाणां नवाङ्गनानां चमूं सेनाम्, जिगीषया रुक्मिणमेव जेतुमिच्छया, अहिनोत् प्रेरयत् । राजान्तरस्य स्वतुल्यीभवनसम्भावनायाम् अपरोऽपि राजा जिगीषया सेनां प्रेरयतीति भावः ।

अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः, निरङ्गं केवल-रूपकद्वयञ्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, पूर्व्ववदनुप्रासद्वयञ्चेति समुदाये संसृष्टिः ।

"रमः कान्ते रक्ताशोके मन्मथे च रमा स्त्रियाम्" इति हेमचन्द्रः ।

ग्रहेति पचादित्वादच् ॥४२॥

বাঙ্গালা—এই রাজপুত্র শৌর্য্য ও সৌন্দর্য্যপ্রভৃতি গুণদ্বারা আমার তুল্য হইবেন ইহা পূর্ব্বে ভাবিয়াই যেন কামদেব—দৃষ্টিরূপ বাণ ও ভ্রূযুগলরূপ কার্ম্মুকধারিণী রমণীসেনা জয় করিবার জন্য প্রেরণ করিয়াছিলেন ॥৪২॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नवप्रवालावलिकान्तकान्तिभिः
विमिश्रितश्वेतमरीचिरञ्जितम् ।
विसारिभिर्गैरिकराशिरश्मिभिः
चितञ्च कैलासमिवाचलं चलम् ॥४४॥

अन्वयः—सुधासितं, विलम्बि-नीलोपल-निर्म्मित-स्रजां चारुरुचा चकासतं ; (अतएव) सुरनिम्नगागतं विशाल-नीलोत्पल-सङ्कुलं जलं विडम्बयन्तं, नवप्रवालावलि-कान्त-कान्तिभिः विमिश्रित श्वेत-मरीचि-रञ्जितं, (अतएव) चलं विसारिभिः गैरिक-

अथाष्टभिः श्लोकैः कुलकेनाभिषेकमञ्चं वर्णयति विलम्बीति । सुधासितं चूर्णलेपवत् शुभ्रवर्णम्, विलम्बिन्यः सर्पलाङ्गूलवत् लम्बमानाः या नीलोपलैर्मरकतमणिभिः निर्म्मिता स्रजो मालास्तासाम्, चारुरुचाः मनोहरप्रभया चकासतं दीप्यमानम् ; अतएव सुरनिम्नगागतं गङ्गानदीस्थितं विशालैर्नीलोत्पलैः सङ्कुलं व्याप्तं जलम्, विडम्बयन्तमा अनुकुर्वन्तम् । अत्र लुप्तोपमार्थोपमयोरङ्गाङ्गिभावेन सङ्करः, छेकानु-प्रासवृत्त्यनुप्रासश्चेति समुदाये संसृष्टिः ॥ नवप्रवालावलेः नूतन-विद्रुमश्रेण्याः कान्तकान्तिभिः सुन्दरदीप्तिभिः विमिश्रिता या श्वेत-मरीचयः मञ्चस्यैव शुभ्रकिरणास्ताभिः रञ्जितम् । अतएव चलं प्रबल-भूमिकम्पेन चञ्चलम्, विसारिभिः समन्ताद्गामिभिः गैरिकराशिरश्मिभिः

বাঙ্গালা—শ্রমজীবী ভৃত্যেরা রাজকুমার রুক্মীর যৌবরাজ্যে অভিষেকের জন্য স্ফটিকনির্ম্মিত, উজ্জ্বলদীপ্তিশালী, একখানি মঞ্চ (চৌকী), আনয়ন করিয়া সভ্যগণের সন্নিধানে মস্তক হইতে ভূতলে স্থাপন করিল, তৎক্ষণাৎ তত্রত্য লোকদিগের দৃষ্টি তাহার উপরে পতিত হইল। সেই মঞ্চখানি চূর্ণলেপের ন্যায় শুভ্রবর্ণ ছিল এবং ঝুলান মরকত-মণিমালার সুন্দর কিরণে দীপ্তি পাইতেছিল ; সুতরাং সেই মঞ্চখানি

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पदे पदे हीरकखण्डमण्डितं
पदे लतां काञ्चनजाञ्च बिभ्रतम् ।
शिरोधृतेन्दुप्रतिविम्बमम्बुनः
प्रवाहमद्रे रिव हेमपातिनम् ॥४५॥
उपेतमेकैकजनस्य पश्यतः
प्रगृह्य विम्बं स्वयमत्यनाविलम् ।
स्वयोग्यताऽभावमवेक्ष्य तत्क्षणात्
त्यजन्तमङ्काय निजान्तरादिव ॥४६॥

राशि रश्मिभिः चितञ्च कैलासं अचलमिव (स्थितं), पदे पदे हीरकखण्डमण्डितं, पदे च काञ्चनजां लतां बिभ्रतं, (अतएव) शिरोधृतेन्दुप्रतिविम्बं अद्रेः हेमपातिनं अम्बुनः प्रवाहमिव (स्थितं) स्वयमत्यनाविलं, (अतएव) पश्यतः एकैकजनस्य रक्तवर्णधातुविशेषकिरणैश्च, चितं व्याप्तम्, कैलासम् अचलं पर्वतमिव स्थितम् । अत्र श्रौतोपमालङ्कारः, पूर्ववदनुप्रासाभ्यां संसृज्यते ॥ पदे पदे स्थाने स्थाने हीरकखण्डैः मण्डितं शोभितम्, पदे च पादचतुष्टये च काञ्चनजां स्वर्णनिर्म्मितां लताम्, बिभ्रतं धारयन्तम् । ततश्च शिरसि उपरिभागे धृतम् इन्दोश्चन्द्रस्य प्रतिविम्बं येन तम्, अद्रेः पर्वतात्, हेम्नि स्वर्णे पातिनं पतनशीलम्, अम्बुनो जलस्य प्रवाहमिव स्थितम् । अत्र छेकानुप्रासेन संसृष्टः श्रौतोपमालङ्कारः ॥ स्वयम्, अत्यनाविलम् যেন বহুতর নীলোৎপলযুক্ত গঙ্গাজলের অনুকরণ করিতেছিল ॥ নূতন প্রবালমালার সুন্দর প্রভার সহিত সম্মিলিত শুভ্র কিরণে সেই মঞ্চখানি রঞ্জিত ছিল, অতএব গৈরিক-(রক্তবর্ণ ধাতুবিশেষ) রাশির রশ্মিতে পরিব্যাপ্ত কৈলাসপর্ব্বতের ন্যায় চলিতেছিল ॥ সেই মঞ্চখানি স্থানে স্থানে সন্নিবেশিত হীরকখণ্ডে শোভিত ছিল এবং তাহার পাদচতুষ্টয়ে

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अहं भविष्यन् भविनो भुवः प्रभोः
पदादधःस्थो जनमूर्द्धभिर्धृतः ।
नृपास्तदूर्द्ध्वा द्विजभिन्नजन्मिषु
नृणामिदं भावयितुं शिरःस्थितम् ॥४७॥

---

विम्बं प्रगृह्य तत्क्षणात् स्वयोग्यताऽभावमवेत्य निजान्तरात् अङ्काय त्यजन्तमिव उपेतं, अहं भविनो भुवः प्रभोः पदात् अधःस्थो भविष्यन् (अपि) जनमूर्द्धभिः धृतः (अस्मि), तत् द्विजभिन्नजन्मिषु नृपाः ऊर्द्धाः, इदं (लोकान्) भावयितुं (इव) नृणां शिरःस्थितं, अतीवनिर्म्मलम्, अतएव पश्यतः एकैकजनस्य, विम्बं प्रतिविम्बं प्रगृह्य आत्मन्याधाय, तत्क्षणात् स्वयोग्यताभावम् स्वस्मिन्नात्मनि, आरोढुर्यो योग्यताया अभावम्, अवेत्य दृष्ट्वा, निजान्तरात् आत्ममध्यात्, अङ्काय द्रुतम्, त्यजन्तमिव, उपेतम् उपस्थितम् । अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः ॥ अहं मञ्चः, भविनो भविष्यतः, भुवः प्रभो-र्भूपालस्य, पदात् चरणात्, अधःस्थः पादपीठतया तलस्थो भविष्यन्नपि, जनानां वाहकभृत्यानां मूर्द्धभिर्मस्तकैर्धृतः अस्मि, तत्तस्मात्, द्विज-भिन्नजन्मिषु ब्राह्मणेतरप्राणिषु मध्ये नृपाः राजानः, ऊर्द्ध्वा उच्चाः, इदं लोकान् भावयितुं चिन्तयितुमिव नृणां वाहकजनानां शिरःसु

(পায়া চারিটীতে) স্বর্ণলতা ঝুলেতেছিল; সুতরাং উপরিভাগে চন্দ্রের প্রতিবিম্বধারী পর্ব্বত হইতে স্বর্ণময় প্রস্তরে পতনশীল জলপ্রবাহের ন্যায় সেই পায়াগুলিকে দেখা যাইতেছিল॥ মঞ্চখানি অত্যন্ত নির্ম্মল ছিল, সুতরাং দর্শনার্থী এক একটী লোকের প্রতিবিম্ব গ্রহণ করিয়া করিয়া তৎক্ষণাৎ তাহাদের যোগ্যতার অভাব দেখিয়া সেই মঞ্চখানি আপনার মধ্য হইতে দ্রুত সেই প্রতিবিম্বগুলিকে ত্যাগ করিতে করিতে যেন আসিতেছিল। আমি ভাবী রাজার চরণতলবর্ত্তী হইব, তথাপি

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रसह्य संगृह्य विवस्वतः स्वतः
समानतीव्रं प्रतिबिम्बमम्बरात् ।
द्वितीयमादित्यमुदित्य दीप्तिभिः
विकासयन्तं सकलां सभामिव ॥४८॥

चलत्यसौ किं धवलाचलः क्वचित्
तरत्ययं वा तरणिर्धरातले ।
नृपस्य मूर्त्ता किमु कीर्त्तिरीदृशं
प्रकल्पयन्तं जनताविकल्पनम् ॥४९॥

---

अम्बरात् समानतीव्रं विवस्वतः प्रतिबिम्बं स्वतः प्रसह्य संगृह्य उदित्य द्वितीयं आदित्यमिव दीप्तिभिः सकलां सभां विकासयन्तं, असौ किं धवलाचलः क्वचित् चलति ? अयं तरणिर्वा धरातले तरति ? किमु (वा) नृपस्य मूर्त्ता कीर्त्तिः ? ईदृशं जनतास्थितं शिरःस्थितम् । अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः, भविन इति "भविष्यति गम्यादयः" इति भवतेरिन्प्रत्ययान्तो निपातः ॥ अम्बरात् आकाशात्, समानतीव्रं सूर्य्यतुल्यप्रखरं विवस्वतः सूर्य्यस्य प्रतिबिम्बम्, स्वतः स्वयमेव प्रसह्य बलेन, संगृह्य आदाय, उदित्य सभान्तिकमुपेत्य, द्वितीयम् आदित्यं सूर्य्यमिव दीप्तिभिर्द्युतिभिः, सकलां सभाम्, विकासयन्तम् उद्भासयन्तम् । अत्र वाच्या भावाभिमानिनी द्रव्योत्प्रेक्षालङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते । "प्रसह्य तु हठार्थकम्" इत्यमरः ॥ असौ किम्, धवलाचलः कैलास-

এখন মানুষেরা আমাকে মাথায় ধরিয়াছে; অতএব ব্রাহ্মণভিন্ন প্রাণি-গণের মধ্যে ক্ষত্রিয়ই উচ্চ, ইহা লোকদিগকে চিন্তা করাইবার জন্যই যেন সেই মঞ্চখানি ভৃত্যগণের মস্তকে রহিয়াছিল। আকাশ হইতে সূর্য্যের তুল্য প্রখর সূর্য্যের প্রতিবিম্বকে বলপূর্ব্বক নিজেই গ্রহণ করিয়া

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नवाभिषेकाय च कायजीविनः
स्फुटद्युतिं स्फाटिकमुत्तमाङ्गतः।
अतिष्ठिपन् लोकविलोचनैः सह
सभासदां कञ्चनमञ्चमन्तिके ॥५०॥
(कुलकं समाप्तम्)

विकल्पनं प्रकल्पयन्तं, कायजीविनः उत्तमाङ्गतः स्फुटद्युतिं स्फाटिकं कञ्चन मञ्चं सभासदां अन्तिके नवाभिषेकाय लोकविलोचनैः सह अतिष्ठिपन् ॥४३—५०॥

पर्वतः, क्वचित् कुत्रचित्, चलति गच्छति? अयं तरणिः सूर्य्यो वा धरातले भूमौ, तरति देशाद्देशान्तरं गच्छति? किम्वा वा, नृपस्य राज्ञो भीष्मकस्य, मूर्त्ता मूर्त्तिमती, कीर्त्तिः, इदम्, जनतायाः विकल्पनं विविधकल्पनाम्, प्रकल्पयन्तम् उत्पादयन्तम्। अत्र त्रय एव शुद्ध-सन्देहालङ्काराः, छेकानुप्रासश्चेति संसृष्टिः। "यशसि धवलता" इत्यालङ्कारिकवचनप्रामाण्यात् "नृपस्य मूर्त्ता किम्वु कीर्त्ति"रित्युक्तम्। जनतेति "ग्रामजने"त्यादिना समूहार्थे तप्रत्ययः॥ कायजीविनः शारीरपरिश्रमेण जीविकानिर्व्वाहका भृत्याः, उत्तमाङ्गतः मस्तकेभ्यः, स्फुटा समन्तात् प्रकाशमाना द्युतिर्यस्य तम्, स्फाटिकं स्फटिकनिर्म्मितम्, कञ्चन कञ्चित्, मञ्चम्, सभासदामन्तिके, नवाभिषेकाय रुक्मिणो यौवराज्याभिषेकार्थम्, लोकानां तत्रत्यजनानां विलोचनैर्दृष्टिभिः सह, अतिष्ठिपन् स्थापितवन्तः। अत्र लोकविलोचनैः सहेति सहोक्ति-रलङ्कारश्छेकानुप्रासवृत्त्यनुप्रासश्चेति संसृष्टिः। अतिष्ठिपन्निति इनन्तस्य तिष्ठतेरद्यतन्याः प्रथमपुरुषबहुवचने रूपम् ॥४३—५०॥

উপস্থিত হইয়া সেই মঞ্চখানি দ্বিতীয় সূর্য্যের ন্যায় আপন দীপ্তিদ্বারা সমস্ত সভাকে প্রকাশ করিতেছিল॥ ঐটা কি কৈলাসপর্ব্বত কোথায়ও

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

জনৈরথান্তঃপুরতঃ পুরঃসরৈঃ
সমৈঃ সমং রুক্মিণি নিঃসৃতে সৃতৌ ।
সভা নিতষ্টম্ভ তদা তদেকদৃক্
নিশীথিনীশে তটিনীব নির্যতি ॥৫১॥

---

চলিয়া যাইতেছে? কিংবা সূর্য্য ভূতলে বিচরণ করিতেছে? অথবা রাজার কীর্ত্তি মূর্ত্তিমতী হইয়া প্রকাশ পাইতেছে? এইরূপে সেই মঞ্চখানি লোকের বিবিধ কল্পনার সৃষ্টি করিতেছিল ॥৪৩—৫০॥

অন্বয়ঃ—অথ রুক্মিণি অন্তঃপুরতঃ সমৈঃ পুরঃসরৈঃ জনৈঃ সমং সৃতৌ নিঃসৃতে (সতি), তদা নিশীথিনীশে নির্যতি তটিনী ইব তদেকদৃক্ সভা নিতষ্টম্ভ ॥৫১॥

জনৈরিতি । অথ মঞ্চানয়নানন্তরম্, রুক্মিণি রুক্মিনামকে জ্যেষ্ঠরাজপুত্রে, অন্তঃপুরতঃ, সমৈঃ বয়োভূষণাদিনা সমানৈঃ, পুরঃসরৈঃ-রগ্রগামিভিশ্চ, জনৈঃ, সমং সহ, সৃতৌ পথি, নিঃসৃতে নির্গতে সতি, তদা, নিশীথিনীশে চন্দ্রে, নির্যতি নির্গচ্ছতি সতি, তটিনী নদীব, তদেকদৃক্ তস্মিন্ রুক্মিণি একা কেবলা দৃক্ দৃষ্টির্যস্যাঃ সা সভা, নিতষ্টম্ভ স্তব্ধা বভূব । বিস্ময়াদৌৎসুক্যাচ্চেতি ভাবঃ ।

অত্র ছেকানুপ্রাসসংসৃষ্টা শ্রৌতোপমালঙ্কারঃ ।

"অয়নং বর্ত্ম-মার্গাধ্ব-পন্থানঃ পদবী সৃতিঃ" ইত্যমরঃ ।

নিতষ্টম্ভেতি নিপূর্ব্বস্য স্তন্‌ভেঃ পরোক্ষায়াম্, নির্যতীতি চ নিপূর্ব্বস্য ইণ্‌ধাতোঃ শন্তঙো রূপম্ ॥৫১॥

বাঙ্গালা—তদনন্তর রুক্মী, সমবয়স্ক ও অগ্রগামী কুমারগণের সহিত অন্তঃপুর হইতে পথে নির্গত হইলে, চন্দ্র উদয় পাইতে থাকিলে, নদীর

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुराणराजस्य चिरस्य वत्सला
सविस्मया सभ्यविभक्तभूभृताम् ।
प्रजासमाजस्य च भक्तिपूर्विका
त्रिधैव दृष्टिर्युगपत् पपात ताम् ॥५२॥
ततोऽनुगा काचन वामलोचना
शिवानुभावा शिविकाधिरोहिणी ।

ন্তায় সেই সভাটী নিস্তব্ধ হইল এবং সে সভার দৃষ্টি কেবল রুক্মীর উপরে পড়িল ॥৫১॥

अन्वयः—पुराणराजस्य चिरस्य वत्सला, सभ्यविभक्तभूभृतां सविस्मया, प्रजासमाजस्य च भक्तिपूर्विका, (इति) त्रिधा दृष्टिरिव युगपत् तां पपात ॥५२॥

पुराणेति । पुराणराजस्य प्राचीनन्नृपस्य भीष्मकस्य, चिरस्य चिरादवधि, वत्सला सस्नेहा, सभ्येषु विभक्ता राजपर्य्यायेण निरूपिता ये भूभृतो राजानस्तेषाम्, सविस्मया वेशभूषादिसौन्दर्य्यातिशया-दाश्चर्य्यान्विता, प्रजासमाजस्य राज्यस्थलोकसमूहस्य च, भक्तिपूर्विका अनुरक्तिप्रयुक्ता इति, त्रिधा वात्सल्य-विस्मय-भक्तिप्रयुक्तत्वात् त्रिविधा दृष्टिरिव युगपत् एकदा, तां रुक्मिणीम्, पपात जगाम ।

अत्र एकस्या एव दृष्टेः वात्सल्यप्रयुक्तत्वादिभेदेन अनेकधोल्लेखात् उल्लेखो नामालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ।

पुराणश्चासौ राजा चेति समासे "राजाहःसखिभ्यष्टच्" इति राजादित्वा-दतप्रत्यये पुराणराजेति रूपम् ॥५२॥

বাঙ্গালা—প্রাচীন রাজার চিরকালের সস্নেহ দৃষ্টি, সদস্যরাজগণের সবিস্ময় দৃষ্টি এবং প্রজাগণের সভক্তি দৃষ্টি—এই ত্রিবিধ দৃষ্টিই তৎকালে একদা রুক্মীর উপরে পতিত হইয়াছিল ॥৫২॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नरेन्द्रजश्चाहरतां सतां मनो
गिरीशगौरीपुरुरूपगौरवैः ॥५३॥
कुलीनशालीनतया नताश्च तां
विलोक्य लोकश्चकमे न कश्चन।
गुणे सकामा किल लौकिके नृणाम्
अलौकिके भक्तिमती मतिः पुनः ॥५४॥

---

अन्वयः—ततः अनुगा शिवानुभावा शिविकाधिरोहिणी काचन वामलोचना नरेन्द्रजश्च गिरीशगौरीपुरुरूपगौरवैः सतां मनः अहरतां ॥५३॥

तत इति। ततो रुक्मिण्या निर्गमनानन्तरम्, अनुगा तत्पश्चाद्गामिनी, शिवानुभावा शिवो मङ्गलमयः अनुभावः प्रभावो यस्याः सा, शिविकां नरवाह्ययानविशेषम् अधिरोहतीति सा, काचन काचित् वामलोचना अङ्गना, नरेन्द्रजो राजपुत्रः रुक्मी च, गिरीशगौर्य्योः शिवपार्वत्योरिव यानि पुरुरूपगौरवाणि प्रभूतसौन्दर्य्यसम्मानास्तैः, सतां तत्र विद्यमानानां जनानां मनः, अहरताम्।

अत्राहरतामित्येकया क्रियया वामलोचनानरेन्द्रजयोः प्रस्तुतयोरेव कर्त्तृतयाभिसम्बन्धात्तुल्ययोगितालङ्कारः, लुप्तोपमा चेत्यनयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते।

"सत्ये साधौ विद्यमाने पूजितेऽभ्यर्हिते च सत्" इत्यमरः ॥५३॥

বাঙ্গালা—তাহার পর সুলক্ষণা শিবিকারোহণে পশ্চাদ্গামিনী কোন তরুণী এবং রাজপুত্র রুক্মী, শিব ও পার্ব্বতীর ন্যায় প্রচুর সৌন্দর্য্য ও গৌরবদ্বারা তত্রত্য লোকদিগের চিত্ত আকর্ষণ করিতে লাগিলেন ॥৫৩॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उपेत्य पर्य्यङ्कमथार्य्यमप्रभम्
अलङ्कृतो मेरुमरीचिरञ्जितः।
अगात् स यद्देवपदाभिधेयतां
न तत्र चित्रं नरदेवजन्मनः ॥५५॥

अन्वयः—कश्चन लोकश्च कुलीनशालीनतया नतां तां विलोक्य न चकमे। नृणां मतिः किल लौकिके गुणे सकामा, अलौकिके पुनर्गुणे भक्तिमती (भवति) ॥५४॥

कुलीनेति। कश्चन लोकश्च कश्चिदपि जनः, कुलीनस्य सत्कुलजातजनस्य या शालीनता लज्जाशीलता तया, नताम् अवनतमस्तकाम्, तां रुक्मिपत्नीम्, विलोक्य, न चकमे न कामयामास। उक्तमर्थं समर्थयितुमाह गुण इति। नृणां मतिः किल, लौकिके लोकानां स्वभावजाते, गुणे सौन्दर्य्यादौ, सकामा कामाकुला भवति, अलौकिके असाधारणे, पुनर्गुणे लज्जाविनयादौ, भक्तिमती गौरवसम्पन्ना भवति।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, स च च्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥५४॥

বাঙ্গালা—তৎকালে রুক্মীর পত্নী সৎকুলজাতজনোচিত লজ্জাবশতঃ মস্তক অবনত করিয়া রহিয়াছিলেন, সুতরাং তত্রত্য কোন লোকই তাঁহাকে দেখিয়া কামাকুল হয় নাই। কারণ, লোকের মন লৌকিক গুণেই কামাকুল হইয়া থাকে, কিন্তু অলৌকিক গুণে ভক্তিই করে ॥৫৪॥

अन्वयः—अथ अलङ्कृतः मेरुमरीचिरञ्जितः सः अर्य्यमप्रभं पर्य्यङ्कं उपेत्य यत् देवपदाभिधेयतां अगात्, तत्र नरदेवजन्मनः चित्रं न ॥५५॥

उपेत्येति। अथ, अलङ्कृतः स्वर्णाद्यलङ्कारैर्भूषितः, अतएव, मेरुरिव सुमेरुपर्वत इव, मरीचिभिः स्वर्णकिरणैः रञ्जितः, स रुक्मी, अर्य्यमप्रभं सूर्य्यवदुज्ज्वलम्, पर्य्यङ्कं भूमिपतीनां ...

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दिगीश्वरांशान् वसुसंश्रयो वहन्
सुवर्णवानुच्चतमो धराधरः ।
सुमेरुतुल्यो नृपनन्दनस्तदा
दधार रुक्मीति स नाम सान्वयम् ॥५६॥

---

गत्वा, यत्; देवपदस्य देवेतिशब्दस्य अभिधेयतां वाच्यताम्, अगात् राजत्वलाभोपक्रमात् प्रापत्, "राजा भट्टारको देव" इत्यमरप्रामाण्यादिति भावः। तत्र देवपदाभिधेयतायाम्, नरदेवात् राज्ञो भीष्मकात् जन्म यस्य तस्य रुक्मिणः पक्षे, चित्रं किमप्याश्चर्यं नासीत्; देवोत्पन्नस्य देवत्वस्यैवौचित्यादित्याशयः।

अत्र चित्राभावं प्रति नरदेवजन्मन इति पदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, छेकानुप्रासश्चेत्यनयोः संसृष्टिः ॥५५॥

বাঙ্গালা—স্বর্ণালঙ্কারে অলঙ্কৃত এবং সুমেরুপর্ব্বতের ন্যায় স্বর্ণকিরণে রঞ্জিত রাজকুমার রুক্মী সূর্য্যের ন্যায় উজ্জ্বল সেই স্ফটিকমঞ্চের নিকট যাইয়া যে দেবসংজ্ঞা লাভ করিয়াছিলেন, নরদেব অর্থাৎ রাজা হইতে উৎপন্ন সেই রুক্মীর পক্ষে তাহাতে কোনও আশ্চর্য্য ছিল না ॥৫৫॥

अन्वयः—दिगीश्वरांशान् वहन् वसुसंश्रयः सुवर्णवान् उच्चतमः धराधरः (अतएव) सुमेरुतुल्यः स नृपनन्दनः तदा 'रुक्मी' इति सान्वयं नाम दधार ॥५६॥

दिगिति। दिगीश्वरांशान् इन्द्रादिदिक्पालांशान्, वहन्, "अष्टानां लोकपालानां मात्राभिर्निर्मितो नृपः" इति स्मरणादिति भावः; अन्यत्र दिगीश्वरांशान् दिक्पालभोग्यदेशान् वहन्, वसून् अष्टौ वसुदेवान् वसूनि धनानि च संश्रयते इति सः, सुवर्णवान् शोभनो वर्णोऽस्यास्तीति सः, अन्यत्र तु स्वर्णयुक्तः, उच्चतमः अतीवोन्नतदेहः, धराधरो भूपालः,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्षितिप्रदेशादुपदेशतो गुरो:
विषेकमञ्चोत्थितमात्मभूप्रभम्।
उपेत्य लेमु परिलुप्तधीर्वधूः
सुगन्धिभिर्लोलतात्वमभ्यगात् ॥५७॥

अतएव सुमेरुतुल्यः, स नृपनन्दनो ज्येष्ठराजपुत्रः, तदा, 'रुक्मी' इति सान्वयं यौगिकार्थसहितम्, नाम संज्ञाम्, दधार धारयामास। रुक्मं स्वर्णमस्यास्तीति रुक्मी इति व्युत्पत्तेरिति भावः।

अत्र उक्तविधसान्वयं नामधारणं प्रति पूर्वार्द्धगतपदार्था हेतव इति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, आर्थोपमा चानयोरङ्गाङ्गिभावेन सङ्करः ॥५६॥

বাঙ্গালা—দিক্‌পালগণের অংশবাহী, বসুর অবলম্বন, স্বর্ণযুক্ত, উন্নতদেহ এবং পৃথিবীপালক জ্যেষ্ঠ রাজপুত্র 'রুক্মী' এইরূপ যে নাম ধারণ করিয়াছিলেন, তাহা যোগার্থযুক্তই হইয়াছিল ॥৫৬॥

अन्वयः—वधूः गुरोः उपदेशतः क्षितिप्रदेशात् विषेकमञ्चोत्थितं आत्मभूप्रभं सुगन्धिभिः लेमुं उपेत्य परिलुप्तधीः (सती) लोलतात्वं अभ्यगात् ॥५७॥

क्षितीति। वधूः काचिद्वारवनिता, गुरोराचार्य्यस्य, उपदेशत उपदेशात्, क्षितिप्रदेशात् भूतलात्, विषेकमञ्चे अभिषेकपर्य्यङ्के उत्थितम्, आत्मभूप्रभं कामदेवतुल्यं रुक्मिणम्, सुगन्धिभिः चन्दनादिभिर्द्रव्यैः, लेमुम, उपेत्य गत्वा, परिलुप्तधीः कामाविर्भावात् नष्टकर्त्तव्यबुद्धिः सती, लोललतात्वं चञ्चललतास्वारूप्यं कम्पमित्यर्थः, अभ्यगात् प्रापत्।

अत्र आत्मभूप्रभमिति लुप्तोपमा, लोललतात्वमिति निरङ्गं केवलरूपकम्, पूर्व्ववदनुप्रासौ चेत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ॥५७॥

বাঙ্গালা—কামদেবতুল্য মনোহরমূর্ত্তি রাজকুমার রুক্মী আচার্য্যের

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नृपात्मजस्याङ्गविलेपने तदा
तदीयलावण्यरुचीसरोऽन्तरे ।
नवाङ्गनानां कुचकोरकः करः
मुखञ्च पुष्पाण्युदजानि पुस्फुटुः ॥५८॥

---

উপদেশ অনুসারে ভূতল হইতে সেই মঞ্চের উপর উঠিলে, কোনও বারবনিতা তাঁহার অঙ্গে সুগন্ধি দ্রব্য লেপন করিতে যাইয়া নষ্টবুদ্ধি হইয়া চঞ্চল লতার ন্যায় কাঁপিতে লাগিল ॥৫৭॥

अन्वयः—तदा नृपात्मजस्य अङ्गविलेपने तदीयलावण्यरुचीसरोऽन्तरे नवाङ्गनानां कुचकोरकः करः मुखञ्च (एतानि) उदजानि पुष्पाणि पुस्फुटुः ॥५८॥

नृपेति । तदा, नृपात्मजस्य राजपुत्रस्य रुक्मिणः, अङ्गविलेपने सुगन्धिद्रव्यैरङ्गलेपने तदीये कुमारसम्बन्धिन्यौ ये लावण्यरुच्यौ लावण्यप्रभे ते एव सरो जलाशयस्तस्य अन्तरे मध्ये, नवाङ्गनानां वारतरुणीनाम्, कुचस्तनः कोरकः कलिकेव स कुचकोरकः, करः पाणिः, मुखं वदनञ्च, एतानि त्रीणि, उदजानि जलजानि, पुष्पाणि पद्मानीत्यर्थः, पुस्फुटुः विकसन्ति स्म ।

अत्र लावण्यरुच्योः सरस्त्वारोपः कुचादौ पद्मत्वारोपे निमित्तमिति परम्परितरूपकमलङ्कारः, "मुखं तव कुरङ्गाक्षि ! सरोजमिति नान्यथा" इति दर्पणोदाहरण इव द्वितीयार्द्धे समासाभावेऽपि रूपकप्रसङ्गे-रवश्यम्भावात्, छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ।

"कलिका कोरकः पुमान्" इत्यमरः ।

उदजानीति "उदकस्योदः" इत्यादिना उदकशब्दस्य उदादेशः ॥५८॥

বাঙ্গালা—রাজকুমার রুক্মীর অঙ্গে সুগন্ধি দ্রব্য লেপন করিবার

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिप्रलिप्ते ललितानुलेपने
नवा मरीची रुरुचे विसारिणी।
असह्यवेगा नु पतिंवरेन्दिरा
तनुं विषेकात् समपूरयत् पुरः ॥५९॥
गुरूपदिष्टोऽपि वधूविलेपने
परं व्यलम्बिष्ट नितम्बिनीगणः।

---

সময়ে তাঁহার লাবণ্য ও প্রভারূপ সরোবরের মধ্যে বারতরুণীগণের কলিকাতুল্য স্তন, হস্ত ও মুখরূপ তিনটী পদ্ম প্রকাশ পাইতেছিল ॥৫৮॥

अन्वयः—ललितानुलेपने परिप्रलिप्ते (सति) विसारिणी नवा मरीची रुरुचे। असह्यवेगा पतिंवरा इन्दिरा विषेकात् पुरः (एव) तनुं समपूरयत् नु ॥५९॥

परीति। ललितानुलेपने मनोहरानुलेपनद्रव्ये चन्दनादौ, परिप्रलिप्ते कुमारस्य सर्वेष्वङ्गेषु अर्पिते सति, विसारिणी सर्वदिग्गामिनी, नवा अपूर्वा, मरीची कुमारस्य कान्तिः, रुरुचे दिदीपे। अत्रोत्प्रेक्षते असह्येति। असह्यो वेगो वर्याावेगो यस्याः सा, पतिं वृणीत इति पतिंवरा, इन्दिरा लक्ष्मीः, विषेकात् अभिषेकात्, पुरः पूर्वमेव, तनुं कुमारदेहम्, समपूरयत् नु? आत्मना परिपूरितवती किम्?।

अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः, छेकानुप्रासेन संसृज्यते ॥५९॥

বাঙ্গালা—রাজকুমার রুক্মীর সমস্ত অঙ্গে মনোহর অনুলেপন দ্রব্য মাখাইয়া দিলে, তাঁহার দেহের অপূর্ব্ব প্রভা সকল দিকে প্রকাশ পাইল; সুতরাং পতিবরণার্থিনী অসহ্যবেগশালিনী লক্ষ্মী কি অভিষেকের পূর্ব্বেই তাঁহার দেহ পূর্ণ করিয়াছিলেন? ॥৫৯॥

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भृशं कराकर्षमृते वियुक्ततां
प्रयात्ययस्कान्तमणेरयः कथम् ॥६०॥
कुमारवामे नववामलोचना
सहस्रदृग्गोचरतां जगाम सा ।
लतां सलीलां ललनाख्य पुष्पिणीम्
अवश्यमुत्पश्यति लोक उत्सुकः ॥६१॥

अन्वयः—नितम्बिनीगणः गुरूपदिष्टः (सन्) अपि वधूविलेपने परं व्यलम्बिष्ट । अयः भृशं कराकर्षं ऋते कथं अयस्कान्तमणेः वियुक्ततां प्रयाति ॥६०॥

गुर्विति । नितम्बिनीनां वारवनितानां गणः, गुरुणा आचार्य्येण उपदिष्टः सन्नपि, वध्वा रुक्मिपत्न्या विलेपने, परमत्यन्तं व्यलम्बिष्ट विलम्बं कृतवान्; रुक्मिगात्रतो हस्तानयने विलम्बादिति भावः। तत्र हेतुमाह भृशमिति । अयो लौहं कर्त्तृ, भृशं सातिशयम्, करेण आकर्षम् आकर्षणम्, ऋते विना, कथम्, अयस्कान्तमणेः सकाशात्, वियुक्ततां विश्लेषम्, प्रयाति प्राप्नोति । नितम्बिनीगणस्य हस्तः खलु अयस्कान्तमणावय इव रुक्मिगात्रे भृशं संसक्त इत्याशयः ।

अत्र साधर्म्येण दृष्टान्तोऽलङ्कारश्छेकानुप्रासेन संसृज्यते ॥६०॥

বাঙ্গালা—ক্রমে আচার্য্য কুমারবধূর অঙ্গে সুগন্ধি দ্রব্য লেপনের উপদেশ করিলেও, বারবনিতারা তাহাতে গুরুতর বিলম্ব করিল। কারণ, হস্তদ্বারা গুরুতর আকর্ষণ না করিলে, লৌহ চুম্বকপ্রস্তর হইতে বিশ্লিষ্ট হইবে কেন ? ॥৬০॥

अन्वयः—कुमारवामे सा नववामलोचना सहस्रदृग्गोचरतां जगाम । लोकः उत्सुकः (सन्) सलीलां पुष्पिणीं लतां ललनाख्य अवश्यमुत्पश्यति ॥६१॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जहार साऽचीत्यि रसप्रतानिनी
प्रतानिनी पुष्पवतीव षट्पदान्।
न को जनः पश्यति हीनबालतां
न वा लतां काङ्क्षति को मधुव्रतः ॥६२॥

कुमारेति। कुमारस्य रुक्मिणो वामे वामपार्श्वे, सा, नववामलोचना नवीनाङ्गना रुक्मिपत्नी, सहस्रदृशां बहुतरलोकलोचनानां गोचरतां विषयत्वम्, जगाम प्राप; बहव एव लोकाः सौन्दर्य्यातिरेकात्तां ददृशुरित्यर्थः। लोकः, उत्सुकः उत्कण्ठितः सन्नेव, सलीलां सविलासाम्, पुष्पिणीं पुष्पवतीञ्च, लताम्, ललनां योषितञ्च, अवश्यं ध्रुवमेव उत्पश्यति अवलोकते।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, प्रस्तुताया ललनाया अप्रस्तुताया लतायाश्च उत्पश्यतीत्येकया क्रियया कर्म्मतयाभिसम्बन्धाद्दीपकञ्चानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते।

"स्त्रियः सुमनसः पुष्पम्" इति "स्यादृजः पुष्पमार्त्तवम्" इति चामरः ॥६१॥

বাঙ্গালা—রুক্মীর বামপার্শ্ববর্ত্তিনী সেই নবাঙ্গনা সহস্র লোকের দৃষ্টির বিষয় হইয়াছিলেন। কারণ, মানুষ উৎকণ্ঠিত হইয়াই সলীলা ও পুষ্পবতী লতা ও রমণীকে অবশ্যই দেখিয়া থাকে ॥৬১॥

अन्वयः—पुष्पवती प्रतानिनी षट्पदानिव रसप्रतानिनी सा अचीपि जहार। को जनः हीनबालतां न पश्यति, को मधुव्रतो वा लतां न काङ्क्षति ॥६२॥

जहारेति। पुष्पवती कुसुमशालिनी, प्रतानिनी शाखापल्लवादिविस्तारवती लता, षट्पदान् भ्रमरानिव, रसप्रतानिनी अनुरागस्य

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततोऽबला बाललतातिकोमला
यदा धराया उददीधरद्घटम् ।
विलोक्य लोकाः कलसत्रयं तदा
शशङ्किरे तां बलवद्बलान्विताम् ॥६३॥

शृङ्गाररसविस्तारवती, सा कुमारवधूः, शचीव लोकलोचनानि, जहार आचकर्ष । तथा च को जनः, हीना परित्यक्ता बालता बाल्यं वया यया तां युवतिमित्यर्थः, न पश्यति अपि तु सर्व एव पश्यत्येवेत्यर्थः । को मधुव्रतो भ्रमरो वा, लताम्, न काङ्क्षति नाभिलषति अपि तु सर्व एव काङ्क्षतीति तात्पर्य्यम् ।

अत्र पूर्वार्द्धे श्रौतोपमा, तृतीयपादे कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः, द्वितीयार्द्धे दृष्टान्तश्च, श्लोकसमुदाये अन्त्यानुप्रयमकश्चेति संसृष्टिः ।

"लता प्रतानिनी वीरुत्" इत्याद्यमरः ॥६२॥

বাঙ্গালা—শাখাপুষ্পসমন্বিতা লতা যেমন ভ্রমরগণকে আকর্ষণ করে, সেইরূপ রসবিস্তারশালিনী সেই কুমারবধূ লোকের দৃষ্টি আকর্ষণ করিতে লাগিলেন । কারণ, কোন্ মানুষ তরুণী রমণীকে দর্শন না করে এবং কোন্ ভ্রমরই বা লতার অভিলাষ না করে ? ॥৬২॥

अन्वयः—ततः बाललतातिकोमला अबला यदा धराया घटं उददीधरत्, तदा लोकाः कलसत्रयं विलोक्य तां बलवद्बलान्वितां शशङ्किरे ॥६३॥

तत इति । ततः अनुलेपनानन्तरम्, बाललता नववल्लीव अतिकोमला काचिदबला वारवनिता, यदा, धराया भूतलात्, घटम् अभिषेककुम्भम्, उददीधरत् स्नपनार्थमुत्तोलितवती, तदा, लोकाः, कलसत्रयं द्वौ [illegible] इति [illegible]

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri Gyaan Kosha

प्रसन्नपर्य्यङ्कनिषस्रदम्पती
विलोकयन् स्नापयतोऽङ्गनाजनान्।
स्वराद्रिरूढ़ौ व्रततीवनस्पती
प्रवर्षुकां वारिदपङ्क्तिमस्मरत् ॥६४॥

---

विलोक्य, ताम्, अबलाम्, बलवद्बलान्विताम् अत्यन्तशक्तियुक्ताम्, शशङ्किरे सम्भावितवन्तः, युगपत् कलसत्रयधारणादित्याशयः।

अत्र बाललतातिकोमलेति लुप्तोपमा, "कथमुपरि कलापिनः कलाप" इति दर्पणोदाहरणवत् स्तनद्वये कलसद्वयात्वाध्यवसायान्नेदे अभेदाध्यवसायमूलातिशयोक्तिः, अबलापि बलवद्बलान्वितेति विरोधाभासः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः।

"बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरे" इत्यमरः।

उदत्तीधरदिति इनन्तधृधातोरद्यतन्यां रूपम् ॥६३॥

বাঙ্গালা—তাহার পর অত্যন্ত কোমলাঙ্গী কোন বারবনিতা যখন ভূতল হইতে জলপূর্ণ কুম্ভ উত্তোলন করিল, তখন তত্রত্য লোকসকল ঐ বারবনিতাকে একদা তিনটী কলস বহন করিতে দেখিয়া তাহাকে অত্যন্ত বলবতী বলিয়া মনে করিল ॥৬৩॥ .

अन्वयः—प्रसन्न-पर्य्यङ्क-निषण्ण दम्पती स्नापयतः अङ्गनाजनान् विलोकयन् (जनः) स्वराद्रिरूढ़ौ व्रततीवनस्पती प्रवर्षुकां वारिदपङ्क्तिं अस्मरत् ॥६४॥

प्रसन्नेति। प्रसन्ने निर्म्मले पर्य्यङ्के प्रागुक्तमञ्चे निषण्णौ स्थितौ यौ दम्पती भार्य्यापती तौ भार्य्यासहितं रुक्मिणमित्यर्थः, स्नापयतः अभिषिञ्चतः, अङ्गनाजनान् वारवनिताः, विलोकयन् जनः, स्वराद्रिः शुभ्रकैलासपर्वतस्तत्र रूढ़ौ उत्पन्नौ, व्रततीवनस्पती परस्परसंश्लिष्ट-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

সমন্ত্রকৈঃ পাপনিবারিবারিভিঃ
শুচিপ্রিয়ৌ তাবসিচদ্দ্বিজঃ শুচিঃ ।
রিপোর্বিবর্ণা বরবর্ণিনো চ তত্
নিশম্য দীনাঽশ্রুজলেন মেদিনীম্ ॥৬৫॥

লতান্বিতৌ, প্রবর্ষুকাং বারিণা বর্ষন্তীম্, বারিদপঙ্ক্তিং মেঘমালাম্, অস্মরত্ সাদৃশ্যাতিশয়াত্ স্মৃতবান্ ।

অতএবাত্র স্মরণালঙ্কারো বৃত্ত্যনুপ্রাসেন সংসৃজ্যতে ।

"বনস্পতিস্ত্বথমালে" ইত্যমরঃ ।

স্নাপয়ত ইতি "গ্লাস্নাবনুবমশ্চ" ইতি বিকল্পাধিকারাত্ পক্ষে ন হ্রস্বঃ, প্রবর্ষুকামিতি "স্মৃ-কম—" ইত্যাদিনা বৃষধাতোরুকঞ্, তস্য চ নিষ্ঠাদিত্বাত্ প্রততীবনস্পতী ইতি কর্ম্মণি ন ষষ্ঠী ॥৬৪॥

বাঙ্গালা—ক্রমে রুক্মী ও তাঁহার ভার্য্যা সেই নির্ম্মল মঞ্চে অধিষ্ঠান করিলে, বারবনিতারা তাঁহাদিগকে স্নান করাইতে লাগিল, তাহা দেখিয়া তত্রত্য লোকেরা কৈলাসপর্ব্বতসঞ্জাত পরস্পর সংশ্লিষ্ট লতা ও বৃক্ষের উপরে বর্ষাকারিণী মেঘমালাকে স্মরণ করিতে লাগিল ॥৬৪॥

অন্বয়ঃ—শুচিঃ দ্বিজঃ সমন্ত্রকৈঃ পাপনিবারিবারিভিঃ শুচিপ্রিয়ৌ অসিচত্ ; রিপোঃ বরবর্ণিনী চ তত্ নিশম্য বিবর্ণা দীনা চ (সতী) অশ্রুজলেন মেদিনীং অসিচত্ ॥৬৫॥

অথ বারবনিতা লিপ্তগন্ধদ্রব্যপ্রক্ষালনার্থং স্নাপয়ন্তি স্ম, বৈধস্নপনন্তু কুত ইত্যাহ সমন্ত্রকৈরিতি। শুচিঃ স্নানাদিনা পবিত্রীভূতঃ, দ্বিজঃ কশ্চিদ্ব্রাহ্মণঃ, সমন্ত্রকৈর্মন্ত্রপাঠসহিতৈঃ, পাপনিবারিবারিভিঃ পাপনাশকজলৈঃ, শুচিঃ শৃঙ্গারঃ প্রিয়ো যয়োস্তৌ পূর্ণযৌবনাদিতি ভাবঃ ; তৌ দম্পতী, অসিচত্ অভিষিক্তবান্, রিপোঃ শত্রুপক্ষস্য, বরবর্ণিনী অঙ্গনা

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तमावसानं वसनं बभूवतुः
ग्रहीतुकामे युगपद्वधूश्रियौ ।
अपत्रपिष्णुः प्रथमा न सुस्थिरा
पराऽस्थिरा विग्रहमग्रहीत् समम् ॥६६॥

षं, तत् रुक्मिणो राज्याभिषेचनम्, निशम्य लोकमुखादाकर्ण्य, विवर्णा उद्वेगेन मलिनमुखी, दीना कातरा च सती, अक्षिजलेन भाविपति-विनाशशङ्कया अश्रुजलेन, मेदिनीं भूमिम्, असिचत् ।

अत्र रिपुवरवर्णिन्या अक्षिजलेन मेदिनीसेचनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, असिचदित्येकया क्रियया तौ मेदिनीमित्युभयोः कर्म्मतयाभिसम्बन्धात्तुल्ययोगिता चेत्युभयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासेन संसृज्यते ।

"शृङ्गारः शुचिरुज्ज्वलः" इत्यमरः ।

असिचदिति अद्यतन्या दौ "अत् असु-वचि" इत्यादिना अधि रूपम् ॥६५॥

বাঙ্গালা—তদনন্তর কোন পবিত্র ব্রাহ্মণ অভিষেকমন্ত্রপাঠপূর্ব্বক পাপনাশক জলদ্বারা সেই শৃঙ্গারপ্রিয় কুমারদম্পতিকে অভিষিক্ত করিলেন। তাহা শুনিয়া শত্রুপক্ষের স্ত্রীলোকগণ উদ্বেগে মলিনবদন ও কাতরচিত্ত হইয়া নয়নজলদ্বারা ভূতল সিক্ত করিল ॥৬৫॥

अन्वयः—वधूश्रियौ युगपत् ( एव ) वसनं आवसानं तं ग्रहीतुकामे बभूवतुः । ( किन्तु ) अपत्रपिष्णुः सुस्थिरा च प्रथमा विग्रहं न अग्रहीत्, अस्थिरा परा तु समं (एव) विग्रहं अग्रहीत् ॥६६॥

तमिति । वधूः रुक्मिभार्य्या श्रीर्लक्ष्मीश्चेति ते वधूश्रियौ, युगपत् एकदैव, वसनं युवराजोचितं वस्त्रम्, आवसानम् अभिषेकात् परं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धृतः किरीटी मणिरत्नभास्वरः
विधुः शिवस्येव शिरस्यमुष्य यः ।
अपाहरत् स प्रतिबिम्बकैतवात्
सदःस्थितानां प्रभुतां महीभृताम् ॥६७॥

---

परिदधानम्, तं रुक्मिणम्, ग्रहीतुं सौन्दर्य्यातिरेकादालिङ्गितुं कामो ययोस्ते, बभूवतुः । किन्तु, अपत्रपिष्णुर्लज्जाशीला, सुस्थिरा धैर्य्यशालिनी च, प्रथमा वधूः, विग्रहं रुक्मिशरीरम्, न अग्रहीत् ; अस्थिरा चञ्चलेत्युपलक्षणं निर्लज्जा च, परा श्रीस्तु, समं वसनपरिधानसमकालमेव, विग्रहं रुक्मिशरीरम्, अग्रहीत् । युवराजोचितवस्त्रपरिधानात् परं रुक्मिणः परमैव शोभा सञ्जातेति निष्कर्षः ।

अत्र बभूवतुरित्येकया क्रियया वधूश्रियोः कर्त्तृतयाभिसम्बन्धात्तुल्ययोगिता, वधूपक्षे ग्रहणाभावं प्रति अपेत्यादिपदद्वयार्थस्य श्रीपक्षे ग्रहणं प्रति च सुस्थिरेति पदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गद्वयं श्रियां स्त्रीव्यवहारसमारोपात् समासोक्तिश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासेन संसृज्यते ।

आवसानमिति "वस आच्छादने" इत्यस्यानशि रूपम् । अपत्रपिष्णुरिति अपपूर्वस्य त्रपधातोः "आल्पलंकृञ्" इत्यादिना इष्णुच् ॥६६॥

বাঙ্গালা—অভিষেকের পরে রুক্মী বস্ত্র পরিধান করিতে লাগিলে, বধূ ও শ্রী এক সময়ই তাঁহাকে আলিঙ্গন করিবার ইচ্ছা করিয়াছিলেন ; কিন্তু লজ্জাশীলা ও ধৈর্য্যশালিনী বধূ তাহা পারিলেন না ; আর নির্লজ্জা ও চঞ্চলা শ্রী বস্ত্র পরিধান করিবার সময়েই রুক্মীর শরীর ধারণ করিয়াছিলেন ॥৬৬॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धृते किरीटेऽथ वधूशिरस्यपि
सुयोजिते चाभरणेऽखिले तयोः ।
प्रलब्धवान् सभ्यविदग्धमुग्धयो-
र्गणः पुनर्ज्ञानमिदं तदा द्विधा ॥৬৮॥

---

अन्वयः—शिवस्य शिरसि विधुरिव अमुष्य शिरसि मणिरत्नभास्वरः यः किरीटः धृतः, सः प्रतिविम्बकैतवात् सदःस्थितानां महीभृतां प्रभुतां अपाहरत् (इव) ॥৬৭॥

धृत इति । शिवस्य, शिरसि, विधुश्चन्द्र इव, अमुष्य रुक्मिणः शिरसि, मणिरत्नैर्भास्वर उज्ज्वलः, यः, किरीटो मुकुटम्, धृतो धारणेनावस्थितः ; स किरीटः, प्रतिविम्बकैतवात् महीभृतामेव प्रतिविम्बग्रहणच्छलात्, सदःस्थितानां सभायां विद्यमानानाम्, महीभृतां राज्ञाम्, प्रभुता-माधिपत्यम्, अपाहरदग्रहीदिव ।

अत्र शिवस्य विधुरिवेति श्रौतोपमा, द्वितीयार्द्धे सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षा, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः ॥৬৭॥

বাঙ্গালা—শিবের মস্তকে চন্দ্রের ন্যায় রুক্মীর মস্তকে মণিরত্নে উজ্জ্বল যে কিরীট সমর্পিত হইল, তাহা প্রতিবিম্বচ্ছলে সভাস্থিত রাজগণের আধিপত্যই যেন গ্রহণ করিল ॥৬৭॥

अन्वयः—अथ वधूशिरसि अपि किरीटे धृते अखिले आभरणे च तयोः सुयोजिते (सति) सभ्यविदग्धमुग्धयोर्गणः तदा इदं पुनः द्विधा ज्ञानं प्रलब्धवान् ॥৬৮॥

धृत इति । अथ रुक्मिणः किरीटधारणानन्तरम्, वध्वा रुक्मि-महिष्या शिरस्यपि, किरीटे, धृते धारणेनावस्थिते, अखिले सकले, आभरणे अलङ्कारे च, तयो रुक्मितन्महिष्योः, सुयोजिते सुष्ठु परिधापिते



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पतिंवरां निर्म्मलमालधारिणीं
श्रियं समेतां बुबुधे वधूं बुधः ।
अबोधि मुग्धश्च पुनश्च रुक्मिणं
वरं वरीतुं किमितीयमिच्छति ॥६८॥

सति, सभ्यौ च तौ विदग्धमुग्धौ पण्डितसुन्दरौ चेति तयोः, गणः समूहः, तदा, इदं वक्ष्यमाणम्, पुनर्द्विधा द्विप्रकारम्, ज्ञानम्, प्रलब्धवान् ।

अत्र छेकानुप्रासोऽलङ्कारः ॥६८॥

বাঙ্গালা—তদনন্তর মহিষীর মস্তকেও মুকুট সমর্পিত হইলে এবং তাঁহাদের দুই জনেরই অঙ্গে সমস্ত অলঙ্কার পরিধান করাইয়া দিলে, তখন সভাস্থিত পণ্ডিতগণ ও সুন্দর পুরুষগণ এই প্রকার জ্ঞান লাভ করিলেন ॥৬৮॥

अन्वयः—बुधः वधूं पतिंवरां समेतां निर्म्मलमालधारिणीं श्रियं बुबुधे। मुग्धश्च इयं पुनश्च रुक्मिणं वरं वरीतुं किं इच्छति इति अबोधि ॥६९॥

पतिमिति । बुध्यत इति बुधो बुद्धिमान् जनः, वधूं रुक्मिमहिषीम्, पतिं वृणीत इति पतिंवरा ताम्, समेतां समागताम्, निर्म्मलां मालां बिभर्त्तीति निर्म्मलमालधारिणी ताम्, श्रियं साक्षाल्लक्ष्मीम्, बुबुधे मेने; मालाधारित्वादलौकिकसौन्दर्य्याच्चेति भावः । मुग्धो मूढ़श्च, द्विःपति-वरणसम्भावनान्मूढ़त्वमित्यभिप्रायः । इयं तरुणी, पुनश्च पुनरपि, रुक्मिणम्, वरम्, वरीतुम्, किम्, इच्छति, इति अबोधि सम्भावितवान्; मालाधारणादित्याशयः ।

अत्र एकस्या वध्वा अनेकबोद्धृत्वात् रूपकोत्प्रेक्षायोगाच्च उल्लेखो नामालङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

पतिंवरेति "नाम्नि तॄभृ—" इत्यादिना खप्रत्यये "ऋखारुषोर्म्मोऽन्तः"

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

বপুর্ম্মহালঙ্করণেন কিঙ্করৈঃ
অলঙ্কৃতং রুক্মমুখেন রুক্মিণঃ।
মহীপতির্নন্দনকান্তিনন্দিনঃ
শুভান্নবীনাৎ সমশুশুভন্মুখম্ ॥৭০॥

---

ইতি মকারাগমঃ। মালভারিণীতি "যাকারৌ স্ত্রীকৃতৌ হ্রস্বঃ ক্বচিৎ" ইতি মালাশব্দস্য হ্রস্বান্ততা। বরীতুমিতি "বৃবৃদ্‌ভ্যো‌ऽপি—" ইত্যাদিনা ইটো দীর্ঘত্বম্ ॥৬৯॥

বাঙ্গালা—স্বয়ং লক্ষ্মীদেবী পতিবরণ করিবার জন্যই যেন নির্ম্মল মালা লইয়া আসিয়াছেন ইহা রুক্মিমহিষীর সম্বন্ধে বুদ্ধিমান্ লোকেরা মনে করিলেন; আর নির্ব্বোধ লোকেরা মনে করিল যে, 'এই তরুণী কি আবারও পতিবরণ করিবার ইচ্ছা করিতেছে?' ॥৬৯॥

অন্বয়:—কিঙ্করৈঃ রুক্মমুখেন মহালঙ্করণেন রুক্মিণঃ বপুঃ অলঙ্কৃতং, (তস্য) নবীনাৎ শুভাৎ নন্দনকান্তিনন্দিনঃ মহীপতেঃ মুখং সমশুশুভৎ ॥৭০॥

বপুরিতি। কিঙ্করৈর্ভৃত্যৈঃ, রুক্মমুখেন স্বর্ণালঙ্কারাদিনা, মহালঙ্করণেন প্রশস্তভূষণেন, রুক্মিণো বপুঃ শরীরম্, অলঙ্কৃতং শোভিতম্, তস্যালঙ্করণম্, নবীনাৎ নূতনাৎ, শুভাৎ পুত্রস্য যৌবরাজ্যাভিষেকরূপাৎ মঙ্গলব্যাপারাৎ, নন্দনস্য পুত্রস্য কান্ত্যা শোভয়া নন্দতি আনন্দমনুভবতীতি তস্য, মহীপতে রাজ্ঞো ভীষ্মকস্য, মুখং বদনমণ্ডলম্, সমশুশুভৎ সম্যক্‌শোভিতবৎ। অহো! মহদাশ্চর্য্যমেতদিতি ভাবঃ।

অত্র কারণীভূতমলঙ্করণং যুবরাজে, তৎকার্য্যভূতং মুখশোভনন্তু রাজনি ভীষ্মক ইতি কার্য্যকারণয়োর্ভিন্নদেশবর্ত্তিত্বাদসঙ্গতির্নামালঙ্কারঃ পূর্ব্ববদনুপ্রাসাভ্যাং সংসৃজ্যতে ॥৭০॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

জরন্ যদা সন্ততবৎসবৎসলঃ
ভুবঃ প্রদানং কৃতবান্ কৃতী নৃপঃ ।
মহামহীভারভরাদিবাপতৎ
তদা পদাগ্রেঽস্য কুমারমস্তকম্ ॥৭১॥

বাঙ্গালা—ভৃত্যেরা স্বর্ণালঙ্কারপ্রভৃতি উত্তম অলঙ্কারদ্বারা রুক্মীর শরীরটী অলঙ্কৃত করিয়াছিল; কিন্তু তাহা পুত্রের সৌন্দর্য্যদর্শনে আনন্দিতচিত্ত রাজা ভীষ্মকের মুখমণ্ডলকে নূতন মাঙ্গলিক ব্যাপার-নিবন্ধন শোভিত করিল ॥৭০॥

অন্বয়ঃ—যদা সন্তত-বৎস-বৎসলঃ কৃতী (চ) জরন্ নৃপঃ ভুবঃ প্রদানং কৃতবান্; তদা কুমারমস্তকং মহামহীভারভরাদিব অস্য পদাগ্রে অপতৎ ॥৭১॥

জরন্নিতি। যদা, সন্ততং সর্ব্বদা বৎসে পুত্রাদৌ বৎসলঃ স্নেহশীলঃ, কৃতী সর্ব্বকার্য্যনিপুণশ্চ, জরন্ বৃদ্ধঃ, নৃপো ভীষ্মকঃ, ভুবো রাজ্যস্য প্রদানং রুক্মিণে সমর্পণম্, কৃতবান্; তদা, কুমারস্য যুবরাজস্য রুক্মিণো মস্তকম্, মহান্ যো মহ্যা রাজ্যস্য ভারস্তস্য ভরাদ্বিন্যাসাদিব, অস্য নৃপস্য ভীষ্মকস্য, পদাগ্রে চরণসম্মুখে, অপতৎ; রুক্মী ভীষ্মকপদে নমশ্চকারেত্যর্থঃ।

অত্র মহামহীভারভরাদিবেতি হেতূৎপ্রেক্ষালঙ্কারঃ বৃত্ত্যনুপ্রাসচ্ছেকানু-প্রাসশ্চেতি সংসৃষ্টিঃ।

"বর্ষীয়ান্ দশমী জ্যায়ান্ জীনো জীর্ণো জরন্নপি" ইত্যমরঃ। "বৎসঃ স্নিগ্ধে চ পুত্রে চ" ইতি হেমচন্দ্রঃ ॥৭১॥

বাঙ্গালা—সর্ব্বদা পুত্রবৎসল ও সর্ব্বকার্য্যে নিপুণ রাজা ভীষ্মক যখন যুবরাজ রুক্মীর হস্তে রাজ্য সমর্পণ করিলেন, তখন বিশাল পৃথিবীর ভারেই যেন রুক্মীর মস্তকটী ভীষ্মকের চরণসম্মুখে পতিত হইল ॥৭১॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकाशिताशीर्मुखजन्मनां मुखात्
रहोगतस्त्रैणकुलादुलुध्वनिः।
जयध्वनिः स्वस्तिवचश्च सर्वतः
नरेन्द्रवर्गादुदतिष्ठदेकदा ॥७२॥
स्वनः स तौर्य्यत्रिकनिस्वनैः सह
समुच्चरन्नुच्चतरस्तदाऽभितः।
रमाप्रदानि पवनेन विद्रुत-
समुद्रकल्लोलरवानवाहसत् ॥७३॥

---

अन्वयः—मुखजन्मनां मुखात् प्रकाशिता आशीः, रहोगतस्त्रैणकुलात् उलुध्वनिः, सर्वतः जयध्वनिः, नरेन्द्रवर्गात् स्वस्तिवचश्च एकदा उदतिष्ठत् ॥७२॥

प्रकाशितेति। मुखाद्‌ब्रह्मणो वदनाज्जन्म येषां ते मुखजन्मानो ब्राह्मणास्तेषाम्, मुखात्, प्रकाशिता निर्गता, आशीराशीर्वादः, रहोगतं निर्जनस्थितं पटान्तरालगतमित्यर्थः यत् स्त्रैणकुलं स्त्रीसमूहस्तस्मात्, उलुध्वनिः, सर्वत उक्तेतरेभ्यः सर्वेभ्यो जनेभ्यः, जयध्वनिः, नरेन्द्रवर्गात् राजसमूहात्, स्वस्तिवचः शुभमस्त्विति वाक्यञ्च, एकदा, उदतिष्ठत्।

अत्र उदतिष्ठदित्येकया क्रियया आशीरादीनां कर्त्तृतयाभिसम्बन्धात्तुल्ययोगितालङ्कारः प्रथमपादगतलाटानुप्रासेन संसृज्यते ॥७२॥

बाङ्गाला—ব্রাহ্মণগণের মুখ হইতে নির্গত আশীর্ব্বাদ, অন্তরালস্থিত নারীগণ হইতে উলুধ্বনি, অন্য সকল ব্যক্তি হইতে জয়ধ্বনি এবং রাজগণ হইতে স্বস্তিবাক্য এক সময়ই উত্থিত হইল ॥৭২॥

अन्वयः—तदा उच्चतरः स स्वनः तौर्य्यत्रिकनिस्वनैः सह अभितः समुच्चरन् (सन्) रमाप्रदानि पवनेन विद्रुतसमुद्रकल्लोलरवान् अवाहसत् ॥७३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रसूनवृष्टिर्निपपात रुक्मिणः

जनालिहस्तात् किल या तनूपरि ।

विनिःसृता भीष्मकपाणिपल्लवात्

हिरण्यवृष्टिर्युगपज्जिगाय ताम् ॥७४॥

---

स्वन इति । तदा, उच्चतरः, स स्वनो मिलितशब्दः, तौर्य्यत्रिकस्य नृत्यगीतवाद्यानां निस्वनैः शब्दैः सह, अभितः सर्वतः, समुच्चरन् विचरन् सन्, रमाया लक्ष्मीदेव्याः, प्रदाने नारायणाय प्रदानकाले, पवनेन वायुना, विद्रुतस्य उद्वेलितस्य समुद्रस्य कल्लोलरवान् महातरङ्गशब्दान्, अवाहसत् उपहसितवान् ।

अत्रावहासेन सादृश्यसूचनादार्थोपमालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ।

"तौर्य्यत्रिकं नृत्यगीतवाद्यम्" इत्यमरः ॥७३॥

বাঙ্গালা—সেই উচ্চতর শব্দ নৃত্য, গীত ও বাদ্যের শব্দের সহিত সকল দিকে বিচরণ করিতে থাকিয়া নারায়ণের হস্তে লক্ষ্মীদেবীকে সম্প্রদান করিবার সময়ে বায়ুসঞ্চালিত সমুদ্রের মহাতরঙ্গের শব্দকে উপহাস করিতেছিল ॥৭৩॥

अन्वयः—जनालिहस्तात् या प्रसूनवृष्टिः रुक्मिणः तनूपरि निपपात किल, भीष्मकपाणिपल्लवात् युगपत् विनिःसृता हिरण्यवृष्टिः तां जिगाय ॥७४॥

प्रसूनेति । जनालिहस्ताल्लोकसमूहकरात्, या प्रसूनवृष्टिः पुष्पवृष्टिः, रुक्मिणो युवराजस्य तनोः शरीरस्योपरि, निपपात किल ; भीष्मकस्य पाणिपल्लवात्, युगपदेकदैव, विनिःसृता विनिर्गता हिरण्यानां सुवर्णानां वृष्टिः, तां प्रसूनवृष्टिम्, जिगाय जितवती ; अतिरेकादित्याशयः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतर्पयन्तो हृदयं दयार्थिनः
स्तुतीरितैर्वन्दिजना ववन्दिरे।
वसुप्रभूणां वसुधातले हि न
स्तुतेरभावो भवतीह कर्हिचित् ॥७५॥
अमुं किमु श्रीस्वपलाश्रिता नवा
सरस्वतीतीव परीक्षितुं स्वयम्।

---

अतएवात्र प्रसूनवृष्ट्यपेक्षया हिरण्यवृष्टेराधिक्यवर्णनाद्व्यतिरेकालङ्कारः ॥७४॥

বাঙ্গালা—লোকসমূহের হস্ত হইতে যে পুষ্পবৃষ্টি রুক্মীর দেহের উপরে পতিত হইল; রাজা ভীষ্মকের হস্তপল্লব হইতে নির্গত স্বর্ণ বৃষ্টি সেই পুষ্পবৃষ্টিকে জয় করিল ॥৭৪॥

अन्वयः—दयार्थिनः वन्दिजनाः स्तुतीरितैः हृदयं प्रतर्पयन्तः ववन्दिरे। इह वसुधातले हि कर्हिचित् वसुप्रभूणां स्तुतेः अभावः न भवति ॥७५॥

प्रतर्पयन्त इति। दयार्थिनो युवराजस्यैव कृपाभिलाषिणः, वन्दिजनाः स्तुतिपाठकाः, स्तुतीरितैः प्रशंसावाक्यैः, हृदयं युवराजस्य मनः, प्रतर्पयन्तः सन्तोषयन्तः सन्तः, ववन्दिरे युवराजं सिषेविरे। इह वसुधातले हि, कर्हिचित्, वसुप्रभूणां धनस्वामिनाम्, स्तुतेः प्रशंसायाः अभावो न भवति, प्रायेण सर्वैरेव तस्याः करणादिति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते ॥७५॥

বাঙ্গালা—দয়াভিলাষী স্তুতিপাঠকেরা স্তুতিবাক্যে যুবরাজ রুক্মীর হৃদয় সন্তুষ্ট করিতে থাকিয়া তাঁহার বন্দনা করিতে লাগিল। কারণ, এই পৃথিবীতে কোন সময়ই ধনিগণের স্তুতিবাক্যের অভাব হয় না ॥৭৫॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुखे मुनीनाममनाक् प्रशंसतां
स्वतः सपत्नीगतमत्सरादगात् ॥७६॥
नृपः पुराणः करमेकधाऽनयत्
परं कुमारोऽप्यपरं ग्रहीष्यति ।
अहो दरिद्रस्य विपत् पदे पदे
पुरोऽस्मरन् जानपदा जना इति ॥७७॥

---

अन्वयः—चपला श्रीः अमुं आश्रिता किमु न वा इति स्वयं परीक्षितुमिव सरस्वती स्वतः अमनाक् प्रशंसतां मुनीनां मुखे सपत्नीगतमत्सरात् अगात् ॥७६॥

अमुमिति । चपला चञ्चला, श्रीर्लक्ष्मीः, अमुं युवराजं रुक्मिणम्, आश्रिता किमु न वा, इति, स्वयमात्मना, परीक्षितुमिव, सरस्वती वाग्देवी, स्वत आत्मन एव प्रेरणया, अमनागनल्पं यथा स्यात्तथा, प्रशंसतां मुनीनां मुखे, सपत्नीगतो यो मत्सरो विद्वेषस्तस्मात्, अगादगमत् । अन्योऽपि समीपमुपेत्यैव परीक्षते ।

अत्र परीक्षितुमिवेति फलोत्प्रेक्षालङ्कारस्छेकानुप्रासश्चेति संसृष्टिः । "किञ्चिदीषन्मनागल्पे" इति "मत्सरोऽन्यशुभद्वेषे" इति चामरः ॥७६॥

বাঙ্গালা—চঞ্চলা লক্ষ্মী আসিয়া ইহাকে আশ্রয় করিয়াছেন কি না ইহা পরীক্ষা করিবার জন্যই যেন সরস্বতী অত্যন্ত প্রশংসাকারী মুনিগণের সপত্নীগত বিদ্বেষনিবন্ধন আসিয়াছিলেন ॥৭৬॥

अन्वयः—पुराणः नृपः एकधा करं अनयत्, परं कुमारः अपि अपरं ग्रहीष्यति । अहो दरिद्रस्य पदे पदे विपत् इति जानपदाः जनाः पुरः अस्मरन् ॥७७॥

नृप इति । पुराणः प्राचीनः, नृपो भीष्मकः, एकधा एकप्रकारं राजग्राह्यमित्यर्थः, करं भागधेयम्, अनयत् अग्रहीत्, परमिलोऽनन्तरम्,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततश्च दीना नृपदानतोषिता-
स्तयोस्तृतीयं प्रभुमीषुरीदृशम्।
ग्रहेण दुःखञ्च सुखञ्च दानतः
इयं गतिर्जागतिकी हि सर्वतः ॥७८॥

---

कुमारो युवराजोऽपि, अपरं युवराजग्राह्यं करम्, ग्रहीष्यति। अहो इति विषादे, दरिद्रस्य पदे पदे विपत्, इति, जानपदा देशवासिनो जनाः, पुरा पूर्वम्, अस्मरन् अमादमन्यन्त।

अत्र कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासश्चेति संसृष्टिः ॥७७॥

বাঙ্গালা—প্রাচীন রাজা এক প্রকার কর ( খাজনা ) লইতেন, এখন আবার যুবরাজ অন্য প্রকার কর লইবেন। হায়! দরিদ্রের পদে পদেই বিপদ হইয়া থাকে; দেশবাসী প্রজারা প্রথমে এইরূপ মনে করিয়াছিল ॥৭৭॥

अन्वयः—ततश्च दीनाः नृपदानतोषिताः (सन्तः) तयोः तृतीयं ईदृशं प्रभुं ईषुः। ग्रहेण च दुःखं दानतश्च सुखं (स्यात्) इयं हि सर्वतः जागतिकी गतिः ॥७८॥

तत इति। ततश्च पूर्वविधस्मरणानन्तरञ्च, दीना दरिद्रा जनाः, नृपस्य भीष्मकस्य दानेन तोषिताः सन्तः, तयोर्भीष्मकरुक्मिणोस्तृतीयम्, ईदृशं दातारमेव, प्रभुं राजानम्, ईषुरभिलषितवन्तः, एतस्मादृद्वयादिव तस्मात्तृतीयादपि ईदृशलाभावश्यम्भावादिति भावः। ग्रहेण आत्मनः सकाशादन्यकर्त्तृकग्रहणेन च, दुःखं स्यात्, अतएव पूर्वश्लोके दुःखमुक्तमित्याशयः। आत्मनि दानतश्च सुखं स्यात्, इयं हि, सर्वतः सर्वत्र, जगत इयं जागतिकी जगद्वासिनां सर्वेषामेवेत्यर्थः, गतिरवस्था भवति।

अत्र तृतीयस्य प्रभोरिच्छाया अप्रस्तुतेऽपि ततप्रस्तुतोक्तेरतिशयोक्ति-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

অনুত্তমান্নৈঃ পরিপূরিতোদরাঃ
মহোত্তমান্নাশননিষ্ফলোদ্যমাঃ।
পরং ব্যষীদন্নবিবেকিনো জনাঃ
অসাবধানস্য সুখেঽপি দুঃখিতা ॥৭৯॥

রলঙ্কারঃ, সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসশ্ছেকানুপ্রাসশ্চেত্যেতেষাং মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ ॥৭৮॥

বাঙ্গালা—তাহার পর দরিদ্র লোকেরা রাজার দানে সন্তুষ্ট হইয়া তাঁহাদের তৃতীয় এইরূপ আর একটী রাজা কামনা করিতে লাগিল। কারণ, নিজের নিকট হইতে কেহ কোন বস্তু লইলে দুঃখ হয়, আর নিজেকে দান করিলে সুখ হইয়া থাকে, ইহাই ত জগদ্বাসী লোকের মনের গতি ॥৭৮॥

অন্বয়ঃ—অবিবেকিনঃ জনাঃ অনুত্তমান্নৈঃ পরিপূরিতোদরাঃ (অতএব) মহোত্তমান্নাশন-নিষ্ফলোদ্যমাঃ (সন্তঃ) পরং ব্যষীদন্। অসাবধানস্য সুখে অপি দুঃখিতা (ভবতি) ॥৭৯॥

অনুত্তমেতি। অবিবেকিনো বিবেচনশূন্যা জনাঃ, অনুত্তমান্নৈঃ প্রথমদত্তৈর্নিকৃষ্টখাদ্যৈঃ শাকাদিভিরেব, পরিপূরিতানি উদরাণি যৈস্তে, অতএব, মহোত্তমান্নানামনন্তরদত্তানামুৎকৃষ্টখাদ্যানাং পূপাদীনাম্ অশনে ভক্ষণে নিষ্ফল উদ্যমো যেষাং তে তাদৃশাঃ সন্তঃ, পরমত্যন্তম্, ব্যষীদন্ বিষণ্ণা অভবন্। তথাহি, অসাবধানস্য পূর্বাপরকর্তব্যাবধানরহিতস্য জনস্য, সুখেঽপি সুখস্থানেঽপি, দুঃখিতা ভবতি।

অত্র দ্বিতীয়পাদার্থং প্রতি প্রথমপাদগতপদার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গমলঙ্কারঃ, সামান্যেন বিশেষসমর্থনাদর্থান্তরন্যাসস্তানয়োঃ পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ ॥৭৯॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

গৃহে গৃহে নাট্যসমীক্ষণক্ষণা:
অনেকদু:খপ্রভৃতা জনা অপি।
ভবাদ্বিমুক্তানিব যোগিনস্তদা
প্রমেনিরে স্বান্ সুখিতান্ চিরাদিব ॥৮০॥
গৃহপ্রযাণে ধরণীভৃতাং গণ:
কুমারপাণাবুপহারমর্পযন্।

বাঙ্গালা—বিবেচনাশূন্য লোকেরা প্রথমেই নিকৃষ্ট খাদ্যদ্বারা উদর পরিপূর্ণ করিয়া ফেলিয়াছিল; সুতরাং পরে আর উৎকৃষ্ট খাদ্য খাইতে পারিল না; অতএব তাহারা তখন অত্যন্ত বিষণ্ণ হইয়া পড়িল। কারণ, অসাবধান লোকের সুখ, সম্ভাবনাস্থলেও দু:খ আসিয়া উপস্থিত হয় ॥৭৯॥

অন্বয়:—অনেকদু:খপ্রভৃতা জনা অপি গৃহে গৃহে নাট্যসমীক্ষণক্ষণা: (সন্ত:) যোগিন: ভবাৎ বিমুক্তান্ ইব তদা স্বান্ চিরাৎ সুখিতানিব প্রমেনিরে ॥৮০॥

গৃহে ইতি। অনেকৈর্দু:খৈ: প্রভৃতা পরিপূর্ণা, জনা অপি, গৃহে গৃহে নাট্যসমীক্ষণেন নটকার্য্যাভিনয়দর্শনেন ক্ষণ উৎসব আনন্দো যেষাং তে তাদৃশা: সন্ত:, যোগিনো জনা:, ভবাৎ সংসারাৎ, বিমুক্তান্ স্বানিব, তদা, স্বান্ আত্মন:, চিরাৎ, সুখিতান্ সঞ্জাতসুখানিব, প্রমেনিরে।

অত্র শ্রৌতোপমাচ্ছেকানুপ্রাসয়ো: সংসৃষ্টিরলঙ্কার:।

"নির্ব্যাপারস্থিতৌ কালবিশেষোৎসবয়ো: ক্ষণ:" ইত্যমর: ॥৮০॥

বাঙ্গালা—যোগীরা যেমন সংসারমুক্ত আপনাদিগকে চিরসুখী বলিয়া মনে করেন, সেইরূপ অনেক দু:খে পরিপূর্ণ লোকেরাও গৃহে গৃহে অভিনয় দর্শন করিয়া আনন্দিত হইয়া আপনাদিগকে চিরসুখী বলিয়া মনে করিতে লাগিল ॥৮০॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुरातनाय प्रभवे निजां निजां
शिरःप्रणामेन ददाविवोच्चताम् ॥८१॥
अधना धनानि च भुवं भुवोऽर्थिनः
क्षुधिताः सुधावद्बहुविधान्नमाप्नुवन् ।
अवनीपतावभिनवे हि रुक्मिणि
कमलालयेव निखिलालयाऽभवत् ॥८२॥

---

अन्वयः—धरणीभृतां गणः गृहप्रयाणे कुमारपाणौ उपहारं अर्पयन् शिरःप्रणामेन पुरातनाय प्रभवे निजां निजां उच्चतां ददौ इव ॥८१॥

गृह इति । धरणीभृतां गणः राज्ञां समूहः, गृहप्रयाणे स्वस्वभवनगमनसमये, कुमारस्य युवराजस्य रुक्मिणः पाणौ हस्ते, उपहारम्, अर्पयन् वितरन्, शिरसां प्रणामेन अवनमनेन, पुरातनाय प्राचीनाय, प्रभवे राज्ञे भीष्मकाय, निजां निजाम् उच्चताम्, ददाविव । उच्चानां शिरसाम् अवनमनेन तदुच्चतात्यागसूचनादिति भावः ।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षालङ्कारः ॥८१॥

বাঙ্গালা—রাজগণ আপন আপন ভবনে যাইবার সময়ে যুবরাজ রুক্মীর হস্তে উপহার সমর্পণ করিয়া (নজর দিয়া) মস্তক অবনমন করায় প্রাচীন রাজা ভীষ্মককে যেন আপন আপন উচ্চতা দান করিলেন ॥৮১॥

अन्वयः—अधना धनानि, भुवोऽर्थिनः भुवं, क्षुधिताय सुधा-वद्बहुविधान्नं आप्नुवन् । रुक्मिणि अभिनवे अवनीपतौ ( सति ) हि कमलालया निखिलालया इव अभवत् ॥८२॥

अधना इति । अधना दरिद्राः, धनानि, भुवोऽर्थिनो भूमियाचकाः, भुवं भूमिम्, क्षुधिताः क्षुधार्त्ताश्च जनाः, सुधावदमृतमिव बहुविधान्नम्, आप्नुवन् अलभन्त । रुक्मिणि भीष्मकन्ये स्वपुत्रे, अभिनवे, अवनीपतौ

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वराज्ये सुप्राज्ये तनयमभिषिञ्चन्नरपतिः
न लेभेऽन्तः शान्तिं समुचितसुतादानरहितः।
स्थितो यः संसारे यतिलषितधर्म्मं स्पृहयति
मरुस्थाने तृष्णाङ्मृगयति स मुग्धः किल जलम् ॥८३॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
रुक्मिराज्याभिषेको नाम तृतीयः सर्गः ॥०॥

---

युवराजे सति हि, कमलालया लक्ष्मीः, निखिलं सर्व्वं भवनमेव आलय आश्रयो यस्याः सा तादृशी इव अभवत्।

अत्र आप्नुवन्नित्येकया क्रियया अधनादीनां कर्त्तृतया धनादीनाञ्च कर्म्मतयाभिसम्बन्धात्तुल्ययोगितालङ्कारः, कार्य्येण कारणसमर्थनादर्थान्तरन्यासः, वाच्या गुणोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनर्वृत्त्यनुप्रासेन संसृज्यते।

मञ्जुभाषिणी वृत्तम्—"सजसा जगौ च यदि मञ्जुभाषिणी" इति लक्षणात् ॥८२॥

বাঙ্গালা—নির্ধনেরা ধন, ভূমিপ্রার্থীরা ভূমি এবং ক্ষুধার্ত্তেরা অমৃতের ন্যায় বহুবিধ খাদ্য লাভ করিল; সুতরাং রুক্মী নূতন রাজা হইলে লক্ষ্মী যেন সকল গৃহে অধিষ্ঠিত হইলেন ॥৮২॥

अन्वयः—नरपतिः सुप्राज्ये स्वराज्ये तनयं अभिषिञ्चन् (अपि) समुचित-सुता-दान-रहितः (इति) अन्तः शान्तिं न लेभे। यः संसारे स्थितः (सन्) यति-लषित-धर्म्मं स्पृहयति, स मुग्धः तृष्णक् (सन्) मरुस्थाने जलं मृगयति किल ॥८३॥

स्वराज्य इति। नरपतिर्भीष्मकः, सुप्राज्ये अतिप्रचुरे अतिविशाले इत्यर्थः, स्वराज्ये, तनयं पुत्रं रुक्मिणम्, अभिषिञ्चन्नपि, समुचिता विवाहयोग्या या सुता रुक्मिणी तस्या दानेन पात्रसात्करणेन रहितः

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

আসীত্ । অতএব, অন্তর্মনসি, শান্তিং ন লেভে । তথা চ, যো জনঃ, সংসারে গার্হস্থ্যে, স্থিতঃ সন্, যতিভির্জিতেন্দ্রিয়ৈঃ সন্ন্যাসিভিঃ লষিতঃ অভীষ্টো যো ধর্ম্মঃ শান্ত্যাদিগুণস্তম্, স্পৃহয়তি লব্ধুমিচ্ছতি । স মুগ্ধো মূঢ়ো জনঃ, তৃষ্ণক্ পিপাসার্ত্তঃ সন্, মরুস্থানে মরুভূমৌ, জলম্, মৃগয়তি অন্বিষ্যতি কিল । মরুভূমৌ জলমিব সংসারে শান্তির্নাস্তীতি ভাবঃ ।

অত্র শান্তিলাভাভাবং প্রতি সমুচিত-সুতা-দান-রহিত ইতি পদস্থার্থো হেতুরিতি পদার্থহেতুকং কাব্যলিঙ্গমলঙ্কারঃ, পরার্দ্ধে তু অসম্ভবদ্বস্তুসম্বন্ধা নিদর্শনা, ছেকানুপ্রাসশ্চ ত্যেতেষাং মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ ।

"প্রভূতং প্রচুরং প্রাজ্যম্" ইত্যাদ্যমরঃ । "মুগ্ধঃ সুন্দরমূঢ়য়োঃ" ইতি বিশ্বঃ ।

শিখরিণী বৃত্তম্—"রসৈ রুদ্রৈশ্ছিন্না য-ম-ন-স-ভ-লাগঃ শিখরিণী" ইতি লক্ষণাত্ ॥৮৩॥

ইতি শ্রীহেমচন্দ্রতর্কবাগীশবিরচিতায়াং রুক্মিণীহরণটীকায়াং বিচিন্তায়াং তৃতীয়ঃ সর্গঃ ॥০॥

বাঙ্গালা—ভীষ্মকরাজা নিজের বিশাল রাজ্যে পুত্রকে অভিষিক্ত করিয়াও বিবাহযোগ্যা কন্যা রুক্মিণীকে যোগ্যপাত্রে দান করিতে না পারায় মনে শান্তি পাইতে লাগিলেন না । কারণ, যে লোক সংসারে থাকিয়া সন্ন্যাসীর শান্তি লাভ করিবার কামনা করে, সেই মূঢ় লোক পিপাসার্ত্ত হইয়া মরুভূমিতে জল অন্বেষণ করে ॥৮৩॥

———•———

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# चतुर्थः सर्गः ।

——:०:——

विषयस्य नृपश्चिरं रसान्
रसयंस्तद्विरतौ रतिं दधे ।
खदितान्ननिवारितक्षुधः
सुलभा सापि सुधा सुधायते ॥१॥

अन्वयः—नृपः चिरं विषयस्य रसान् रसयन् तद्विरतौ रतिं दधे । खदितान्ननिवारित-क्षुधः सुलभा सा सुधा अपि सुधायते ॥१॥

विषयस्येति । नृपो भीष्मकः, चिरम्, विषयस्य भोग्यपदार्थस्य स्रक्चन्दनवनितादेः, रसान् स्वादान्, रसयन् अनुभवन्, तस्य अनुभवस्य विरतौ समाप्तौ, रतिमनुरागम्, दधे क्रमेण धारयामास । क्रमिक-तदनुभवेच्छायाः शान्त्यभावादिति भावः । तथा च, खदितेन भुक्तेन अन्नेन निवारिता क्षुत् क्षुधा यस्य तस्य तादृशस्य जनस्य, सुलभा सा प्रसिद्धा, सुधा अमृतमपि, सुधायते सुधेवाचरति वृथा भवतीत्यर्थः । क्षुधा सत्त्वे निकृष्टमप्यन्नं रोचते, तदसत्त्वे तु सुधापि सुधा स्यादितिवत् चिरविषयभोगेन नृपस्य पुनस्तद्भोगविराग एव जात इत्याशयः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ।

"रस आस्वादने" इति चौरादिको रसधातुः ।

अस्मिन् सर्गे सुन्दरी नाम वृत्तम्—"अयुजोर्यदि सौ जगौ युजोः सभरा ल्गौ यदि सुन्दरी तदा" इति लक्षणात् ॥१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिचिन्तयतश्चितश्चिरं
विषयस्तस्य सुखायते स्म न ।
अधिकं द्युमणौ समुद्यति
न कियद्दीपयते हि दीपिका ॥२॥

सह वासनया भुवः प्रभोः
तनुरासीत् क्रमशस्तथा कृशा ।
वहतोऽपि चिरं धराधुरां
तनुभारोऽपि सुदुःसहो यथा ॥३॥

বাঙ্গালা—ভীষ্মক চিরকাল বিষয়ভোগের রস অনুভব করিয়া, ক্রমশঃ তাহার সমাপ্তিবিষয়ে মনোনিবেশ করিলেন। কারণ, অল্প ভক্ষণ করায় যাহার ক্ষুধা নিবৃত্তি পাইয়া যায়, তাহার নিকট অনায়াসলভ্য অমৃতও কোন কাজে লাগে না ॥১॥

अन्वयः—विषयः चिरं चितं परिचिन्तयतः तस्य न सुखायते स्म । हि द्युमणौ अधिकं समुद्यति (सति) दीपिका कियत् न दीपयते ॥२॥

परीति । विषयो विषयभोगः, चिरं दीर्घकालम्, चितं परमात्मानम्, परिचिन्तयतः सर्वथा ध्यायतः, तस्य भीष्मकस्य, न सुखायते स्म न सुखं वेदयते स्म । हि तथाहि, द्युमणौ सूर्य्ये, अधिकं समुद्यति उदयमाने सति, दीपिका क्षुद्रो दीपः, कियदपि वस्तु, न दीपयते न प्रकाशयति ।

अत्र दृष्टान्तोऽलङ्कारः, पूर्ववदनुप्रासौ चेति संसृष्टिः ॥२॥

বাঙ্গালা—ক্রমে ভীষ্মক অধ্যাত্মচিন্তায় মগ্ন থাকিলে, বিষয়ভোগ তাঁহার সুখ উৎপাদন করিতে লাগিল না। কারণ, সূর্য্য অধিক পরিমাণে প্রকাশ পাইলে, ক্ষুদ্র দীপ কিছুই প্রকাশ করে না ॥২॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निजपूर्वदशाऽवसानतः
सकलस्नेहविहीनतावशात् ।
समकोचि शनैर्मुमुक्षतो
नृपतेर्दीपशिखेव वासना ॥४॥

---

अन्वयः—भुवः प्रभोः वासनया सह तनुः क्रमशः तथा कृशा आसीत् । यथा चिरं धराधुरां वहतोऽपि तनुभारोऽपि सुदुःसहः अभवत् ॥३॥

सहेति । भुवः प्रभोर्भीष्मकस्य, वासनया विषयभोगेच्छया सह, तनुः शरीरम्, क्रमशः, तथा कृशा, आसीत् । यथा, चिरम्, धराधुरां पृथिवीभारम्, वहतो धारयतोऽपि तस्य, तनोः शरीरस्य भारोऽपि, सुदुःसह अभवत् ।

अत्र सहोक्तिरलङ्कारः ।

धराधुरामिति धराया धूः धराधुरा ताम् "धुरनक्षस्य च" इति राजादित्वादत्प्रत्यये "स्त्रियामादा" इत्याप्रत्ययः ॥३॥

বাঙ্গালা—রাজা ভীষ্মকের বিষয়ভোগেচ্ছার সহিতই তাঁহার শরীর ক্রমশঃ সেইরূপ কৃশ হইল, যাহাতে তিনি চিরকাল পৃথিবীর ভার বহন করিলেও তৎকালে তাঁহার দেহের ভার বহন করাও অতিদুষ্কর হইয়াছিল ॥৩॥

अन्वयः—मुमुक्षतः नृपतेः वासना दीपशिखेव निजपूर्वदशावसानतः सकल-स्नेह-विहीनतावशात् (च) शनैः समकोचि ॥४॥

निजेति । मुमुक्षतो मुक्तिमिच्छतः, नृपतेर्भीष्मकस्य, वासना विषय-भोगेच्छा, दीपशिखेव, निजा स्वकीया या पूर्वदशा विषयासक्तावस्था वर्त्तिश्च तस्या अवसानतः वैराग्यादाहाच्च अवसानेन, सकलेषु पुत्रादि-परिजनेषु यः स्नेहो वात्सल्यं सकलस्नेहः समस्ततैलञ्च तस्य विहीनता-



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ক্ষণমপ্যনপাস্তসন্নিধি-
মতিহৃদ্যামনুরাগিণীং চিরম্ ।
পরিহায় নৃপো নৃপশ্রিয়ং
সমুদাসে স মুদা শনৈঃ শনৈঃ ॥৫॥

বশাৎ বৈরাগ্যেণ দাহেন চ রাহিত্যাদ্ধেতোঃ, শনৈর্মন্দং মন্দম্, সমকোচি ক্ষীণা অভূৎ ।

অত্র শ্রৌতী পূর্ণোপমালঙ্কারঃ ।

"দশাবস্থা দীপবর্ত্যোর্বিস্রান্তে ভূম্নি যোষিতি" ইতি মেদিনী । "স্নেহস্তৈলাদিকরস-দ্রব্যে স্যাৎ সৌহৃদেঽপি চ" ইতি বিশ্বঃ ॥৪॥

বাঙ্গালা—ভীষ্মকরাজা তখন মুক্তি কামনা করিতেছিলেন ; সুতরাং তাঁহার পূর্ব্ব অবস্থার অবসান ঘটিয়াছিল এবং সমস্ত পরিজনের উপরের বাৎসল্যও তিরোহিত হইয়াছিল ; অতএব তাঁহার বিষয়ভোগের ইচ্ছা দীপশিখার ন্যায় ধীরে ধীরে ক্ষীণা হইতে লাগিল ॥৪॥

অন্বয়ঃ—স নৃপঃ ক্ষণং অপি অনপাস্তসন্নিধিং অতিহৃদ্যাং চিরং অনুরাগিণীং নৃপশ্রিয়ং পরিহায় মুদা শনৈঃ শনৈঃ (বিষয়ান্) সমুদাসে ॥৫॥

ক্ষণমিতি । স নৃপো ভীষ্মকঃ, ক্ষণমপি, ন অপাস্তো ন পরিত্যক্তঃ সন্নিধিঃ সামীপ্যং যয়া তাম্, অতিহৃদ্যাম্ অতিশয়েন প্রিয়াম্, চিরম্, বিষয়তাসম্বন্ধেন অনুরাগঃ অস্যা অস্তীতি তাম্, অনুরাগপাত্রীমিত্যর্থঃ, নৃপশ্রিয়ং রাজলক্ষ্মীম্, পরিহায় পরিত্যজ্য, মুদা আনন্দেনৈব, শনৈঃ শনৈর্মন্দং মন্দম্, সমুদাসে বিষয়ান্ সম্যক্ পরিতত্যাজ ।

অত্র লিঙ্গসাম্যেন নৃপনৃপশ্রিয়োর্নায়কনায়িকাব্যবহারসমারোপাৎ সমাসোক্তিরলঙ্কারঃ, সমুদা-সমুদেতি যমকেন সংসৃজ্যতে ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

হৃদি সত্ত্বগুণেন ভূপতেঃ
উষসীবাধিকৃতে বিবস্বতা।
অতিনির্ম্মলতেজসাশ্রিতে
পরিনিঃশেষমপাসরত্তমঃ ॥৬॥

---

"সমুদাসে" ইতি সমুৎপূর্ব্বকস্য "অসু ক্ষেপণে" ইত্যস্‌ধাতোঃ "উপসর্গা-দস্যত্যূহ্যো বা" ইতি ত্বাদিত্বাৎ পরোক্ষায়াং আত্মনেপদপ্রথমৈকবচনে রূপম্ ॥৫॥

বাঙ্গালা—ভীষ্মকরাজা সর্ব্বদা সন্নিহিতা, অতিমনোহরা ও অনু-রাগের পাত্রী রাজলক্ষ্মীকে পরিত্যাগ করিয়া, আনন্দের সহিতই ধীরে ধীরে সমস্ত বিষয় পরিত্যাগ করিলেন ॥৫॥

অন্বয়ঃ—বিবস্বতা উষসি ইব সত্ত্বগুণেন ভূপতেঃ হৃদি অধিকৃতে অতিনির্ম্মল-তেজসা আশ্রিতে (চ সতি) পরিনিঃশেষং তমঃ অপাসরৎ ॥৬॥

হৃদীতি। বিবস্বতা সূর্য্যেণ, উষসি প্রভাতকাল ইব, সত্ত্বগুণেন, ভূপতের্ভীষ্মকস্য, হৃদি চিত্তে, অধিকৃতে সতি, অতিনির্ম্মলতেজসা সৌরেণ চিন্ময়েন চ, আশ্রিতে চ সতি, পরিনিঃশেষং সমস্তম্, তমঃ তমোগুণ-জনিতমোহঃ অন্ধকারশ্চ, অপাসরত্তিরোহিতমভবৎ।

অত্র পূর্ণোপমালঙ্কারঃ ॥৬॥

বাঙ্গালা—প্রভাতকালে সূর্য্য উদয় পাইলে তাঁহার নির্ম্মল তেজে যেমন সমস্ত অন্ধকার তিরোহিত হয়, তেমন ভীষ্মকরাজার চিত্ত সত্ত্বগুণে অধিকৃত হইলে অতিনির্ম্মল ব্রহ্মতেজে তাঁহার সমস্ত মোহ তিরোহিত হইল ॥৬॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

পবনেন পরিষ্কৃতেঽথবা
বিমলজ্ঞানবিকাশনেন চ ।
লঘুনা রজসা তদাস্পদং
প্রতিপেদে নৃপতের্ন মানসে ॥৭॥
বিফলাদ্ভবনাদ্বনাশ্রমং
স্পৃহয়ামাস নৃপো রহঃপ্রিয়ঃ ।
অপি কর্ম্মণি দর্শনেঽশনে
ভবিতা যৎ ফলমেব কেবলম্ ॥৮॥

---

অন্বয়ঃ—অথবা পবনেন (ইব) বিমলজ্ঞানবিকাশনেন পরিষ্কৃতে চ নৃপতেঃ মানসে তদা লঘুনা (অপি) রজসা আস্পদং ন প্রতিপেদে ॥৭॥

ভীষ্মকস্য রজোগুণোঽপি নিবৃত্ত ইত্যাহ পবনেনেতি । অথবা, পবনেন বায়ুনা ইব, বিমলজ্ঞানস্য শুদ্ধসাত্ত্বিকজ্ঞানস্য বিকাশনেন প্রকাশেন চ, পরিষ্কৃতে নির্ম্মলীকৃতে, নৃপতের্ভীষ্মকস্য, মানসে চিত্তে, অজিরে ইবেতি ভাবঃ । তদা, লঘুনা অল্পেনাপি, রজসা রজোগুণেন ধূল্যা চ, আস্পদং প্রতিষ্ঠা, ন প্রতিপেদে ন লেভে ।

অত্রাপি পূর্ণোপমালঙ্কারঃ ॥৭॥

বাঙ্গালা—এবং বায়ু পরিষ্কৃত প্রাঙ্গণে যেমন ধূলি প্রতিষ্ঠা লাভ করিতে পারে না, তেমন নির্ম্মলজ্ঞানপরিষ্কৃত ভীষ্মকের চিত্তে তখন অল্প রজোগুণও প্রতিষ্ঠা লাভ করিতে পারে নাই ॥৭॥

অন্বয়ঃ—রহঃপ্রিয়ঃ নৃপঃ বিফলাৎ ভবনাৎ বনাশ্রমং স্পৃহয়ামাস । যৎ (তত্র) কর্ম্মণি দর্শনে অশনে অপি কেবলং ফলমেব ভবিতা ॥৮॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तनयाप्रतिपादनावधि
गृहमेधीभवितुं प्रभावुकैः।
स्वजनैर्बहुधा प्रबोधितः
बहुविघ्ना हि सतां सती क्रिया ॥९॥

विफलादिति। रहःप्रियो निर्जनदेशप्रियः, नृपो भीष्मकः, विफलात् तत्त्वज्ञानलाभसम्भावनाशून्यात्, भवनाद्गृहाश्रमात्, वनाश्रमं वान-प्रस्थाश्रमम्, स्पृहयामास गन्तुमियेष। यद्यस्मात्, तत्र वनाश्रमे, कर्म्मणि श्रवणमननादौ, फलं तत्त्वज्ञानलाभः, महापुरुषाणां दर्शने, फलं पुण्यप्राप्तिः, अशनेऽपि भोजने च, फलं पनसाम्रादिफलप्राप्तिः, केवलम्, भविता।

अत्र शब्दश्लेषच्छेकानुप्रासयोः संसृष्टिरलङ्कारः।

"शस्ये हेतुकृते फलम्" इत्यमरः ॥८॥

বাঙ্গালা—ক্রমে নির্জনপ্রিয় ভীষ্মকরাজ বিফল গৃহস্থাশ্রম হইতে বানপ্রস্থাশ্রমে যাইবার ইচ্ছা করিলেন। যেহেতু, সে আশ্রমে কার্য্যে, দর্শনে ও ভোজনে কেবল ফলই হইবে ॥৮॥

अन्वयः—प्रभावुकैः स्वजनैः तनयाप्रतिपादनावधि गृहमेधीभवितुं बहुधा प्रबोधितः, सतां सती क्रिया हि बहुविघ्ना ॥९॥

तनयेति। प्रभावुकैर्माङ्गलिकस्वभावैः स्वजनैः, तनयाया कन्याया रुक्मिण्याः, प्रतिपादनावधि दानपर्य्यन्तम्, गृहमेधीभवितुं गृहस्थ-भावेन स्थातुम्, बहुधा, प्रबोधितो भीष्मको ज्ञापितः। हि तथाहि, सतां सज्जनानाम्, सती क्रिया अभ्यर्हितं कार्य्यम्, बहवो विघ्ना यस्यां सा तादृशी भवति।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रुरुचे रुचिरञ्च नैव तत्
वचनं प्रत्युत भीतिमावहत् ।
नहि सत्पथगामुको जनो
गतकान्तारमुपैति बुद्धिमान् ॥१०॥

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ।

प्रभावुकैरिति "स्रुकमगम—" इत्यादिना ताच्छिल्ये उकञ् ॥৯॥

বাঙ্গালা—তৎকালে মঙ্গলার্থী স্বজনেরা যাইয়া রুক্মিণীর বিবাহ পর্য্যন্ত গৃহস্থ থাকিবার জন্য ভীষ্মকরাজাকে বহু প্রকারে উপদেশ দিয়াছিল। কারণ, সজ্জনের সৎকার্য্যে বহুতর বিঘ্নই হইয়া থাকে ॥৯॥

अन्वयः—रुचिरञ्च तत् वचनं नैव रुरुचे, प्रत्युत भीतिं आवहत् । सत्पथगामुकः बुद्धिमान् जनः गतकान्तारं नहि उपैति ॥१०॥

रुरुच इति । रुचिरञ्च सुन्दरमपि, तत् स्वजनवचनम्, नैव रुरुचे भीष्मकस्य रुचिं न खलु जनयामास । प्रत्युत वैपरीत्येन, भीतिम् अशान्तिभयमेव, आवहत् अजनयत् । तथाहि, सत्पथं गन्तुं शीलमस्येति सत्पथगामुकः, बुद्धिमान् जनः, निर्बोधस्तु स हितनैरपेक्ष्येणैव परवाक्यं शृणोतीति भावः । गतकान्तारम् अतीतदुर्गमपथम्, नहि उपैति पुनर्न गच्छति ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते ।

"महारण्ये दुर्गपथे कान्तारः पुंनपुंसकम्" इत्यमरः ॥१०॥

বাঙ্গালা—স্বজনবর্গের সেই সকল বাক্য শ্রুতিমধুর হইলেও তাহাতে ভীষ্মকরাজার অভিরুচি হইল না ; বরং তাঁহার ভয়ই জন্মাইল।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जननावधि संयमी भवान्
नहि संसाररसं समन्वभूत्।
अतएव तु मां वदत्यदो
न धनी वेत्ति हि दीनवेदनाम् ॥६३॥
सुहृदः सहृदं न दृश्यति
मम पुत्रया भुवि पात्रमत्र यत्।

---

কার্য্য আমার অননুষ্ঠিত রহিয়াছে। কারণ, কর্ত্তব্যের শেষ করা মানুষের শক্তিসাধ্য নহে ॥৬২॥

अन्वयः—जननावधि संयमी भवान् संसाररसं नहि समन्वभूत्, अतएव तु मां अदः वदति। हि धनी दीनवेदनां न वेत्ति ॥६३॥

जननेति। जननावधि संयमी पूर्वसुकृतिवशात् योग्यकाले संयमी धारणादिमान् इन्द्रियनिग्रहवान् वा भवान्, संसाररसं सांसारिकावस्थाम्, नहि समन्वभूत् न सम्यगनुभूतवान्; कदाचित् संसारिसंसर्गेण कथञ्चिदनुभूतवानेवेति भावः। अतएव तु माम्, अद इदम्, वदति पुनः संसारीभवितुमुपदिशति। हि तथाहि, धनी जनः, दीनस्य दरिद्रस्य जनस्य वेदनां दारिद्र्यदुःखम्, न वेत्ति न जानाति।

अत्र संसाररसानुभवाभावं प्रति संयमिपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः ॥६३॥

বাঙ্গালা—দেবর্ষি! আপনি জন্মাবধি সংযমী; সুতরাং সংসারের রস সম্যক্ অনুভব করেন নাই; এই জন্যই আমাকে এইরূপ বলিতেছেন। দেখুন, ধনী লোক দরিদ্র লোকের দুঃখ বোঝে না ॥৬৩॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वरमाहुरयोग्ययोगतः
चिरकौमारमहो महाधियः ॥६४॥
अथ भूपमुवाद नारदो
रददीप्तो द्विरदेन्द्रभास्वरः ।
सति कर्म्मणि धर्म्मकारणे
महलिप्सोर्महतो महाग्रहः ॥६५॥

अन्वयः—सुदृशः मम पुत्र्याः सदृशं पात्रं अत्र भुवि यत् नहि दृश्यते । अहो ! महाधियः अयोग्ययोगतः चिरकौमारं वरं आहुः ॥६४॥

सुदृश इति । शोभने दृशौ चक्षुषी यस्यास्तस्याः सुदृशः, मम पुत्र्याः कन्याया रुक्मिण्याः, सदृशं योग्यम्, पात्रम्, अत्र भुवि यन्नहि दृश्यते, तत एव विषयाहारं विषमिति भावः । अथ यस्मै कस्मैचित् कन्या दीयतामित्याह वरमिति । अहो देवर्षे ! महाधियः प्रशस्तबुद्धयो जनाः, अयोग्ययोः कन्यावरयोर्योगतः संयोजनात्, चिरकौमारं चिरकालीनामविवाहितावस्थामेव वरमीषत्प्रियम्, आहुर्ब्रुवन्ति ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥६४॥

বাঙ্গালা—দেবর্ষি! এই পৃথিবীতে আমার সুলোচনা কন্যার উপযুক্ত পাত্রই যে দেখিতে পাইতেছি না। বুদ্ধিমান্ লোকেরা বলেন, অযোগ্য বর-কন্যার যোগ করা অপেক্ষা বরং তাহাদের চিরকৌমারই ভাল” ॥৬৪॥

अन्वयः—अथ द्विरदेन्द्रभास्वरः नारदः रददीप्तः ( सन् ) भूपं उवाद । धर्म्मकारणे सति कर्म्मणि महलिप्सोः महतः महाग्रहः (भवति) ॥६५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नृपते! गृहिणां गृहक्रिया
यदनन्तेति निगद्यते न तत्।
भुवने परमेशशेषयो-
र्न तृतीये क्वचिदस्त्यनन्तता ॥६६॥

अथेति। अथ भीष्मकवचनात् परम्, द्विरदेन्द्रभाखर ऐरावतहस्तीव शुभ्रोज्ज्वलदेहो नारदः, रदैर्दन्तैर्दन्तानां शुभ्रकिरणैः दीप्तो बाहुल्येनोज्ज्वलीकृतमुखः सन्, भूपं राजानं भीष्मकम्, उवाद उवाच। ननु रुक्मिण्या विवाहे नारदस्य कथमीदृशो निर्बन्ध इत्याह सतीति। धर्म्मकारणे धर्म्मजनकीभूते न पुनः पापजनकेऽपीति भावः। सति कर्म्मणि याग-विवाहादिसत्कार्य्ये, महल्लिप्सोः उत्सवाभिलाषिणः महती जनस्य, महाग्रहो विशेषनिर्बन्धो भवति। कलहोत्सवप्रियस्य नारदस्य रुक्मिणीविवाहोत्सवदर्शनार्थमेवायं निर्बन्ध इत्याशयः।

अत्रापि पूर्ववदर्थान्तरन्यासहत्त्यनुप्रासच्छेकानुप्रासानां संसृष्टिरलङ्कारः।

"रदना दशना दन्ता रदाः" इति "अथ चया उद्धर्षो मह उद्धव उत्सवः" इति चामरः ॥६५॥

বাঙ্গালা—তদনন্তর, ঐরাবত হস্তীর ন্যায় শুভ্রবর্ণ নারদ, দন্তের কিরণে আরও শুভ্রবদন হইয়া, রাজাকে বলিতে লাগিলেন—"উৎসবাভিলাষী প্রধান লোকদিগের ধর্ম্মজনক সৎকার্য্যে গুরুতর আগ্রহই হইয়া থাকে ॥৬৫॥

अन्वयः—नृपते! गृहिणां गृहक्रिया अनन्ता इति यत् निगद्यते तत् न। भुवने परमेशशेषयोः तृतीये क्वचित् (अपि) अनन्तता न अस्ति ॥६६॥



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अपरप्रथितं निजं यशो
न यशस्वी स्वयमेव भाषते ।

"प्रगल्भ्ये"त्यादिना यत् प्रागुक्तं तत् प्रतिवदति नृपत इति। हे नृपते! गृहिणां गृहस्थानाम्, गृहक्रिया सांसारिककार्य्यम्, अनन्ता अपरिशेषा, इति यन्निगद्यते त्वया उच्यते, तन्न वक्तव्यम्। भुवने, परमेशः परमात्मा शेषः अनन्तनागश्च तयोस्तृतीये क्वचिदपि पदार्थे, अनन्तता परिशेषशून्यत्वम्, न अस्ति। तथा च, "न जायते म्रियते वापि कश्चित्" इत्यादिश्रुत्या परमात्मनो नित्यतया ध्वंसाभावादनन्तत्वं शेषनागस्य च वृद्धादिवदनन्तनामकत्वं रूढम्। ननु "दिक्कालौ नेश्वरातिरिक्तौ" इत्येतन्मते दिक्कालयोः परमेशरूपतयानन्तत्वे सिद्धेऽपि आकाशादीनां नित्यतया अनन्तत्वसत्त्वेन "अनन्तं सुरवर्त्म खम्" इति तत्पर्य्याये अनन्तशब्ददर्शनाच्च कथमुक्तं तयोस्तृतीये क्वचिदप्यनन्तता नास्तीति चेन्न, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति श्रुत्या आकाशस्योत्पत्तिसत्त्वाद्ध्वंसस्याप्यवश्यम्भावाच्च वास्तविकमनन्तत्वम्, अपि तु अनन्तनागवदनन्तनामकत्वं रूढम्। अथवा शेषपदमाकाशादीनामप्युपलक्षणमिति नानुपपत्तिः। अस्ति च सन्न्यासमात्रेणैव सांसारिककार्य्यशेष इत्याशयः।

अत्र पूर्वार्द्धवाक्यार्थं प्रति परार्द्धवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥६६॥

বাঙ্গালা—রাজা! আপনি যে বলিলেন—'গৃহস্থগণের গৃহকার্য্য অনন্ত' তাহা নহে। কারণ, জগতে এক পরমেশ্বর আর শেষনাগ—ইঁহাদের তৃতীয় কোন পদার্থেই অনন্ততা নাই ॥৬৬॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वविबोधकप्रत्ययोदये
प्रविपर्य्येति विभक्तिरर्थभाक् ॥६७॥

अन्वयः—यशस्वी अपरप्रथितं निजं यशः स्वयं एव न भाषते । स्वविबोधकप्रत्ययोदये अर्थभाक् विभक्तिः प्रविपर्य्येति ॥६७॥

"पितृराज्यमजय्यविक्रम" इत्यादिना राज्ञा स्वयमेव यत् स्वयशः कीर्त्तितम्, तत्र विरक्तः सन्नाह अपरेति । यशस्वी जनः, अपरैर्जनैः प्रथितं प्रख्यातम्, निजं स्वकीयं यशः, स्वयमेव न भाषते । स्वविबोधकप्रत्ययानां कर्त्तृकर्म्मादिबोधकप्रत्ययानामुदये धातोः परं जायमानत्वे सति, अर्थं कर्त्तृकर्म्माद्यभिधेयं भजते आश्रयति वक्तीति अर्थभाक्, विभक्तिः तृतीयाद्वितीयादिः, प्रविपर्य्येति कर्त्तृकर्म्मादिपदेभ्यः अपगच्छति । अत्रायं भावः—चैत्रो गच्छतीत्यादौ "प्रत्ययः परः" इति परिभाषया "शेषात् कर्त्तरि परस्मैपदम्" इत्यनेन कर्त्तरि वाच्ये गमधातोस्तिविभक्तिरूपप्रत्यये जाते तेन च कर्त्तुरभिधाने "कर्त्तरि च" इत्यनेन चैत्रशब्दाद्विहितायास्तृतीयाविभक्तेः "उक्तार्थानामप्रयोगः" इति न्यायादपगमः, परञ्च लिङ्गार्थमात्रे प्रथमा, इत्यञ्च उक्तस्थले यथा तिप्रत्ययेनैव कर्त्तुरभिधानात् कर्त्तरि तृतीयाया निवृत्तिस्तथा स्वयशसः परैः प्रख्याने स्वस्य तत्प्रख्यानान्निवृत्तिरेवोचितेत्यतिसुन्दरः श्लोकः ।

अत्र यशस्वीति सामान्यात् भीष्मकरूपयशस्विविशेषः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, अभाषणं प्रति अपरप्रथितपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, दृष्टान्तः, श्रुत्यनुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः ।

निजशब्दः स्वत्वात्मवचन आत्मीयवचनश्च । तथा च "निजनिर्म्मितकारिकावलीम्" इति सिद्धान्तमुक्तावल्यामात्मवचनो निजशब्दः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथवा स्वयमेव वक्ति चेत्
स्वकृतिं स्याद्विमुखस्तदा परः ।
वदते हि पदं स्वमेव यत्
क्रियया तत्र तदन्यदुच्यते ॥६८॥

---

"मलीमसः शुक्लतरं निजं यशः" इति कादम्बर्य्यामात्मीयवचनश्च निजशब्दः। एवञ्चात्रात्मीयवचन एव निजशब्दः। "प्रह्वे वा" इति प्रशब्दात् पूर्ववर्त्तिनो ह्रस्ववर्णस्य विकल्पेन दीर्घत्वाङ्गीकारात् अत्र तृतीयपादे न छन्दोभङ्गदोषः। "झटिति प्रविश गेहं मा बहिस्तिष्ठ कान्ते!" इति कालिदासप्रयोगवत्। "प्राप्य नाभिह्रदमज्जनम्" इति माघप्रयोगवच्च ॥६७॥

वाङ्गाला—अन्ये यदि निजेर यश बले, ताहा हइले यशस्वी लोक निजे आर ताहा बलेन ना। धातुर उत्तर कर्त्तृकर्म्मादि बोधक प्रत्यय जन्मिले, तत्तदर्थबोधिका विभक्ति अन्तर्हित हइया याय ॥६७॥

अन्वयः—अथवा स्वयं एव चेत् स्वकृतिं वक्ति तदा परः विमुखः स्यात्। हि यत् पदं स्वं एव वदते तत्र क्रियया तदन्यत् उच्यते ॥६८॥

पक्षान्तरे यशस्विनः स्वयं स यशो भाषणे दोषमाह अथवेति। अथवा, यशस्वी जनः, स्वयमेव चेत्, स्वकृतिं निजकार्य्यनिबन्धनं यशः वक्ति; तदा परो जनः, विमुखस्तत् यशोभाषणे पराङ्मुखः स्यात्, "उक्तार्थानामप्रयोग" इति न्यायादिति भावः। अत्रापि दृष्टान्तमाह वदत इति। हि तथाहि, यत् पदं कर्त्तृ, स्वमात्मानमेव वदते; तत्र स्थले, क्रियया, तदन्यत् तत्पदभिन्नं वस्तु उच्यते। अत्राप्ययमाशयः— रामो ग्रामं गच्छतीत्यादौ ग्राममिति कर्म्मणि द्वितीयान्तं पदं स्वगतं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विषये चिरनिस्पृहा अपि
नहि विद्मो न वयं कथञ्चन।
किमसौ रजनी दिवेति वा
मनुते किं मुद्रितेक्षणोऽपि न ॥६९॥

कर्म्मत्वमेव वक्ति। ततश्च गच्छतीति कर्त्तरि तिप्रत्ययान्तया क्रियया कर्म्मानुक्त्वा कर्त्तैवोच्यते। ततश्च त्वया स्वयं स यशोभाषणे वयं तत्पराङ्मुखा भवाम इत्ययमपि परममनोहरः श्लोकः।

अत्रापि पूर्ववदप्रस्तुतप्रशंसालङ्कारो दृष्टान्तश्चानयोः परस्पर-निरपेक्षतया संसृष्टिः।

वदत इति चौरादिकस्य विकल्पेनन्तस्यात्मनेपदिनो वदधातोः प्रयोगः ॥६८॥

বাঙ্গালা—অথবা যশস্বী লোক নিজেই যদি নিজের যশ বলেন, তাহা হইলে অন্য লোক সে বিষয়ে পরাঙ্মুখ থাকে। কারণ, যে স্থলে যে পদটী নিজেই নিজেকে বলে, সে স্থলে ক্রিয়া তদ্ভিন্ন পদার্থকে বলিয়া থাকে ॥৬৮॥

अन्वयः—विषये चिरनिस्पृहाः अपि वयं न विद्मः (इति) कथञ्चन नहि। असौ किं रजनी वा दिवा इति मुद्रितेक्षणः अपि न किं मनुते ॥६९॥

"जननावधि संयमी भवान्" इत्यादिना यदुक्तं तत् प्रतिवदति विषय इति। विषये स्रक्चन्दनवनितादौ तद्भोग इत्यर्थः, चिरनिस्पृहा अपि वयम्, न विद्मः सांसारिकव्यापारान् न जानीमः, इति कथञ्चन केनचित् प्रकारेणापि नहि सम्भवति; सांसारिकजनसंसर्गात् प्रायेणैव सांसारिकव्यापारावगतेरिति भावः। असौ किं रजनी रात्रिः, वा दिवा दिवसः, इति, मुद्रितेक्षणोऽपि मुद्रितनयनोऽपि जनः, न किं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वरदुर्लभतानिबन्धनं
किमदत्तैव सुता वसेच्चिरम् ।
नहि तत् कति सन्ति सद्वराः,
न च को वाञ्छति सान्द्रचन्द्रिकाम् ॥७०॥

---

मनुते न किं बुध्यते ? अपि तु बुध्यत एवेत्यर्थः ; चिरकालीनादनुभव-वैलक्षण्यादित्याशयः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥६९॥

বাঙ্গালা—রাজা! আমরা বিষয়ভোগে চিরনিস্পৃহ হইলেও সাংসারিক ব্যাপার যে জানি না ইহা কোন প্রকারেই হইতে পারে না। কারণ, এটা রাত্রি—না দিন—ইহা কি মুদ্রিতনয়ন লোকও বুঝিতে সমর্থ হয় না? ॥৬৯॥

अन्वयः—सुता वरदुर्लभतानिबन्धनं किं अदत्ता एव चिरं वसेत् ; तत् नहि । कति सद्वराः सन्ति, कः च सान्द्रचन्द्रिकां न वाञ्छति ॥७०॥

प्रकृतमनुसरति वरेति । सुता तव तनया रुक्मिणी, वरस्य दान-पात्रस्य दुर्लभतैव निबन्धनं हेतुर्यस्मिन् कर्मणि तद्यथा स्यात्तथा, किम् अदत्तैव सती, चिरम्, वसेद्गृहे तिष्ठेत् ; तत् नहि सम्भवति । उक्तार्थे हेतुमाह कतीति । कति सद्वराः सन्ति । अथ सन्तु नाम, तथापि ते यदि नैनां ग्रहीतुमिच्छेयुरित्याह न चेति । कश्च जनः सान्द्रचन्द्रिकां घनज्योत्स्नाम्, न वाञ्छति । अपि तु सर्व एव वाञ्छतीत्यर्थः ।

अत्र दृष्टान्तोऽलङ्कारः, नहि तदित्यन्तवाक्यार्थं प्रति कतीत्यादि-वाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, छेकानुप्रासश्चेत्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः ।

"घनं निरन्तरं सान्द्रम्" इत्यमरः ॥७०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नृपते! पतितोऽसि विभ्रमे
शृणु वाणीं मम सूनृतामिमाम्।
कमला विमले तवालये
सरसीवाजनि सा सरोजिनी ॥৩१॥
करुणातरणिः समुद्गतो
ननु यस्या धरणीश्वरीरिणाम्।

বাঙ্গালা—মহারাজ! পাত্র দুর্লভ বলিয়া আপনার কন্যাটী কি অদত্তা অবস্থাতেই চিরকাল গৃহে থাকিবে? তাহা নহে। কত উৎকৃষ্ট বর আছে। কোন্ ব্যক্তিই বা নিবিড় জ্যোৎস্না কামনা করে না ॥৭০॥

अन्वयः—नृपते! विभ्रमे पतितः असि, इमां सूनृतां मम वाणीं शृणु। सरसि सरोजिनी इव सा कमला विमले तव आलये अजनि ॥৩१॥

नृपत इति। हे नृपते! विभ्रमे पतितोऽसि, योग्यवराप्राप्त्या विरागेण कन्यायाश्चिरकौमाराभिप्रायकरणादित्याशयः। इमां सूनृतां सत्यप्रियां मम वाणीं शृणु। कासौ वाणीत्याह कमलेति। सरसि जलाशयविशेषे, सरोजिनी पद्मिनीव, सा जगत्प्रसिद्धा कमला लक्ष्मी-देवी, विमले निष्पापे तव आलये गृहे, अजनि रुक्मिणीरूपेण जाता।

अत्र श्रौतोपमाच्छेकानुप्रासयोः संसृष्टिरलङ्कारः।

"सूनृतं प्रिये। सत्ये" इत्यमरः ॥৩१॥

বাঙ্গালা—রাজা! আপনি ভ্রমে পতিত হইয়াছেন; অতএব আমার এই সত্য ও প্রিয়বাক্য শ্রবণ করুন। পদ্মিনী যেমন সরোবরে উৎপন্ন হয়, তেমন লক্ষ্মীদেবী আপনার নিষ্পাপ গৃহে উৎপন্ন হইয়াছেন ॥৭১॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अतिदैन्यतमः प्रतारयन्
तनुते वैभवसम्पदातपम् ॥७२॥
त्रिदिवेशपतिः शतक्रतुः
यदमर्षाद्बहुवर्षवर्त्तिनीम् ।
उपरक्त इव प्रभाकरः
करशून्यः किल दुर्गतिं गतः ॥७३॥

---

अन्वयः—ननु ! यस्याः करुणातरणिः समुद्गतः (सन्) धरणीशरीरिणां अतिदैन्यतमः प्रतारयन् वैभवसम्पदातपं तनुते ॥७२॥

लक्ष्मीं विशिनष्टि करुणेति । नन्विति राजसम्बोधने । यस्याः कमलायाः, करुणा दयैव तरणिः सूर्य्य इति करुणातरणिः, समुद्गत उदितः सन्, धरणीशरीरिणां पृथिवीप्राणिनाम्, अतिदैन्यं नितान्तदारिद्र्यमेव तमोऽन्धकारं तत् अतिदैन्यतमः, प्रतारयन् दूरीकुर्वन्, वैभवसम्पत् धनसम्पत्तिरेव आतपः प्रकाशस्तम्, तनुते विस्तारेण करोति ।

अत्र साङ्गं समस्तवस्तुविषयं रूपकमलङ्कारः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः । यच्छब्दस्योत्तरवाक्यगतत्वेन "आत्मा जानाति, यत् पापम्" इति दर्पणोदाहरणवत् तच्छब्दानपेक्षणात् निराकाङ्क्षतया नेदं युग्मकम् । एवमन्यत्रापि ज्ञेयम् ॥७२॥

বাঙ্গালা—রাজা ! যে লক্ষ্মীদেবীর দয়াসূর্য্য উদিত হইয়া পৃথিবীর প্রাণিগণের অত্যন্তদারিদ্র্যরূপ অন্ধকার দূর করিয়া ধনসম্পত্তিরূপ আতপ (রৌদ্র) উৎপাদন করিয়া থাকেন ॥৭২॥

अन्वयः—त्रिदिवेशपतिः शतक्रतुः यदमर्षात् उपरक्तः प्रभाकरः इव करशून्यः (सन्) बहुवर्षवर्त्तिनीं दुर्गतिं गतः किल ॥७३॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथवा विफलो ममोद्यमः
गुणगाने श्रिय एष सर्वथा।
गगनस्य रमागुणस्य च
परिमाणे भुवनेषु कः क्षमः ॥७४॥

---

कमलाया अनुग्रहफलमुक्त्वा निग्रहफलमाह त्रिदिवेशेति। त्रिदिवेशानां देवानां पतिः, शतक्रतुरिन्द्रः, यस्या लक्ष्मीदेव्या अमर्षात् कोपात्, उपरक्तो राहुग्रस्तः प्रभाकरः सूर्य्य इव, करैः किरणै राजग्राह्य-भागैश्च शून्यः सन्, बहुवर्षवर्त्तिनीं दुर्गतिं दुरवस्थाम्, गतः प्राप्तः किल। लक्ष्मीदेव्या अनुग्रहस्येव निग्रहस्यापि फलं गुरुतरमिवेति भावः।

अत्र श्रौतोपमाच्छेकानुप्रासयोः संसृष्टिरलङ्कारः।

"राहुग्रस्ते त्विन्दौ च पूष्णि च। सोपप्लवोपरक्तौ द्वौ" इति "बलि-हस्तांशवः कराः" इति चामरः।

पुरा किल लक्ष्मीदेवी दुर्वाससः शापेन कोपादिन्द्रं विहाय समुद्रं गता, तदा चेन्द्रो भ्रष्टश्रीः सन् दीर्घकालं मर्त्त्ये विचचारेति ब्रह्मवैवर्त्त-पुराणवार्त्ता ॥७३॥

বাঙ্গালা—স্বয়ং দেবরাজ ইন্দ্র যাঁহার ক্রোধে রাহুগ্রস্ত সূর্য্যের ন্যায় করশূন্য (কিরণশূন্য, খাজনা আদায় রহিত) হইয়া বহু বৎসর যাবৎ দুরবস্থা প্রাপ্ত হইয়াছিলেন ॥৭৩॥

अन्वयः—अथवा श्रियः गुणगाने एषः मम उद्यमः सर्वथा विफलः। भुवनेषु कः गगनस्य रमागुणस्य च परिमाणे क्षमः (स्यात्) ॥७४॥

अथवेति। अथवा, श्रियो लक्ष्मीदेव्याः, गुणानां गाने वर्णने एष मम उद्यमः सर्वथा विफलः। तथा च भुवनेषु को जनः, गगन-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अयि ! यं त्रिजगज्जनन्यपि
जनकं स्वीकुरुते मह्वीपते ! ।
चपलाप्यचला च यद्गृहे
समभाग्यो भवतास्ति तेन कः ॥७५॥

---

स्याकाशस्य, रमाया लक्ष्मीदेव्या गुणस्य च, परिमाणौ परिमितौ संख्याने च, क्षमः समर्थः स्यात्, अपि तु कोऽपि नेत्यर्थः ।

अत्र पूर्वार्द्धवाक्यार्थं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थ-हेतुकं काव्यलिङ्गमलङ्कारः, अप्रस्तुतस्य गगनस्य प्रस्तुतस्य रमागुणस्य च परिमाणाक्षमत्वरूपैकधर्म्माभिसम्बन्धाद्दीपकम्, अर्थापत्तिश्चेत्यं तेषा-मङ्गाङ्गिभावेन सङ्करः ॥७४॥

বাঙ্গালা—অথবা, লক্ষ্মীদেবীর গুণবর্ণনে আমার এই উদ্যম সর্ব্ব-প্রকারেই নিষ্ফল। কারণ, ভুবনে আকাশের ও লক্ষ্মীদেবীর গুণের পরিমাণ করিতে কোন্ ব্যক্তি সমর্থ হয় ? ॥৭৪॥

अन्वयः—अयि मह्वीपते ! त्रिजगज्जननी अपि यं जनकं स्वीकुरुते, यद्गृहे च चपला अपि अचला (तिष्ठति), तेन भवता समभाग्यः कः अस्ति ॥७५॥

स्वमतग्रहणार्थं राजानं स्तौति अयीति । अयि मह्वीपते ! भीष्मक ! त्रिजगज्जननी लक्ष्मीदेव्यपि, यं जनकं पितरम्, स्वीकुरुते । यस्य गृहे च चपला चञ्चलापि लक्ष्मीः, अचला स्थिरा सती तिष्ठति । तेन भवता समं समानं भाग्यं यस्य स तादृशः को जनः अस्ति, अपि तु कोऽपि नेति तात्पर्य्यम् ।

अत्र चपलाप्यचलेति विरोधाभासोऽलङ्कारो वृत्त्यनुप्रासेन संसृज्यते ॥७५॥

বাঙ্গালা—রাজা ! ত্রিভুবনের জননীও যাঁহাকে জনক বলিয়া

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जगतां प्रवरं वरं भवान्
स्वसुतायोग्यमुपैष्यति ध्रुवम्।
सह चन्द्रमसैव चन्द्रिका
यदि युक्ता वद का नु वेदना ॥७६॥
सकलोपनिषन्निवेदितः
परमब्रह्मतया च विश्रुतः।
भगवानज एव जातवान्
वसुदेवाद्वृतकश्यपाकृतिः ॥७७॥

স্বীকার করিতেছেন এবং যাঁহার গৃহে চঞ্চলাও অচলা হইয়া রহিয়াছেন, সেই আপনার তুল্য ভাগ্যবান্ কে আছে? ॥৭৫॥

अन्वयः—भवान् ध्रुवं स्वसुतायोग्यं जगतां प्रवरं वरं उपैष्यति। चन्द्रिका यदि चन्द्रमसा एव सह युक्ता (भवेत् तदा) का वेदना नु वद ॥७६॥

जगतामिति। भवान्, ध्रुवं निश्चितम्, स्वसुताया निजकन्याया रुक्मिण्या योग्यम्, जगतां मध्ये, प्रवरं सर्वप्रकर्षेणोत्कृष्टम् वरं पात्रम्, उपैष्यति लप्स्यते। चन्द्रिका ज्योत्स्ना, यदि चन्द्रमसा चन्द्रेणैव सह युक्ता मिलिता भवेत्, तदा का वेदना मनोव्यथा नु, तद्वद।

अत्र दृष्टान्तोऽलङ्कारः, चन्द्रचन्द्रिकयोर्लिङ्गसाम्येन नायकनायिका-व्यवहारसमारोपात् समासोक्तिश्चानयोरेकाश्रयानुप्रवेशरूपः सङ्करः, सोऽपि पुनरुक्तेकानुप्रासेन संसृज्यते ॥७६॥

বাঙ্গালা—রাজা! আপনি অবশ্যই নিজ কন্যার যোগ্য ত্রিভুবনের মধ্যে শ্রেষ্ঠ পাত্র পাইবেন; অতএব যদি চন্দ্রের সহিতই জ্যোৎস্না মিলিত হয়, তবে আর কি দুঃখ থাকিতে পারে বলুন? ॥৭৬॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अवतारपरम्पराञ्च यः
नटवत् कार्य्यवशाद्युगे युगे ।
जगतामुपकारकारणं
समधासीदविचिन्त्यवैभवः ॥७८॥

अन्वयः—सकलोपनिषद्भिर्विदितः परमब्रह्मतया विश्रुतः च भगवान् अजः एव धृतकश्यपाकृतेः वसुदेवात् जातवान् ॥७७॥

सकलेति। सकलाभिरुपनिषद्भिर्वेदान्तैः निवेदितः स्वानुरक्तेषु ज्ञापितः, परमब्रह्मतया विश्रुतः प्रसिद्धश्च, भगवानजो नारायण एव, धृता कश्यपस्याकृतिः रूपं येन तस्मात् वसुदेवात्, जातवान् ।

अत्र अजो जातवानिति विरोधात् भगवन्महिम्ना च तत्समाधानाद्विरोधाभासोऽलङ्कारः ।

"वेदान्तो नाम उपनिषत्प्रमाणम्" इति वेदान्तसारः । "जन्माद्यस्य यतः" इति वेदान्तसूत्रम् । "कश्यपस्य वसुदेवरूपिणः" इति म०वेऽपि ॥७७॥

বাঙ্গালা—সমস্ত উপনিষৎপ্রতিপাদিত এবং পরব্রহ্মরূপে প্রসিদ্ধ ভগবান্ নারায়ণই কশ্যপরূপী বসুদেব হইতে জন্ম গ্রহণ করিয়াছেন ॥৭৭॥

अन्वयः—अविचिन्त्यवैभवः यः च कार्य्यवशात् युगे युगे नटवत् जगतां उपकारकारणं अवतारपरम्परां समधासीत् ॥७८॥

अवेति। अविचिन्त्यं "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेश्चिन्तयितुमप्यशक्यं वैभवं महिमा यस्य सः, यो नारायणश्च, कार्य्यवशात् प्रयोजनानुरोधात्, युगे युगे, नटवत् विभिन्नभूमिकासु नट इव, जगताम्, उपकारकारणम् उपकारहेतुभूताम्, अवताराणां मत्स्यकूर्म्मादीनां परम्परां श्रेणीम्, समधासीद् धृतवान् । "अवतारा ह्यसंख्येया हरेरद्भुतकर्म्मणः" इत्यादिश्रीमद्भागवतोक्तेरिति भावः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

অথ যোগনিরুক্ত ঈশ্বরঃ
পুরুষঃ সাংখ্যমতশ্চ নির্গুণঃ।
অপি মন্ত্রময়শ্চ চিন্ময়
ইতি মীমাংসকসম্মতশ্চ যঃ ॥৭৯॥

---

অত্র শ্রৌতোপমালঙ্কারঃ ॥৭৮॥

বাঙ্গালা—অচিন্তনীয় মহিমা যে নারায়ণ প্রয়োজনবশতঃ যুগে যুগে নটের ন্যায় জগতের উপকারের জন্য ক্রমিক বহুতর অবতার ধারণ করিয়াছেন ॥৭৮॥

অন্বয়ঃ—অথ যঃ চ যোগনিরুক্তঃ ঈশ্বরঃ, সাংখ্যমতঃ (চ) নির্গুণঃ পুরুষঃ, মীমাংসকসম্মতঃ চ মন্ত্রময়ঃ অপি চিন্ময়ঃ ইতি ॥৭৯॥

অথেতি। অথ যশ্চ নারায়ণঃ, যোগেন পাতঞ্জলদর্শনেন নিরুক্তো নিরূপিত ঈশ্বরঃ; "ক্লেশকর্ম্মবিপাকাশয়ৈরপরামৃষ্টঃ পুরুষবিশেষ ঈশ্বরঃ" ইতি পাতঞ্জলসূত্রাৎ। সাংখ্যমতশ্চ নির্গুণশ্চিন্মাত্রঃ পুরুষঃ; "অসঙ্গোঽয়ং পুরুষঃ" ইতি সাংখ্যসূত্রাৎ। মীমাংসকাভ্যাং পূর্ব্বোত্তর-মীমাংসাদ্বয়প্রণেতৃভ্যাং জৈমিনীবাদরায়ণাভ্যাং সম্মতঃ সম্মত্যা নিরূপিতশ্চ, মন্ত্রময়ো মন্ত্রস্বরূপঃ, অপি চ চিন্ময়শ্চিৎস্বরূপঃ, "উপাস্যত্বেন দেশিত ইতি মীমাংসকাঃ" ইতি ন্যায়কুসুমাঞ্জল্যুক্তেঃ "প্রাজেশং মন্ত্রবিগ্রহম্" ইতি স্মৃতেঃ শ্রাদ্ধবিবেকমূলটীকয়োর্বহুযুক্ত্যাদিপ্রদর্শনাচ্চ; "আত্মা চরাচরগ্রহণাৎ" "আনন্দময়োঽভ্যাসাৎ" ইতি শারীরকসূত্রদ্বয়াৎ। "সত্যং জ্ঞানমানন্দং ব্রহ্ম" "সাক্ষী চেতাঃ কেবলো নির্গুণশ্চ" ইতি শ্রুতিদ্বয়াচ্চ ইতিশব্দঃ স্বরূপবর্ণনসমাপ্ত্যর্থঃ ॥৭৯॥

বাঙ্গালা—যিনি পাতঞ্জলদর্শনের মতে ঈশ্বর, সাংখ্যদর্শনের মতে

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

অধুনা নগরীং গরীয়সীং
সকলো দ্বারবতীমধিষ্ঠিতঃ ।
নলিনীং নলিনাসনো যথা
ভগবানুদ্ভবপালনান্তকৃৎ ॥৮০॥
পরিবর্ণয়িতুঞ্চ যদ্গুণং
নৃপ! শাস্ত্রাণি চতুর্দশাবধি ।

---

নির্গুণ পুরুষ, মীমাংসাদর্শনের মতে মন্ত্রময় এবং বেদান্তদর্শনের মতে চিন্ময় ॥৭৯॥

অন্বয়ঃ—অধুনা উদ্ভবপালনান্তকৃৎ ভগবান্ সকলঃ (এব) নলিনাসনঃ যথা নলিনীং (তথা) দ্বারবতীং (নাম) গরীয়সীং নগরীং অধিষ্ঠিতঃ ॥৮০॥

অথ তস্য নিরাকারত্বে কন্যাসম্প্রদানাসম্ভবঃ সাকারত্বে চ বৈকুণ্ঠস্থিতায় তস্মৈ কন্যাসম্প্রদানাশক্যতেত্যাহ অধুনেতি। অধুনা, উদ্ভবপালনান্তকৃৎ সৃষ্টিস্থিতিপ্রলয়কারী, ভগবান্ নারায়ণরূপো বাসুদেবঃ, কলাভিঃ পরিজনৈঃ সহেতি সকল এব, নলিনাসনঃ পদ্মাসনো ব্রহ্মা, যথা নলিনীং পদ্মিনীমধিতিষ্ঠতি, তথা দ্বারবতীং দ্বারকাং নাম গরীয়সীং বিশালাং স্বাধিষ্ঠানেন মহাগৌরবসম্পন্নাং বা, নগরীং পুরীম্, অধিষ্ঠিতঃ অধিষ্ঠায় স্থিতঃ। অতস্তস্মৈ কন্যাদানং নাসম্ভবমিতি ভাবঃ।

অত্র শ্রৌতীপমালঙ্কারশ্ছেকানুপ্রাসেন সংসৃজ্যতে ॥৮০॥

বাঙ্গালা—জগতের সৃষ্টি-স্থিতি প্রলয়কারী সেই ভগবান্ বাসুদেব বর্ত্তমান সময়ে—ব্রহ্মা যেমন পদ্মে অধিষ্ঠান করেন, সেইরূপ বিশাল দ্বারকানগরীতে অধিষ্ঠান করিতেছেন ॥৮০॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रसजन्ति विश्रम्नुः परं
क्षमताऽभावजयेव लज्जया ॥८१॥
त्रिजगद्दुरितौघकर्षणात्
दयया भूमिप ! क्षणापूर्वकम् ।
स्वगुणैः सकलप्रमोदनात्
प्रदधे चन्द्रपरश्च नाम सः ॥८२॥

---

अन्वयः—नृप ! शास्त्राणि यद्गुणं परिवर्णयितुं चतुर्दशावधि (एव) प्रसजन्ति (च सन्ति) परं क्षमता अभावजया लज्जया इव विश्रम्नुः ॥८१॥

परीति । हे नृप ! शास्त्राणि कर्त्तृणि, यस्य वासुदेवस्य गुणाम्, परिवर्णयितुम्, चतुर्दश अवधयः सीमा यस्मिन् कर्म्मणि तद्यथा स्यात्तथा एव, प्रसजन्ति प्रवर्त्तमानानि च सन्ति, परम्, क्षमताभावाज्जायत इति सा तया लज्जयैव, विश्रम्नुर्विरेमुः ।

अत्र भावाभिमानिनी वाच्या हेतूत्प्रेक्षालङ्कारः ।

चतुर्दशविद्या यथा—

"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः । ज्योतिषामयनञ्चैव वेदाङ्गानि वदन्ति षट् ॥ अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ॥" ॥८१॥

বাঙ্গালা—রাজা ! সমগ্র চতুর্দ্দশ শাস্ত্র যাঁহার গুণ বর্ণনা করিতে প্রবৃত্ত হইয়া পরে অক্ষমতানিবন্ধন লজ্জাবশতই যেন বিরত হইয়াছে ॥৮১॥

अन्वयः—( हे ) भूमिप ! सः दयया त्रिजगद्दुरितौघकर्षणात् क्षणपूर्वकं, स्वगुणैः सकलप्रमोदनात् च चन्द्रपरं नाम प्रदधे ॥८२॥

अथ तस्य किं नामेत्याह त्रिजगदिति । हे भूमिप ! स वासुदेवः, दयया त्रिजगतां दुरितौघस्य पापसमूहस्य कर्षणात् आकृष्याकृष्य

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जललेशमपीह यस्मकै
ददता श्रद्दधतैव जीयते ।
तनयां प्रतिपाद्य तत्करे
इह चामुत्र च जीयतां नृप ! ॥८३॥

विनाशनाद्धेतोः, कृष्णः कृष्ण इति शब्दः पूर्वस्मिन् यस्य तत्, स्वगुणैः दयादाक्षिण्यादिभिः, सकलस्य जनस्य, प्रमोदनादाह्लादनाद्धेतोश्च, चन्द्रः चन्द्र इति शब्दः परस्मिन् तस्य तत्, नाम कृष्णचन्द्र इति संज्ञाम्, प्रदधे धारयामास।

कृष्ण इति "कृष विलेखने" इति कृषधातोरौणादिकः कर्त्तरि णक्, चन्द्र इति "चदि ह्लादने दीप्तौ च" इति चन्दधातोस्तथैव रक् प्रत्ययः ॥८२॥

বাঙ্গালা—মহারাজ! তিনি দয়াবশতঃ ত্রিভুবনের পাপসমূহ নাশ করায় 'কৃষ্ণ', আর আপন গুণে সকলের আহ্লাদ উৎপাদন করায় 'চন্দ্র'—সমুদয়ে 'কৃষ্ণচন্দ্র' এইরূপ নাম ধারণ করিয়াছেন ॥৮২॥

अन्वयः—नृप ! इह श्रद्दधता (जनेन) यस्मकै जललेशं अपि ददता (सता) जीयते एव, तत्करे तनयां प्रतिपाद्य इह च अमुत्र च (त्वया) जीयतां ॥८३॥

जलेति। हे नृप! इह जगति, श्रद्दधता श्रद्धाशालिना जनेन, यस्मकै कृष्णचन्द्राय, जलस्य लेशं विन्दुमपि, ददता सता, जीयते उत्कर्षेण वृत्यत एव, तस्य कृष्णचन्द्रस्य करे हस्ते, तनयां कन्यां रुक्मिणीम्, प्रतिपाद्य दत्त्वा, इह लोके च, अमुत्र परलोके च, त्वया जीयतां सर्वोत्कर्षेण वृत्यताम्। कृष्णसम्प्रदानकदानमात्रस्यैवोत्कर्षहेतुत्वमिति भावः।

अतएवात्र पदार्थहेतुककाव्यलिङ्गद्वयस्य परस्परनिरपेक्षतया संसृष्टिरलङ्कारः।

"प्रेत्यामुत्र भवान्तरे" इत्यमरः ॥८३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## षष्ठः सर्गः ।

——:०:——

हरगिरौ चपलामचलामिव
धवलमञ्चतले विलसत्तनुम् ।
शशिमुखीं ससखीं खलु सा सखी
समगमज्ज्वलितां गलितालकाम् ॥१॥

रुचिरदन्तरुचामचिरोद्गतां
स्मितसितेन सता बहुलीकृताम् ।
मलिनमालिमुखं कुमुदप्रभम्
उपनयन्त्यलपन्नृपतेः सुता ॥२॥

विजहती सखि ! मां क्व गता कथं
हरति धैर्य्यमहो विरहस्तव ।
कुमुदिनी नलिनी च परस्परं
नहि विहाय विभाति निजाश्रयम् ॥३॥

श्रवणसुक्तिसुधा, दृशमाकृतिः,
असुखि शून्यमनः प्रकृतिस्मृतिः ।
हरति चाङ्गचयं परिरिप्सुता
सखिवियोगविषं विषमो रिपुः ॥४॥

मलिनता तलिना नलिनानने
विकसिते हसिते विसवत् सिते ।
सकललोकविलोभनलोकने
किमिति भाति यथोषसि सारसे ॥५॥



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वयमुदेत्ययि ! यच्च परस्परं
न जनकादिषु तादृशसौहृदम् ।
सरसिजं सरसि स्थितमेव हि
हसति वीक्ष्य रविं निशि मीलति ॥६॥

इति निवेद्य तदा नृपनन्दिनी
करपुटे परिगृह्य निजासने ।
चिरमभिन्नतनुत्वमिवात्मनः
परिनिवेदयितुं समवीवसत् ॥७॥

कृतपरस्परकण्ठपरिग्रहं
भृशमदीपि तदा युवतिद्वयम् ।
न तु युवा मिलितः खलु तत्र यत्
समुदपादि ततो नहि कण्टकम् ॥८॥

सरभसं परिरभ्य नृपाङ्गजां
गजकरोरुमभाषत सस्मितम् ।
चपलतोन्मदतामृदुताः स्वतः
शिशुयुवप्रवयःसु हि वीक्षिताः ॥९॥

तव किशोरि ! नु मादृशयोषिताम्
अवधिरेष परः परिरम्भणे ।
सयतनो युवको यदतः परम्
अधिकरिष्यति कण्ठमिमं तव ॥१०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सखि! नवीनजनप्रियतागता
प्रमुदिता किमु नः प्रणयेस्तराम्?।
कमलिनी तरणीच्चणपुष्पिता
तिरयते हि दलेन कुमुद्वतीम् ॥११॥

यदि सरित् सुचिरं सहचारिणीं
तरिमुपेक्ष्य यियासति सागरम्।
ननु तदा किमसौ न निवर्त्तते
सहचरत्वकृतं किल सौहृदम् ॥१२॥

विरहजोत्कलिका कलिकां तव
तुदति मामुदजामिव यामिनी।
मृदुसुमे नवदामविमोचिते
भवति भाविनि! वा क इवादरः ॥१३॥

तव वियोगविभावनयानया
मम विषादकृताननीलिमा।
सुखशशी हि यदा हृदयोदयी
स्फुरति तत्र मुखे किल कौमुदी ॥१४॥

इति निवेद्य महीपतिनन्दिनीं
कृतविषादवती सुदती तदा।
विधुरिवाचिरकुन्दसुमे रुचं
विहसितं दशनेषु दिदेश सा ॥१५॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ यदा धरणीश्वरनन्दिनी
प्रववृते वदितुं विवृतान्तरा ।
मतिमती खलु तत्र मुखे श्रियः
पदमदाद्विषतीव सरस्वती ॥१६॥

सकललोकविलोभिविलोकने
दशनभासि च चेतसि सुस्मिते ।
विशदताजनि, यौवनपूर्वतः
भवति सैव दशा हरिणीदृशाम् ॥१७॥

कुलकलत्रजनेऽतिविरञ्जिनी
चपलता निरुपप्लवशैशवे ।
अवहति प्रतिकूलसमीरणे
चलति शैवलिनी किमुत क्वचित् ॥१८॥

अनुचिता सखि हे! खलु मत्तता
किमु दिनैकभवाऽभवदीदृशी ।
किमथवा दुरितायतनाश्रयात्
ग्रहपरिग्रह एष नवस्तव ॥१९॥

किमपि कारणमत्र विनिह्नुषे
नहि तु धीरतरा तरलायसे ।
विजहती हि समीरसमीरणां
न चलति व्रततिर्न च निम्नगा ॥२०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परमतो महतस्तव कैतवात्
सुजन ! बन्धुजनेऽजनि यातना ।
अधिजिगांसुरुदन्तमिमं निजं
जलमृते व्यथते तृषितो यथा ॥२१॥

प्रणयिनि ! प्रणयास्यमुमञ्जलिं
द्रुतमुदन्तमुदीरय दन्तुरे ! ।
कियदुदाहृतसंहृतवाचिकं
तपति लिप्सितमन्तरमग्निवत् ॥२२॥

इति निशम्य गिरं मधुराक्षरां
क्षितिपतेर्दुहितुः सुदती तदा ।
विदधती चिरसुस्थतदन्तरे
कमपि भावमथो नवमभ्यधात् ॥२३॥

पुरत एव चराः सहजेन ते
मृगयितुं सुवरं विनियोजिताः ।
क्रमविवृद्धिमती कुलकन्यका
गुरुरुजा च भृशं सखि ! दुःसहा ॥२४॥

सुरऋषिप्रतिबोधितचेतसा
प्रसवता तव विप्रहितस्वरः ।
यदुपतेः सुषमावदुरःसरः
कमलिनी भवनाय हि रुक्मिणि ॥२५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुररिपो रिपुणा सहजेन ते
निषिषिधे विषयः स हरिग्रहः।
असमतां भुवि तत् सुखमोचते
सुमुखदैवमहो तदपेक्षते ॥२६॥

सखि! यतस्व हरेः करगामिनी
प्रभवितुं स्वयमेव पुरःसरी।
करिकरे चिरगामिसरोजिनीं
न लभतां वनगामुकवञ्चकः ॥२७॥

अननुभूतविभूतिगुणः परः
न खलु यावदियात् पत माधवे।
अलिनिपेयरसा नलिनी किल
न खलु वायसचञ्चुमुपाञ्चतु ॥२८॥

तुदतु नो सखि! ते मधुराधरं
घनकठोरतनुर्दशनायसा।
मृदुशिरीषप्रसूनविदारणं
करटचञ्चुपुटेन हि दुःसहम् ॥२९॥

ननु जहीहि भयं कुरु साहसं
व्रज यतस्व मनस्विनि! मङ्गले।
सुसमये किमयेऽप्यधुनातनी
न जड़ता भविता तव तापिनी ॥३०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न खलु या वदते स्वमनोरथं
परिणये किल बालिशबालिका ।
स्वपचकूपतले ननु जीवनं
स्थगयते भुवि सा हतभागिनी ॥२१॥

त्वपितदुर्हि नमर्हि तदीधितिं
पतिगमान्न सुखाकरणमोच्यते ।
अतिजड़ा बहुला कुलकन्यका
विलसितं हि विधेरतिदुर्गमम् ॥२२॥

किमु वरं वरभर्तृगमोत्सवः
किमथवा त्रपयात्र तिरस्क्रिया ।
त्वमुररीकुरुषेऽद्य परं यदि
परिणयेन कृतं गुरुलज्जिना ॥२३॥

मधुरिपूरसि भूरिरमाश्रये
भवतु तेऽवनते ! चिरसंश्रयः ।
सुखयते हि न कं कमलानने !
सुरसरित्-सरिदीश्वरसङ्गमः ॥२४॥

नृपसुतालिगिरामथ शृण्वती
किमपि शक्नुवती नहि भाषितुम् ।
न खलु भूतधृतिर्न च वा भयम्
अपि तु सा सहसा विमुमोह च ॥२५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विहसितं विगतं गदितं हतं
विचलिता ललिता च तनूलता ।
सततफुल्लमुखेक्षणपङ्कयोः
मलिनतैधत शैवलवल्लिवत् ॥३६॥

निजलक्षविवृतावतिधृष्टता
विवरणेऽपि भवेदिति न स्थिरम् ।
स्वमतबन्धुजनकोऽप्यतिनाथवान्
परिणये न पुनः परिवर्त्तनम् ॥३७॥

भयमपास्य हरिः पुरि साहसात्
स्वगमने गणिकागणना गणी ।
न खलु वाऽविदितो हरिरेष्यति
नहि सहायजनो भुवि कश्चन ॥३८॥

विसलतामृदुला क्व नु बालिका
क्व नु च वज्रसमा बहुदुःस्मृतिः ।
विकपितं कदलीदलवद्वपुः
भुवि पपात न सा चतुरोत्तरा ॥३९॥ (विशेषकम्)

विविधदुःखतरङ्गविभीषिकाम्
अनपनेयतमां परजीवने ।
चिरसुखैकशया सरलाशया
प्रतियती सहसा विससाद सा ॥४०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चिरविषादविषोल्वणभीषणात्
पतिविलेशयदुःसहदंशनात्।
कुलचरित्रतिरोहितिकृत्त्रपा-
यवनिकापसृतिः खलु मे वरम् ॥४१॥

इति विचिन्त्य तदा नृपनन्दिनी
समवदाद्विदुषी विदिताखिला।
प्रदृष्टे मुकुरे प्रतिबिम्बवत्
मनसि भावचयो विमलान्तरे ॥४२॥

यदि लता गलिता मरुताकुला
तरुवरं वरयेत् विकला स्वतः।
नहि ततो वितता जनगर्हणा
जगति हीनगतिर्हि नृयोषिताम् ॥४३॥

सहजनिर्जननी जनकोऽपरः
कुलविभूतिमहागुणसम्मदान्।
प्रगणयन्ति न तूज्ज्वलकन्यका-
सुखलवं नियतिर्गुरुदारुणा ॥४४॥

सरणिशुष्कजलापि तरङ्गिणी
जलनिधिं प्रतियाति मृदन्तरात्।
विमुखभ्रातृकृता कुलकन्यका
न लभतेऽभिमतं न च लीयते ॥४५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्व नु हरी रमणीनयनोत्सवः
क्व च विरक्तजना हृतरुक्मिणी ।
न खलु शैवलिनीं नलिनीपतिः
मृगयते न हरिर्हरिणीमपि ॥४६॥

विनयनम्रजनप्रियमाधवः
प्रक्रमते यदि भीष्मककन्यकाम् ।
असुरपेयसुरामसुजारिणीं
मुनिमनोऽपि तदा कमिता किल ॥४७॥

प्रथममेव मया तु समर्पितं
निरुदयं हृदयं दयितोत्तमे ।
इह हि लोकरविः क्व नु केशवः
गृहगुहान्तरिता क्व च रुक्मिणी ॥४८॥

अयि ! निवेद्य न हृद्यजनी स्वकं
परमभीप्सति हन्त सतो सती ।
सुरधुनी गिरिराजगुहागृहात्
जलधिमेव ययौ न नदान्तरम् ॥४९॥

किमधुना विपुलं प्रलपामि ते
हरिवियोगविषं क्षपयाङ्कुरे ।
सखि ! शिखोद्गम एव हुताशनं
शमयते यदि नातिविपत्तदा ॥५०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति निशम्य तदा सुदती गिरम्
अभिदधे दधती नृपजाकरम्।
सदृशदुःखसुखा चिरवल्लभा
समवयाश्च सखी खलु दुर्लभा ॥५१॥

समय एष न ते नतकन्धरे!
गुरुविमूढ़तया स्थगितुं तव।
विविधकार्य्यवशाद्विधुरस्य हि
विपदुपैति जवादिह जन्मिनः ॥५२॥

सपदि कञ्चुकिना पटुनाधुना
सुवचने! निजवाचिकमीरय।
गुरुसमीरसमीरितवल्लिका
श्रयति हि स्वयमेव महीरुहम् ॥५३॥

नियतमेव हरिर्भवतीमितो-
ऽमितगुणः प्रणयेद्गुणपच्चगः।
उषसि लोचनगोचरगामिनीं
कमलिनीं द्विरदः किमुपेक्षते ॥५४॥

रचय चारुतरामचिरं लिपिं
ललितकोमलभावविबोधिनीम्।
अहमितो गुरुकल्पवदावदं
तमयि! कञ्चुकिनं समुपह्वये ॥५५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इदमुदीर्य्य तदैव परागता
सपदि कञ्चुकिना नतिचञ्चला ।
सम सह सा सहसा सहसानना
विशति वेश्मवतो नृपजालयम् ॥५६॥
विकचकाशसुमोपमकेशिना
सुदिशदातपवारणधारिणा ।
उपरिगे परिपूर्णसुधाकरे
हिमवतीव शरत्समयागमे ॥५७॥
पतितदन्ततया गलिताधरा-
ऽस्फुटपदाक्षरगद्गदभाषिणा ।
पवनदोषवशाच्चलमौलिना
द्रुमदलेन यथा परिशुष्यता ॥५८॥
सनिनदं भुवि दण्डमवास्यता
धृतकमण्डलुदक्षिणपाणिना ।
तनुविभङ्गवता नतवर्ष्मणा
गुणवतेव पुरातनधन्वना ॥५९॥ (कलापकम्)
अथ समीपगतास्य सितात्मनः
कमलकोमलमूर्त्तिरसौ सखी ।
विशदलोध्रतरोरिव वल्लरी
सविनयं नयवत्तमभाषत ॥६०॥
निमन्त्रणं न्यायदृशां भवादृशां
साधीयसीं साधयितुं किल क्रियाम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदत्र वक्तुं त्रपते मनो न नः
कार्थ्यं हि कार्थ्याथ मनार्थ्यमापदि ॥६१॥

अस्याः खलु क्षितिपतेर्दुहितुर्हितार्थं
द्वारावतास्थितहरेर्हर पत्रमेनम्।
एषार्थना फलवतो भवितेति मन्ये
नालोकनं हि विफलं पुरुषोत्तमस्य ॥६२॥

अयमचिरमुदन्तो नान्तरा किन्तु वाच्यः
भवति फलवतो चेत् स्वप्रकाश्या क्रिया स्यात्।
वहु वदति यदा प्राङ् मूलकल्पस्तदाऽल्पः
वहिरणति विहीनस्वान्तरङ्गो मृदङ्गः ॥६३॥

पाथेयार्थं स्वयमुपहृतं राजकन्यासखीभ्यां
लब्धप्रीतिः सविनयनमस्कारमङ्गाय गृह्णन्।
प्रस्थास्येऽहं रजनिविगमे भाषमाणः किलेदं
साकं भूभृद् दुहितृमनसा प्रत्यगाद्‌यादवेशम् ॥६४॥

तृष्णा कृष्णाभिषङ्गे भवति वलवतो किं भवेदेष लिप्सुः ?
लिप्सायां वापि सत्यां प्रभवति किमु वा स्वल्पसारः किशोरः ? ।
चिन्ता सन्तापिनीयं वदनमलिनतां सन्ततान व्रजन्त्याः
तीव्रांशोर्वा सुधांशोर्विकचकुमुदिनीपङ्कजिन्योरिव श्रीः ॥६५॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
षष्ठः सर्गः ॥०॥

——०:०:०——

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# सप्तमः सर्गः।

——:०:——

श्वस्तने कलरवैः पतत्त्रिणां
तस्य कौशशयनीयशायिनः।
सूरसूतसंहितो धनागमात्
दैन्यशून्यहृदि बोध उद्गतः ॥१॥

अन्वयः—श्वस्तने पतत्त्रिणां कलरवैः कौशशयनीयशायिनः तस्य धनागमात् दैन्यशून्यहृदि सूरसूतसहितः बोधः उद्गतः ॥१॥

श्वस्तन इति। श्वस्तने परदिनप्रत्यूषकाले, पतत्त्रिणां पक्षिणाम्, कलरवैर्मधुरास्फुटध्वनिभिः, कुशानामिदमिति कौशं यत् शयनीयं शय्या तत्र शेत इति तस्य, तस्य ब्राह्मणस्य, धनागमात् रुक्मिणीसखीतः पाथेयार्थलाभात्, दैन्यं पाथेयाभावे यद्दौर्गत्यं तेन शून्यं यत् हृत् हृदयं तस्मिन्, सूरसूतेन अरुणेन सहितः, बोधश्चैतन्यम्, उद्गत आविर्भूतः।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिरलङ्कारः।

"श्वः परश्वः परेऽह्नि" इति "सूरसूतोऽरुणोऽनूरुः" इति चामरः।

श्वः परदिने वर्त्तत इति श्वस्तनः "सायं चिरम्" इत्यादिना तनट्-प्रत्ययः। कौशेत्यादि विशेषणेन ब्राह्मणस्य शिष्टत्वसूचनाद्दौत्ये शाठ्याभावः सूचितः। हृदयस्य निद्रास्थानत्वाद्जागरणस्थानत्वमपि हृदयस्यैवेत्यत उक्तं दैन्यशून्यहृदीति। तथा च मार्कण्डेयपुराणम्—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नित्यकृत्यनियमान् समाप्य स
च्छत्रदण्डककमण्डलून् दधत्।
भस्मचन्दनविचित्रविग्रहः
प्रास्थिताभि वसुदेवजं द्विजः ॥२॥

---

"नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः।
निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः॥"

"नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते" इति दर्पणकारोक्तेरस्मिन् सर्गे प्रायेण रथोद्धता वृत्तानि। अष्टाष्टश्लोकान्तरन्तु अन्यान्यवृत्तानि यथास्थानं वक्तव्यानि। तत्रादावष्टसु श्लोकेषु रथोद्धता वृत्तम्—"रात् नराविह रथोद्धता लगौ" इति लक्षणात् ॥१॥

বাঙ্গালা—প্রভাতকালে পক্ষিগণের কলরবে কুশময়শয্যাশায়ী সেই ব্রাহ্মণের নিদ্রাভঙ্গ হইল এবং তৎকালে অরুণোদয় হইতে লাগিল। পূর্ব্বদিন রুক্মিণীর সখীদের নিকট পথখরচ লাভ করায় ব্রাহ্মণের মনে কোন দৈন্য ছিল না ॥১॥

अन्वयः—भस्मचन्दनविचित्रविग्रहः सः द्विजः नित्यकृत्यनियमान् समाप्य छत्र-दण्डक-कमण्डलून् दधत् (सन्) वसुदेवजं अभि प्रास्थित ॥२॥

अथ ब्राह्मणस्य रुक्मिणीदौत्यकरणाय कृष्णान्तिके प्रस्थानमाह नित्येति। भस्मना चन्दनेन च विचित्रो विग्रहः शरीरं यस्य सः, स द्विजो ब्राह्मणः, नित्यकृत्यानि सन्ध्यावन्दनादीनि नित्यकार्य्याण्येव नियमास्तान् समाप्य, छत्रञ्च दण्डको यष्टिश्च कमण्डलुर्जलपात्रविशेषश्च तान्, दधत् धारयन् सन्, वसुदेवजं कृष्णम्, अभि लक्ष्यीकृत्य, प्रास्थित प्रस्थितवान्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तुर्य्यमम्बरविभागमाव्रजन्
सञ्जिगाय जगतीं करैरिनः ।
बाल एव बलवान् य उच्चकै-
स्तस्य पादतलगो नगोऽपि हि ॥३॥

अत्रापि पूर्ववदेवालङ्कारः ।

दण्डकेत्यत्रानि कप्रत्ययः ॥२॥

বাঙ্গালা—সেই ব্রাহ্মণ ভস্ম ও চন্দনলেপনে বিচিত্র শরীর হইয়া, নিত্যকার্য্য সকল সমাপন করিয়া, ছত্র, দণ্ড ও কমণ্ডলু লইয়া কৃষ্ণের উদ্দেশে প্রস্থান করিলেন ॥২॥

अन्वयः—इनः तुर्य्यं अम्बरविभागं आव्रजन् करैः जगतीं सञ्जिगाय । हि यः बालः एव उच्चकैः बलवान् नगः अपि तस्य पादतलगः (भवति) ॥३॥

तुर्य्यमिति । इनः सूर्य्यः, तुर्य्यं चतुर्थम्, अम्बरविभागमाकाशांशम्, आव्रजन् गच्छन्नेव, करैः किरणैः हस्तैश्च, जगतीं पृथिवीम्, संजिगाय अन्धकारापसारणेनायत्तीचकार । हि तथाहि, यो जनः, बाल एव, उच्चकैराधिक्येन बलवान् भवेत्, नगः पर्वतोऽपि, तस्य, पादतलगः चरणाधोगतः किरणाधोगतश्च भवति ।

अत्र सूर्य्ये कार्य्यसाम्येन प्रबलराजव्यवहारसमारोपात् समासोक्ति-रलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, वृत्त्यनुप्रास-श्छेकानुप्रासश्चेत्येतेषां परस्परनिरपेक्षतया संसृष्टिः ।

"इनः पतौ नृपार्कयोः" इति मेदिनी । "पादा रश्म्यङ्घ्रितुर्य्यांशाः" इति "शैलवृक्षौ नगावगौ" इति चामरः ॥३॥

বাঙ্গালা—ক্রমে সূর্য্য আকাশের চতুর্থভাগে উপস্থিত হইয়া কিরণ-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नि:सरत्तिमिरसञ्चयांशुका
सर्वतः प्रियकरेण संयुता।
पूर्वमार्जितमुखो निशाक्षमा
वासरद्युतिरथो विदिद्युते ॥४॥

(হস্ত) দ্বারা পৃথিবী জয় করিলেন। কারণ, যে লোক বাল্যকালেই বিশেষ বলবান্ হয়, পর্ব্বতও তাহার পাদতলবর্ত্তী (পাদ—কিরণ ও চরণ) হইয়া থাকে ॥৩॥

अन्वयः—अथो निःसरत्तिमिरसञ्चयांशुका सर्वतः प्रियकरेण संयुता पूर्वमार्जितमुखी निशाक्षमा (च) वासरद्युतिः विदिद्युते ॥४॥

निःसरदिति। अथो सूर्य्यस्य गगनचतुर्भागगमनानन्तरम्, निःसरन् निर्गच्छन् तिमिरसञ्चयः अन्धकारसमूह एव अंशुकं वसनं यस्याः सा, सर्वतः सर्वत्र, प्रियस्य दयितस्य सूर्य्यस्य च करेण हस्तेन किरणेन च, संयुता आमर्षणात् सम्बलनाच्च मिलिता, पूर्वं मार्जितं तेन प्रियेणैव परिष्कृतं मुखं वदनम् आद्यभागश्च यस्याः सा, तथा, निशायां निशागमे क्षमा प्रियस्य कार्य्यान्तरव्यापृततया स्थानान्तरगमनाद्विरहेण तनुभूता क्षीणा च, वासरद्युतिः दिनश्रीः, विदिद्युते क्रमेण प्रचकाशे।

अत्र तिमिरसञ्चयादौ अंशुकत्वाद्यारोपः शाब्दः, वासरद्युतौ अङ्गनात्वारोपस्तु आर्थ इत्येकदेशविवर्त्तिरूपकमलङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ॥४॥

বাঙ্গালা—তদনন্তর অন্ধকারসমূহরূপ বস্ত্র নিঃসৃত হইল, সূর্য্যের কিরণ সর্ব্বত্র বিস্তৃত হইয়া পড়িল এবং প্রথমেই পূর্ব্বদিক্ পরিষ্কৃত হইয়াছিল; ক্রমে রাত্রিকালে ক্ষয়প্রাপ্ত দিনশ্রী বিশেষভাবে প্রকাশ পাইল ॥৪॥



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तीक्ष्णदीधितिरसौ दिवाकरो
यत्र दुःसहतया व्यराजत ।
नैशमन्धतमसं गुहामगात्
स्यान्नु कस्य भुवने चिरोन्नतिः ॥५॥
निम्नगातटपथेन गच्छता
दृश्यते स्म बहुभावदर्शिना ।

---

अन्वयः—असौ तीक्ष्णदीधितिः दिवाकरः यत्र दुःसहतया व्यराजत (तत्र) नैशं अन्धतमसं गुहां अगात् । भुवने कस्य नु चिरोन्नतिः स्यात् ॥५॥

तीक्ष्णेति । असौ तीक्ष्णदीधितिस्तीव्रकिरणः, दिवाकरः सूर्य्यः, यत्र काले, दुःसहतया व्यराजत प्राकाशत ; तत्र काले, निशाया इदमिति नैशम्, अन्धतमसं गाढ़ान्धकारः, गुहां पर्वतकन्दरम्, अगात् अगमत् । तथाहि, भुवने कस्य नु चिरोन्नतिः स्यात् ; अपि तु कस्यापि नेत्यर्थः । निशायामुन्नतस्याप्यन्धकारस्य तदानीमवनत्यैव गुहागमनादिति भावः ।

अत्र कार्य्यसाम्येन सूर्य्ये प्रबलन्टपतेः गुहायाञ्च पलायिततद्वैरिणो व्यवहारसमारोपात् समासोक्तिरलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः ।

"ध्वान्ते गाढ़ेऽन्धतमसम्" इत्यमरः ।

"अन्धसमवेभ्यस्तमस्" इति राजादित्वादत्प्रत्ययः ॥५॥

বাঙ্গালা—যে সময়ে তীক্ষ্ণকিরণ সূর্য্য দুঃসহরূপে প্রকাশ পাইলেন, সেই সময়ে রাত্রির গাঢ় অন্ধকার পর্ব্বতের গুহার ভিতরে গমন করিল। কারণ, কোন্ ব্যক্তির চিরকাল উন্নতি থাকে ॥৫॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

याद्दशी हि सुषमा स्वभावजा
कृत्रिमा न खलु ताद्दशी भवेत् ॥६॥
ग्राम्यगम्यतटिनीतटं गता
कापि काञ्चनसमाङ्गिकाङ्गना।
भूगृहीतविलसत्तरङ्गिणी-
काञ्चिकान्तरमणिर्बभाविव ॥७॥

अन्वयः—निम्नगातटपथेन गच्छता (तेन ब्राह्मणेन) बहुभावदर्शिना (सता) हृष्यते स्म। हि स्वभावजा सुषमा याद्दशी भवेत् कृत्रिमा ताद्दशी न खलु (भवेत्) ॥६॥

निम्नगेति। निम्नगाया नद्यास्तटपथेन, गच्छता तेन ब्राह्मणेन, बहुभावदर्शिना पदार्थानामनेकावस्थादर्शिना सता, हृष्यते स्म। हि तथाहि, स्वभावजा स्वाभाविकी, सुषमा पदार्थानां परमा शोभा, याद्दशी मनोहारदर्शना भवेत्; कृत्रिमा तु सुषमा, ताद्दशी मनोहरदर्शना न खलु भवेत्।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥६॥

বাঙ্গালা—সেই ব্রাহ্মণ নদীর তীরপথে গমন করিতে থাকিয়া, নানা পদার্থের নানাবিধ ভাব দেখিয়া আনন্দিত হইতে লাগিলেন। কারণ, স্বাভাবিক সৌন্দর্য্য যেরূপ হৃদয় আকর্ষণ করে, কৃত্রিম সৌন্দর্য্য সেরূপ হৃদয় আকর্ষণ করিতে পারে না ॥৬॥

अन्वयः—ग्राम्यगम्यतटिनीतटं गता काञ्चनसमाङ्गिका का अपि अङ्गना भू-गृहीत-विलसत्तरङ्गिणी-काञ्चिकान्तरमणिः इव बभौ ॥७॥

ग्राम्येति। ग्राम्यैर्लोकैः गम्यं यत्तटिनीतटं नदीतीरं तत्र गता स्थिता, काञ्चनसमानि स्वर्णवर्णानि अङ्गानि यस्याः सा, कापि अङ्गना,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

অংশুকাংশমপহৃত্য মস্তকাৎ
অঞ্চলং পরিহিতস্য চালয়ন্।
কাঞ্চনাতিশয়সাহসোঽনিলঃ
স্পৃষ্টসর্বতনুমাকুলাং ব্যধাৎ ॥৮॥

---

ভুবা পৃথিব্যা গৃহীতা ধৃতা বিলসন্তি শোভমানা তরঙ্গিণী নদ্যেব কাঞ্চিকা মেখলা তস্যা অন্তরমণির্মধ্যমণিরিব, বভৌ।

অত্র শ্রৌতোপমারূপকয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ, সোঽপি চ চ্ছেকানুপ্রাসেন সংসৃজ্যতে ॥৭॥

বাঙ্গালা—স্বর্ণবর্ণা কোন রমণী গ্রাম্যলোকের যাতায়াতের স্থান নদীতীরে থাকিয়া পৃথিবীকর্তৃক ধৃত সেই সুন্দর নদীরূপ মেখলার মধ্যমণির ন্যায় শোভা পাইতেছিল ॥৭॥

অন্বয়ঃ—অতিশয়সাহসঃ অনিলঃ মস্তকাৎ অংশুকাংশং অপহৃত্য পরিহিতং অঞ্চলং চ চালয়ন্ স্পৃষ্টসর্বতনুং কাঞ্চন আকুলাং ব্যধাৎ ॥৮॥

অংশুকেতি। অতিশয়েন সাহসং যস্য সঃ, অনিলো বায়ুঃ, মস্তকাৎ, অংশুকাংশং বসনৈকদেশম্ অপহৃত্য, পরিহিতং কটিধৃতম্, অঞ্চলং বসনৈকদেশঞ্চ চালয়ন্ সন্, স্পৃষ্টা সর্বা তনুঃ শরীরং যস্যাস্তাম্, কাঞ্চন কাঞ্চিদঙ্গনাম্, আকুলাং বিহ্বলাম্, ব্যধাৎ অকার্ষীৎ।

অত্র কামুকত্বেন বায়ৌ স্বঠকামুকব্যবহারসমারোপাৎ সমাসোক্তিরলঙ্কারঃ, ছেকানুপ্রাসস্থানয়োঃ সংসৃষ্টিঃ ॥৮॥

বাঙ্গালা—অত্যন্তসাহসী বায়ু কোন রমণীর মস্তক হইতে বস্ত্র অপহরণপূর্ব্বক পরিধানের বস্ত্রও অপসারণ করিতে থাকিয়া এবং তাহার সমস্ত অঙ্গ স্পর্শ করিয়া তাহাকে আকুল করিতেছিল ॥৮॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्नानात् कचोच्चयमथो परिमार्जयन्त्याः
आर्द्रांशुकान्तरसरन्नवहेमकान्त्याः।
आस्फालनैः कुचयुगं विजहौ स्वचेलम्
अत्युन्नतो नहि तिरस्कृतिमुत्सहेत ॥८॥

अन्वयः—स्नानात् अथो कचोच्चयं परिमार्जयन्त्याः आर्द्रांशुकान्तरसरन्नवहेमकान्त्याः कुचयुगं आस्फालनैः स्वचेलं विजहौ। हि अत्युन्नतः तिरस्कृतिं न उत्सहेत ॥८॥

स्नानादिति। स्नानात् अवगाहनात्, अथो अनन्तरम्, कचोच्चयं दीर्घकेशपाशम्, परिमार्जयन्त्याः पृष्ठतो गात्रमार्जन्याश्चपेटाघातेन निर्जलं कुर्वत्याः, आर्द्रांशुकस्य परिहितस्तिमितवसनस्य अन्तरात् क्षुद्र-क्षुद्ररन्ध्रात् सरन्ती बहिर्गच्छन्ती नवस्य हेम्नः स्वर्णस्य कान्तिरिव कान्ति-र्यस्यास्तस्याः कस्याश्चिदङ्गनायाः, कुचयुगं स्तनद्वयं कर्तृ, आस्फालनैः उत्प्लवनैः, स्वचेलं निजावरणवस्त्रम्, विजहौ तत्याज पातयामासेत्यर्थः। हि तथाहि, अत्युन्नतः पदार्थो जनश्च, तिरस्कृतिमावरणं भर्त्सनञ्च न उत्सहेत सोढुं न शक्नुयात्।

अत्र स्वभावोक्तिरलङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः अन्त्यानुप्रासश्चेत्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः।

इतःप्रभृत्यष्टसु श्लोकेषु वसन्ततिलका वृत्तम्—"उक्ता वसन्ततिलका त-भ-जा जगौ गः" इति लक्षणात् ॥८॥

বাঙ্গালা—কোন রমণী নদীতে স্নান করিবার পর, তীরে দাঁড়াইয়া গামছা দিয়া চুল ঝাকড়াইয়া মাজিতে ছিল; তখন নূতন সোনার কান্তির ন্যায় তাহার দেহের কান্তি ভিজা কাপড়ের ভিতর হইতে বাহির

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दूराद्यदोन्नतभुजा ग्रहणे सयत्ना
स्रस्तांशुकं स्तनयुगं सहसावलोक्य ।
चेलाञ्चलेन पिदधेऽवहिता तदैव
सख्येरितं वसनमाशु पपात तोये ॥१०॥

---

হইতেছিল, এই সময়ে তাহার স্তনযুগল আস্ফালন করিয়া নিজের আবরণবস্ত্র ফেলাইয়া দিয়াছিল। কারণ, অত্যন্ত উন্নতপদার্থ আবরণ-সহ্য করিতে পারে না ॥৯॥

अन्वयः—यदा उन्नतभुजा दूरात् ग्रहणे सयत्ना अवहिता च (काचित् अङ्गना) सहसा स्तनयुगं स्रस्तांशुकं अवलोक्य चेलाञ्चलेन पिदधे। तदा एव सख्या ईरितं वसनं आशु तोये पपात ॥१०॥

दूरादिति। यदा, उन्नतौ उत्तोलितौ भुजौ यया सा, दूराद्दूर-देशात्, ग्रहणे सखीनिक्षिप्तस्य शुष्कवसनस्य धारणे, सयत्ना साग्रहा, अवहिता कृतावधाना च काचिदङ्गना, सहसा झटिति, स्तनयुगम्, स्रस्तं निपतितम् अंशुकं वसनं यस्मात्तत्तादृशम् अवलोक्य, चेलाञ्चलेन हस्ताभ्यामेवोत्तोलिततद्वसनैकदेशेन, पिदधे तदुन्मुक्तं स्तनयुगम् आच्छा-दयामास; तदैव, सख्या वयस्यया, ईरितं तीरान्निक्षिप्तम्, वसनं शुष्कवस्त्रम्, आशु शीघ्रम्, तोये नदीजले पपात; उत्तोलितहस्तयोः स्तनयुगावरणे व्यापृतत्वात् तत्रैवावधानाच्चेति भावः।

अत्रापि स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते।

पिदध इति "धाञ्‌नह्योरपेरुपसर्गस्यादेः" इत्यपेरकारलोपः। महाकौतुककरोऽयं व्यापारः ॥१०॥

বাঙ্গালা—কোন রমণী স্নান করিয়া জলের নিকট দাঁড়াইয়া সখীক্ষ

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वालेन लोलमतिना सलिलात् सलीलम्
आकृष्यमाणपरिधानदुकूलमूला।
आदित्सुकापरमितश्च समस्तमस्तम्
आकुञ्च्य सस्मितमुखी द्रुतमप्सु मग्ना ॥११॥

নিকটে শুষ্ক বস্ত্র চাহিয়া হাত দুইখানি তুলিল এবং দূর হইতে সেই শুষ্ক বস্ত্র ধরিবার জন্য সচেষ্ট ও অবহিত হইল, অমনি স্তন দুইটীর উপরের কাপড় পড়িয়া গিয়াছে দেখিয়া তাহা তুলিয়া, যখন স্তনের আবরণ করিতে লাগিল, তখনই সখীনিক্ষিপ্ত সেই শুষ্ক বস্ত্রখানি বাইয়া সত্বর জলে পতিত হইল ॥১০॥

अन्वयः—लोलमतिना वालेन सलिलात् सलील' आकृष्यमाण-परिधान-दुकूलमूला (काचित् अङ्गना) अपर' आदित्सुका (आसीत्) इतः च समस्त' अस्त'; आकुञ्च्य सस्मितमुखी (सती) द्रुत' अप्सु, मग्ना ॥११॥

वालेनेति। लोला चञ्चला मतिर्बुद्धिर्यस्य तेन तादृशेन, वालेन शिशुना पुत्रेण, सलिलाज्जलात्, सलील' सकौतुक' यथा स्यात्तथा, आकृष्यमाणं परिधानदुकूलस्याद्र्र्परिधानवसनस्य मूलमधोदेशो यस्याः सा तादृशी काचिदङ्गना, अपर' शुष्क' वस्त्रम्, आदित्सुका आदातु' ग्रहीतुमिच्छुः आसीत्, इतः अस्यां दिशि च, समस्त' सर्वमेव परिच्छितमाद्र्र्' वस्त्रम्, अस्त' तेन वालेनाकृष्य जले निक्षिप्तम्। आकुञ्च्य त' वाल' भर्त्सयित्वा, सस्मित' कौतुकात् समुद्गतहास्यं मुख' वदन' यस्याः सा तादृशी सती, द्रुत' झटिति, अप्सु, नदीजले मग्ना आकटिदेशं कृतप्रवेशा। कटेरधोभागस्य तदानीं निरावरणतया लज्जानिवारणायेत्याशयः।

अत्रापि स्वभावोक्तिरलङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥११॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बालप्रवाललुलिता च भुजप्रताना
पद्मालिचुम्बनचलन्नयनप्रसूना ।
दूरोल्लसत्सुषमसौरभलोभनीया
वृक्षं विना कुचफला ललना लतासीत् ॥१२॥

বাঙ্গালা—কোন মহিলা স্নান করিয়া উঠিয়া শুষ্ক বস্ত্র গ্রহণ করিবার ইচ্ছা করিতেছিল; এমন সময়ে তাহার চঞ্চলমতি বালক পুত্র জল হইতে কৌতুকের সহিত উহারই পরিধানবস্ত্রের নিম্নদেশ ধরিয়া সবলে আকর্ষণ করিল; তখন তাহার কটিদেশের সমস্ত বস্ত্রই স্খলিত হইয়া গেল; সুতরাং সেই মহিলা বালকটীকে ভর্ৎসনা করিয়া সহাস্যমুখে তৎক্ষণাৎ কটিদেশপর্য্যন্ত জলে নিমগ্ন করিল ॥১১॥

अन्वयः—ललना बालप्रवाललुलिता भुजप्रताना पद्मालि-चुम्बन-चलन्नयन-प्रसूना दूरोल्लसत्-सुषम-सौरभ-लोभनीया कुचफला च वृक्षं विना लता आसीत् ॥१२॥

बालेति । ललना काचिदङ्गना, बालौ वलयमेव प्रवालः पल्लवस्तेन लुलिता मनोहरा, भुजौ बाहू एव प्रतानौ शाखे यस्याः सा, पद्मानि नयनलोमान्येव अलयो भ्रमरास्तेषां चुम्बनेन संयोगेन चलत् स्पन्दमानं नयनमेव प्रसूनं पुष्पं यस्याः सा, दूरे उल्लसत् प्रसरत् यत् सुषमं मनोहरं सौरभं गन्धस्तेन लोभनीया लोभजनिका, कुचौ स्तनावेव फले यस्याः सा तादृशी च, वृक्षं विना वृक्षावलम्बनव्यतिरेकेण, एकाकिन्या एव तीरे स्थितत्वादिति भावः, लता लतास्वरूपा आसीत् ।

अत्र वृक्षं विनेत्यनेन अधिकारूढवैशिष्ट्यरूपकमलङ्कारो वृत्त्यनुप्रास-च्छेकानुप्रासाभ्यां संसृज्यते ।

"अलङ्कारान्तरे मेध्ये बालौ बाला त्रुटिस्त्रियोः" इति मेदिनी ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लोलं दुकूलमनुकूलसमीरणेन
पान्थाः प्रयान्ति च पथि प्रनिरीक्षमाणाः।
इत्याकुला वसनदूरगतीरतीर्णा
मार्ज्जांशुकेन पिदधे सपदि स्वगात्रम् ॥१३॥

"पल्लवोऽस्त्री किसलयं प्रवालः प्रवलो मतः" इति रभसः। "प्रतानः शाखा" इति रघुनाथः।

लोभयतीति लोभनीया "कृत्यल्युटोऽन्यत्रापि" इति कर्त्तर्य्यनीयप्रत्ययः "दिग्व्यापिनीर्लोचनलोभनीया" इति भट्टिप्रयोगवत् ॥१२॥

বাঙ্গালা—কোনও ললনা নদীর তীরে একাকিনী দাঁড়াইয়া থাকিয়া বৃক্ষব্যতীত লতাস্বরূপ হইয়াছিল। তাহার বলয় ছিল—পল্লব, বাহু ছিল—শাখা, নয়নরোমরূপ ভ্রমরগণের সংযোগে তাহার নয়নরূপ পুষ্প দুইটী শোভা পাইতেছিল এবং স্তন দুইটী ছিল—ফল, আর দূরগামী সুন্দর সৌরভে সকলের লোভ জন্মাইতেছিল ॥১২॥

अन्वयः—अनुकूलसमीरणेन दुकूलं लोलं, पान्थाः च प्रनिरीक्षमाणाः (सन्तः) पथि प्रयान्ति इति आकुला वसन-दूरग-तीर-तीर्णा (काचित् अङ्गना) सपदि मार्ज्जांशुकेन स्वगात्रं पिदधे ॥१३॥

लोलमिति। अनुकूलः पथिकदर्शनसुविधाकारी यः समीरणो वायुस्तेन, दुकूलं परिहितमार्द्रं वस्त्रम्, लोलं चञ्चलं जातम्; पान्थाः पथिकाश्च, प्रनिरीक्षमाणाः तं लोभनीयं भावं पश्यन्तः सन्तः, पथि प्रयान्ति; इति हेतोः, आकुला विह्वला, वसनं परिधेयं शुष्कं वस्त्रं दूरगं दूरवर्त्ति यत्र तस्मिंस्तादृशे तीरे नद्यास्तटे तीर्णा उत्थिता काचिदङ्गना, सपदि द्रुतम्, मर्ज्जांशुकेन गात्रमार्जनवस्त्रेण, स्वगात्रम्, पिदधे आच्छादयामास।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

প্রক্ষালিতোজ্ঝিতশিশুং তটমীয়িবাংসম্
আরাদরং সুতরলং সলিলে তরন্তম্।
দ্রাগেকপাণিকমলে বসনং বসানা
নাভ্যন্তমগ্নমদধাত্ পরিতর্জয়ন্তী ॥১৪॥

অত্রাপি স্বভাবোক্তিরলঙ্কারো বৃত্ত্যনুপ্রাসচ্ছেকানুপ্রাসাভ্যাং সংসৃজ্যতে ॥১৩॥

বাঙ্গালা—কোন রমণী নদীতে স্নান করিয়া তীরে উঠিয়াছিল, তখন তাহার পরিধেয় শুষ্ক বস্ত্র দূরে ছিল, এমন সময়ে প্রবল বায়ু আসিয়া তাহার পরিহিত আর্দ্র বস্ত্র সঞ্চালিত করিতে লাগিল, ওদিকে পথিকেরা তাহার সেই অবস্থা দেখিতে দেখিতে যাইতে থাকিল; সুতরাং সে আকুল হইয়া দ্রুত গাত্রমার্জনীদ্বারা আপন গাত্র আবৃত করিয়া ফেলিল ॥১৩॥

অন্বয়:—বসনং বসানা (কাচিত্ অঙ্গনা) তটং ঈয়িবাংসং সুতরলং আরাত্ অরং সলিলে তরন্তং নাভ্যন্তমগ্নং চ প্রক্ষালিতোজ্ঝিতশিশুং পরিতর্জয়ন্তী (সতী) একপাণিকমলে দ্রাক্ অদধাত্ ॥১৪॥

প্রক্ষালিতেতি। বসনং শুষ্কং বস্ত্রম্, বসানা পরিদধানা, অতএব শিশুং সুতং প্রত্যনবধানেতি ভাবঃ; কাচিদঙ্গনা, তটং নদ্যাস্তীরম্ ঈয়িবাংসং স্নানাত্ পরং গতবন্তম্, সুতরলমতীবচঞ্চলস্বভাবম্, আরাদ্-দূরাত্, অরং সত্বরম্, সলিলে নদ্যা জলে, তরন্তং পতিত্বা প্রবিশন্তম্, নাভ্যন্তমগ্নং নাভিপর্য্যন্তং জলে মগ্নঞ্চ, আদৌ প্রক্ষালিতো জনন্যৈব ধৌতগাত্রঃ পরঞ্চ উজ্ঝিতো গাত্রমার্জন্যা মার্জিতগাত্রশ্চেতি স চাসৌ শিশুর্বালকপুত্রশ্চেতি তম্, পরিতর্জয়ন্তী অতীবভর্ত্সয়ন্তী সতী, একপাণিকমলে শিশোরেকহস্তে, দ্রাক্ ঝটিতি, অদধাত্ ধৃতবতী।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नास्ते रसो मदधिक: कुचकुम्भमध्ये
नैवाधिकस्य परिणाहितया किलासौ।
इत्थं नदज्जलगलं कलसं वहन्ती
काचिद्ययावभिगृहं स्तिमितांशुकाङ्गी ॥१५॥

अत्रापि स्वभावोक्तिरलङ्कारस्तु कानुप्रासेन संसृज्यते।

"आराद्दूरसमीपयो:" इति "लघु क्षिप्रमरं द्रुतम्" इति "स्राग्-झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुते" इति चामर:।

ईयिवांसमिति इणधातो: क्वसुप्रत्यये रूपम्। एकपाणिकमल इति "गले बद्ध्वा गौर्नीयते, शाखायां वृक्षं छिनत्ति" इत्यादिवदधिकरणे एव सप्तमी। वसानेति "वस आच्छादने" इत्यस्यानमि प्रयोग: ॥१४॥

বাঙ্গালা—কোন রমণী, অত্যন্ত চঞ্চল বালকপুত্রটীকে স্নান করাইয়া এবং গা মুছাইয়া দিলে, সেই বালকটী তীরে যাইয়া উঠিয়াছিল; এমন সময়ে সেই রমণী শুষ্ক বস্ত্র পরিধান করিতেছিল; এই অবসরে সেই বালকটী বেগে আসিয়া আবার জলে নামিয়া নাভিপর্য্যন্ত মগ্ন করিয়া-ছিল; তখন জননী ভর্ৎসনা করিতে থাকিয়া সত্বর তাহার একখানি হাত ধরিল ॥১৪॥

अन्वय:—कुचकुम्भमध्ये मदधिक: रस: न आस्ते असौ परिणाहितया न एव किल अधिक: च इत्थं नदज्जलगलं कलसं वहन्ती स्तिमितांशुकाङ्गी (च) काचित् (अङ्गना) अभिगृहं ययौ ॥१५॥

नेति। कुचकुम्भमध्ये इंदृशीनां स्तनकलसाभ्यन्तरं, मदधिको मद्रसादतिरिक्त:, रसो जलं शृङ्गारश्च, न आस्ते न वर्त्तते; असौ कुचकुम्भ:, परिणाहितया विशालतया च नैव किल अधिको मत्तो-ऽतिरिक्तश्च, इत्थम्, नदन् जलशब्देन वदन्निव चासौ जलं गले यस्य स

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

রাত্রিন্দিবং প্রিয়তমেণ ললামলীলাম্
আবিষ্কৃতাং সপুলকং পুলিনে লপন্তী ।
মন্ত্রে সখীং স্মিতমুখীং বিবিধাক্ষিভঙ্গি
প্রায়েণ হি প্রিয়গতং যুবতির্ব্রবীতি ॥১৬॥

জলগলশ্চেতি তম্, কলসং বহন্তী, স্তিমিতমার্দ্রম্ অংশুকং বস্ত্রম্ অঙ্গেষু যস্যাঃ সা, তাদৃশী চ কাচিদঙ্গনা, অভিগৃহং গৃহাভিমুখম্, যযৌ।

অত্র জলশৃঙ্গারয়োর্ভেদেঽপি রসশব্দেনৈক্যাভেদাধ্যবসায়াদতিশয়োক্তিরলঙ্কারঃ, নদদিত্যত্রেবশব্দাভাবাৎ প্রতীয়মানা ক্রিয়োৎপ্রেক্ষা বৃত্ত্যনুপ্রাসশ্চেত্যেতেষাং পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ ।

"রসো গন্ধরসে জলে" ইত্যাদি মেদিনী। "পরিণাহো বিশালতা" ইত্যমরঃ ॥১৫॥

বাঙ্গালা—'এইরূপ যুবতিগণের কুচকুম্ভমধ্যে আমার রস (জল) অপেক্ষা অধিক রস (শৃঙ্গার) নাই এবং ঐ কুচকুম্ভ বিশালতায় আমা অপেক্ষা অধিক নহে' এইরূপই যেন যে কলস গলদেশের জলের শব্দদ্বারা বলিতেছিল, সেইরূপ একটী জলপূর্ণ কলস কক্ষদেশে লইয়া এবং আর্দ্র বস্ত্রই পরিধান করিয়া কোন রমণী গৃহাভিমুখে যাইতেছিল ॥১৫॥

অন্বয়ঃ—(কাচিৎ অঙ্গনা) পুলিনে (স্থিতা) প্রিয়তমেন রাত্রিন্দিবং আবিষ্কৃতাং ললামলীলাং সপুলকং লপন্তী (সতী) বিবিধাক্ষিভঙ্গি স্মিতমুখীং সখীং মন্ত্রে। হি যুবতিঃ প্রায়েণ প্রিয়গতং ব্রবীতি ॥১৬॥

রাত্রীতি। কাচিদঙ্গনা, পুলিনে নদ্যাঃ সিকতাময়স্থলে স্থিত্বেতি শেষঃ, প্রিয়তমেন পত্যা, রাত্রৌ চ দিবা চেতি রাত্রিন্দিবম্, আবিষ্কৃতাং প্রকাশিতাম্, ললামা উত্তমা চাসৌ লীলা শৃঙ্গারভাবশ্চেতি তাম্, সপুলকং সরোমাঞ্চম্, লপন্তী বদন্তী সতী, বিবিধা অক্ষিভঙ্গি যস্মিন্

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ज्यायसी पतितदन्तवाससी
धुन्वती समुदितास्फुटाक्षरा।
स्वीयपूर्ववयसः सुशीलतां
पप्रथे युवतिषु प्रथीयसीम् ॥१७॥

---

कर्म्मणि तद्‌यथा तथा, स्मितं मृदुहास्यं मुखे यस्यास्ताम्, सखीम्, बन्द्रे विवृत्य उवाच। हि तथाहि, युवतिः, प्रायेण बाहुल्येनैव, प्रियगतं पतिविषयकवाक्यम्, ब्रवीति।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः।

"ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु" इत्यमरः।

रात्रौ च दिवा चेति रात्रिन्दिवम् "धेन्वनुडुहादयश्चे"ति निपातः ॥१६॥

বাঙ্গালা—কোন রমণী নদীপুলিনে থাকিয়া নানাবিধ নয়নভঙ্গী করিয়া রোমাঞ্চিত হইয়া সহাস্যমুখী সখীর নিকটে—প্রিয়তম দিবারাত্র যে উত্তম উত্তম লীলা প্রকাশ করিয়া থাকেন, তাহা বলিতে থাকিয়া প্রকৃত অপেক্ষাও অধিক বিবৃত করিতেছিল। কারণ, যুবতিগণ প্রায়ই প্রিয় পতির কথা বলিয়া থাকে ॥১৬॥

अन्वयः—ज्यायसी पतितदन्तवाससी धुन्वती समुदितास्फुटाक्षरा (च सती) युवतिषु प्रथीयसीं स्वीयपूर्ववयसः सुशीलतां पप्रथे ॥१७॥

ज्यायसीति। ज्यायसी काचिद्‌वृद्धा, पतिते मुखगह्वरगते च ते दन्तवाससी ओष्ठद्वयञ्चेति ते, धुन्वती अविरतं चालयन्ती, समुदितानि सम्यक्‌चेष्टया उक्तान्यपि अस्फुटानि दन्ताभावादस्पष्टानि अक्षराणि वर्णा यया सा तादृशी च सती, युवतिषु मध्ये, प्रथीयसीमतिमहतीम्,

आत्तयष्टिरतिकम्प्रमस्तका
काचनातिनतपूर्वकायिका ।
हन्त ! कुत्र पतितं नु यौवनं
मार्गयन्त्यभियया विवालयम् ॥१८॥

स्वीयपूर्ववयसः स्वकीययौवनकालस्य, सुशीलतां सच्चरित्रताम्, पप्रथे प्रकर्षेणाचख्यौ ।

अत्र स्वभावोक्तिरलङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

"वर्षीयान् दशमी ज्यायान्" इति "ओष्ठाधरौ तु रदनच्छदौ दशन-वाससी" इति चामरः ।

पप्रथ इति "प्रथ प्रख्याने" इत्यस्य परोक्षायां रूपम् ॥१७॥

বাঙ্গালা—কোনও বৃদ্ধা স্ত্রী মুখগহ্বরপ্রবিষ্ট ওষ্ঠদ্বয় অনবরত কম্পিত করিয়া বিশেষ চেষ্টাতেও অস্পষ্ট কথাই বলিতে থাকিয়া যুবতি-গণের মধ্যে নিজের যৌবনকালের অত্যন্ত সচ্চরিত্রতার বিষয় বিশেষ-ভাবে বলিতেছিল ॥১৭॥

अन्वयः—अतिनतपूर्वकायिका अतिकम्प्रमस्तका (अतएव) आत्तयष्टिः काचन हन्त ! यौवनं कुत्र पतितं नु (इति) मार्गयन्ती इव आलयं अभिययौ ॥१८॥

आत्तेति । अतिनतो वयोबाहुल्यादतिशयेन वक्रीभूतः पूर्वकायः शरीरोपरिभागो यस्याः सा, अतिकम्प्रं वातरोगात् अतिशयेन कम्पन-शीलं मस्तकं यस्याः सा, अतएव आत्ता हस्तेन गृहीता यष्टिर्दण्डो यया सा तादृशी च, काचन काचिद्वृद्धा, हन्त खेदे, मम यौवनं कुत्र पतितं नु ? इति मार्गयन्ती पार्श्वद्वये मस्तकचालनात् अन्विष्यन्तीव, आलयं गृहम्, अभिययौ । अन्योऽपि हारितं वस्तु मस्तकं सञ्चाल्यैव भूमावन्विष्यतीति भावः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यान्तमन्तिकपथेन सन्ततं
नव्यलोकमवलोक्य सम्मुखम् ।
व्यस्तवस्त्रविकसत्कलेवरा
वैमुख्यं गतवती वराङ्गना ॥१९॥

---

अत्र स्वभावोक्तिरलङ्कारः, आत्तयष्टित्वं प्रति पूर्वविशेषणपदार्थद्वयं हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥१८॥

বাঙ্গালা—দেহের উপরিভাগ অত্যন্ত অবনত হইয়াছিল এবং মাথাটীও অনবরত কাঁপিতেছিল, এহেন কোন বৃদ্ধ স্ত্রীলোক—'হায়! আমার যৌবনটী কোথায় পড়িয়া গেল' এইভাবে সেই যৌবনের যেন অন্বেষণ করিতে থাকিয়া গৃহের দিকে যাইতেছিল ॥১৮॥

अन्वयः—व्यस्त-वस्त्र-विकसत्कलेवरा वराङ्गना सन्ततं अन्तिकपथेन यान्तं सम्मुखं नव्यलोकं अवलोक्य वैमुख्यं गतवती ॥१९॥

यान्तमिति । व्यस्तं वायुना विक्षिप्तं यद्वस्त्रमार्द्रं वसनं तस्मात् तदभ्यन्तरात् विकसत् प्रकाशमानं कलेवरं देहकान्तिर्यस्याः सा, वराङ्गना काचिदुत्तमा युवतिः, सन्ततमनवरतम्, अन्तिकपथेन यान्तं गच्छन्तम्, सम्मुखं स्वाभिमुखस्थं, नव्यलोकम्, अवलोक्य, वैमुख्यं पराङ्मुखत्वम्, गतवती प्राप्ता, लज्जावशात् लज्जायाश्च साम्मुख्येनैव प्रवृत्तेरिति भावः ।

अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिरलङ्कारः ॥१९॥

বাঙ্গালা—কোন সুন্দরী যুবতি স্নান করিয়া গৃহাভিমুখে চলিয়াছিল, এই সময় বায়ু আসিয়া তাহার বস্ত্র সঞ্চালিত করিতে থাকায় দেহকান্তি

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नेनिजन्निजमथाङ्गमङ्गना-
वृन्दमन्तररविन्दसुन्दरम् ।
संययौ युवजनोऽवलोकयन्
को न पश्यति हि सान्द्रचन्द्रिकाम् ॥२०॥

প্রকাশ পাইতেছিল; ওদিকে নিকটবর্ত্তী পথ দিয়া সর্ব্বদাই নব্য লোক সকল অভিমুখ হইয়া যাইতেছিল; তাহা দেখিয়া সেই যুবতি ফিরিয়া দাঁড়াইতেছিল ॥১৯॥

अन्वयः—अथ युवजनः अन्तररविन्दसुन्दरं निजं अङ्गं नेनिजत् अङ्गनावृन्दं अवलोकयन् संययौ । कः हि सान्द्रचन्द्रिकां न पश्यति ॥२०॥

नेनिजदिति । अथ युवजनः, अरविन्दस्य अन्तरित्यन्तररविन्दम्, पद्मकर्णिका तद्वत् सुन्दरम् उत्तमगौरवर्णतया मनोहरम्, निजम् अङ्गम्, नेनिजत् प्रक्षालयत्, अङ्गनावृन्दम्, अवलोकयन्, संययौ । को हि जनः, सान्द्रचन्द्रिकां निविड़ज्योत्स्नाम्, न पश्यति, अपि तु सर्व्व एव पश्यतीत्यर्थः ।

अत्रोभयोर्वाक्ययोः गम्यसाम्यत्वात् अवलोकयन् पश्यतीति क्रियाभेदेन निर्द्देशाच्च प्रतिवस्तूपमालङ्कारः, अर्थापत्तिश्चानयोरेकाश्रयानुप्रवेशरूपः सङ्करः, सोऽपि च वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

नेनिजदिति "निजिर् शौचपोषणयोः" इति निजधातोः शत्रन्तेः "निजिविजिविषां गुणः सार्वधातुके" इत्यभ्यासे गुणः । अन्तररविन्देति "अन्तर्मन्दिरमभ्यगात्" इत्यादिवत् अव्ययीभावः ॥२०॥

বাঙ্গালা—পদ্মের কর্ণিকার ন্যায় উত্তম গৌরবর্ণ রমণীগণ আপন আপন অঙ্গ প্রক্ষালন করিতেছিল, এমন সময়ে যুবকেরা তাহাদিগকে দেখিতে দেখিতে তীর দিয়া যাইতেছিল। কারণ, কোন্ ব্যক্তি নিবিড় জ্যোৎস্না দর্শন না করে? ॥২০॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काचनापि रमणीकुले किल
व्यञ्जती रमणरामणीयकम् ।
विग्रहे पुलकितेऽवलोकिते
शीतलत्वमलपन्नभस्वतः ॥२१॥
सन्तरत्तरुणकामिनीजनः
हेमकुम्भयुगमम्भसि क्षिपन् ।
तुङ्गभङ्गचयभङ्गमादधत्
आजुहाव तटिनीमिवाहवे ॥२२॥

---

अन्वयः—काचन अपि रमणीकुले रमणरामणीयकं व्यञ्जती (सती) किल पुलकिते विग्रहे (रमणीकुलेन) अवलोकिते (सति) नभस्वतः शीतलत्वं अलपत् ॥२१॥

काचनेति । काचनापि काचिदप्यङ्गना, रमणीकुले अङ्गनासमूह-मध्ये, रमणस्य पत्युः सुरतस्य वा रामणीयकं सौन्दर्यम्, व्यञ्जती वाचा विवृण्वती व्यञ्जनया वृत्त्या सूचयती वा सती किल, पुलकिते रोमाञ्चिते, विग्रहे स्वगात्रे, अवलोकिते तेनैव रमणीकुलेन दृष्टे सति, नभस्वतो वायोः, शीतलत्वं शैत्यम्, अलपत् अवदत् । वायोः शीतलत्ववशादेवायं मम रोमाञ्चः, न तु सात्त्विकभावोदयादित्यभिप्रायः ।

अतएवात्र व्याजोक्तिर्नामालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥२१॥

বাঙ্গালা—কোন রমণী সখীগণমধ্যে পতির সৌন্দর্য্য বর্ণনা করিতে-ছিল, তখন তাহার শরীর রোমাঞ্চিত হইয়াছিল, সেই শরীর আবার সে সখীরা দেখিতেছিল, এমন সময়ে সেই রমণী তৎকালের বায়ুর অত্যন্ত শীতলতার কথা প্রকাশ করিতেছিল ॥২১॥



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आगलं गलितकुन्तलावला
मग्नदेहलतिकातिकाञ्चना ।
वारिवेगविगलत् किलांशुकं
घूर्णनात् परिदधे कुतूहलात् ॥२३॥

अन्वयः—अम्भसि हेमकुम्भयुगं क्षिपन् सन्तरत्तरुणकामिनीजनः तुङ्ग-भङ्ग-चय-भङ्गं आदधत् (सन्) आहवे तटिनीं आजुहाव ॥२२॥

सन्तरदिति । अम्भसि नदीजले, हेमकुम्भयुगं स्वर्णकुम्भद्वयम्, तत्तुल्यं स्तनद्वयमित्यर्थः, क्षिपन् सन्, सन्तरंश्चासौ तरुणकामिनी-जनश्चेति स तथोक्तः, तुङ्गस्य उन्नतस्य भङ्गचयस्य तरङ्गसमूहस्य भङ्गं पराजयम्, आदधत् जनयन् कुर्वन् सन्, आहवे युद्धे, तटिनीं तां नदीम्, आजुहाव इव आह्वयति स्मेव । अन्योऽपि वीरः परपक्षसैन्यं पराजित्य युद्धे तन्नायकमाह्वयतीति भावः ।

अत्र कुचयुगहेमकुम्भयुगयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिरलङ्कारः, "कथमुपरि कलापिनः कलापः" इत्यादिदर्पणोदाहरणवत्, वाचा भावाभिमानिनी क्रियोत्प्रेक्षा छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां मिथो नैरपेक्ष्यात् संसृष्टिः ।

"भङ्गस्तरङ्ग ऊर्म्मिर्वा स्त्रियां वीचिः" इत्यमरः । "भङ्गो जयविपर्य्यये" इत्यादिर्मेदिनी ॥२२॥

বাঙ্গালা—যুবতি রমণীরা স্বর্ণকুম্ভযুগলের তুল্য স্তনযুগল জলে নিক্ষিপ্ত করিয়া সন্তরণ করিতে থাকিয়া উচ্চ তরঙ্গসমূহকে পরাজয় করিয়া, সেই নদীকে যেন যুদ্ধে আহ্বান করিতেছিল ॥২২॥

अन्वयः—गलितकुन्तला आगलं मग्नदेहलतिका अतिकाञ्चना (च) अबला वारिवेगविगलत् अंशुकं कुतूहलात् किल घूर्णनात् परिदधे ॥२३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सन्तरन्त्युपनयन्त्यथोन्मुखी
भारमम्बुनि नितम्बविम्बयोः।
फुल्लहेमकमलान्तिकेऽसृजत्
सालि तत्कलियुगं जलोपरि ॥२४॥

---

आगलमिति। गलिताः स्खलिताः कुन्तलाः केशा यस्याः सा, आगलं गलदेशपर्य्यन्तम्, मग्ना जले प्रविष्टा देहलतिका यस्याः सा, काञ्चनं स्वर्णं वर्णेनातिक्रान्तेति अतिकाञ्चना च, अबला काचिदङ्गना, वारिवेगेन विगलत् अङ्गात् प्रायेण स्खलत् अंशुकं परिहितं वस्त्रम्, कुतूहलात् किल, घूर्णनात् देहघूर्णनं कृत्वा, परिदधे।

अत्र स्वभावोक्तिरलङ्कारः, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥२३॥

বাঙ্গালা—স্বর্ণ অপেক্ষাও উত্তম গৌরবর্ণা কোন রমণী চুলগুলি খুলিয়া দিয়া এবং কণ্ঠদেশপর্য্যন্ত জলে মগ্ন করিয়া অবগাহন করিতেছিল, এমন সময়ে জলের বেগে তাহার পরিধানের বস্ত্রখানি প্রায় চলিয়া যাইতেছিল; তাই সে কৌতুকক্রমে দেহটীকে ঘুরাইয়া সেই বস্ত্র পরিধান করিল ॥২৩॥

अन्वयः—अथ उन्मुखी (काचित्) अम्बुनि नितम्बविम्बयोः भारं उपनयन्ती सन्तरन्ती (सती) जलोपरि फुल्लहेमकमलान्तिके सालि तत्कलियुगं असृजत् (इव) ॥२४॥

सन्तरन्तीति। अथ उन्मुखी उत्ताना काचिदङ्गना, अम्बुनि जले, नितम्बविम्बयोर्भारम्, उपनयन्ती स्थापयन्ती, परञ्च सन्तरन्ती सती, जलोपरि, फुल्लं प्रस्फुटितं यत् हेमकमलं स्वर्णपद्मतुल्यं निजमुखं तस्य अन्तिके, अलिभ्यां भ्रमराभ्यां भ्रमरतुल्यकृष्णवर्णस्तनमुखद्वयेनेत्यर्थः सहेति सालि, तस्य हेमकमलस्य कलियुगं कलिकाद्वयम्, असृजदिव;

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उरसि विवसनायाः पीनतुङ्गस्तनाभ्यां
समरमिव चिकीर्षुः पीनतुङ्गस्तरङ्गः ।
सरभसमुपहृत्य प्राप्तभङ्गो विलीनः
न खलु विजयतेऽस्मिन् भङ्गुरोच्चः स्थिरोच्चम् ॥२५॥

---

हेमकमलकलिकायुगलतुल्यस्तनयुगलमुदतोलयदित्यर्थः । जलान्तरेऽपि पद्मान्तिके तत्कलिकाद्वयमुत्तिष्ठति ।

अत्रापि "कथमुपरि कलापिनः कलापः" इत्यादिदर्पणोदाहरणवत् हेमकमलमुखमण्डलयोः स्वर्णकमलकलिकायुगलस्तनयुगलयोश्च भेदेऽप्यभेदाध्यवसायादतिशयोक्तिरलङ्कारः, प्रतीयमाना क्रियोत्प्रेक्षा, वृत्त्यनुप्रासच्छेकानुप्रासश्रुत्यनुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः ।

"द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः" इत्यमरः । "कलिः स्त्री कलिकायां ना शूराजिकलहे युगे" इति मेदिनी ॥२४॥

बाङ्गाला—কোন কামিনী চিৎ হইয়া নিতম্বযুগলের ভার জলে রাখিয়া, সন্তরণ করিতে থাকিয়া, প্রস্ফুটিত স্বর্ণপদ্মের নিকটে জলের উপরে ভ্রমরযুক্ত সেই স্বর্ণপদ্মেরই দুইটী কলিকা যেন সৃষ্টি করিল ॥২৪॥

अन्वयः—पीनतुङ्गः तरङ्गः उरसि विवसनायाः पीनतुङ्गस्तनाभ्यां (सह) समरं चिकीर्षुः इव (सन्) सरभसं उपहृत्य प्राप्तभङ्गः (अतएव) विलीनः (अभवत्) । अस्मिन् भङ्गुरोच्चः स्थिरोच्चं न खलु विजयते ॥२५॥

उरसीति । पीनतुङ्गः स्थूलोन्नतः, नद्यास्तरङ्गः, उरसि वक्षसि, विगतं वसनं यस्यास्तस्याः, वक्षसो गलितवसनायाः कस्याश्चिदङ्गनाया इत्यर्थः, पीनतुङ्गौ स्थूलोन्नतौ यौ स्तनौ ताभ्यां सह, समरं मल्लयुद्धम्, चिकीर्षुः कर्त्तुमिच्छुरिव सन्, सरभसं सवेगम्, उपहृत्य स्तनावेवाहृत्य, प्राप्तस्तत् स्तनविक्रमेणैव लब्धो भङ्गो द्वैधीभावः पराजयश्च येन स प्राप्त-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भङ्गो जातः ; अतएव विलीनो लयं प्राप्तः पलायनेन लुक्कायितश्चाभवत् ; तथा च अस्मिन् जगति, भङ्गुरोच्चः क्षणविनश्वरोन्नतिः पदार्थः, स्थिरोच्चं चिरन्तनोन्नतिं पदार्थम्, न खलु विजयते, अतएव क्षणविनश्वरोन्नति-स्तरङ्गः स्थिरोन्नती स्तनौ विजेतुं नाशक्नत्, प्रत्युत पराजित एवाभूदिति भावः।

अत्र कार्य्येण नदीतरङ्गकामिनीस्तनयुगलयोः मल्लयोधव्यवहार-समारोपात् समासोक्तिरलङ्कारः, वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, भग्नतापराजययोर्भेदेऽपि भङ्गपदश्लेषेणाभेदाध्यवसायादतिशयोक्तिः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासेन संसृज्यते। पीनतुङ्गपदस्य उच्चपदस्य च द्विरुक्तावपि न कथितपदतादोषः, उद्देश्यप्रतिनिर्द्देश्यविषयत्वात् "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इति दर्पणोदाहरणवत्।

"भाष्यं प्रसन्नगम्भीरम्" "प्रसन्नकर्कशा यत्र" इत्यादिवत् पीनतुङ्ग इति विशेषणयोरपि कर्म्मधारयसमासः। "भङ्गुरोच्चः स्थिरोच्च"मित्यु-भयत्रापि पूर्ववत् विशेषणयोरपि कर्म्मधारयसमास एव, तथा सत्यपि महासुन्दर इत्यादौ महत्वस्य सौन्दर्य्यविशेषणत्वमिव शब्दशक्तिवैचित्र्यात् भङ्गुरतायाः स्थिरतायाश्च उच्चत्वस्यैव विशेषणत्वम्।

इतःप्रभृत्यष्टसु श्लोकेषु मालिनी नाम वृत्तम्—"न-न-म-य-य-युतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥२५॥

বাঙ্গালা—কোন রমণী কণ্ঠপর্য্যন্ত জলে মগ্ন হইয়া বুকের কাপড় খুলিয়া স্নান করিতেছিল, তখন নদীর একটা স্থূল ও উচ্চ তরঙ্গ সেই রমণীর স্থূল ও উচ্চ স্তনযুগলের সহিত মল্লযুদ্ধ করিবার ইচ্ছা করিয়াই যেন বেগে আসিয়া তাহাতে আঘাত করিয়া ভগ্ন হইয়া লয় পাইয়া গেল।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

কুচযুগমতিদূরাদূর্ম্মিণাভ্যাগতেন
সকুতুকমিব চক্রে তুল্যমাস্ফালনানি ।
ন তু পুনরুভয়োর্বা তুল্যতাসীদ্যদাদ্যং
জিতসুরগিরিচূড়ং তজ্জলং কজ্জলাভম্ ॥২৬॥

কারণ, এই জগতে যাহার উন্নতি ক্ষণস্থায়ী, সে কখনও স্থিরোন্নতকে জয় করিতে পারে না ॥২৫॥

অন্বয়:—(অঙ্গনায়াঃ) কুচযুগং সকুতুকং ইব অতিদূরাৎ অভ্যাগতেন ঊর্ম্মিণা (সহ) আস্ফালনানি তুল্যং চক্রে । ন তু পুনঃ উভয়োঃ তুল্যতা বা আসীৎ ; যৎ আদ্যং জিত-সুর-গিরি-চূড়ং, তৎ জলং (তু) কজ্জলাভং (আসীৎ) ॥২৬॥

কুচেতি। কুচযুগং কস্যাশ্চিৎ উদ্দামযৌবনায়া অঙ্গনায়াঃ স্তন-যুগলং কর্তৃ, সকুতুকং সকৌতুকমিব, অতিদূরাৎ, অভ্যাগতেন অভি-মুখমাগতেন, ঊর্ম্মিণা তরঙ্গেন সহ, আস্ফালনানি তুল্যং চক্রে ; বন্ধাবাগতে বন্ধুরামোদমিবেতি ভাবঃ। ন তু পুনঃ, উভয়োঃ স্তন-তরঙ্গয়োস্তুল্যতা বা আসীৎ। যদ্যস্মাৎ, আদ্যং কুচযুগম্, জিতা বর্ণগৌরবেণাভিভূতা সুরগিরেঃ সুমেরুপর্বতস্য চূড়া শৃঙ্গং যেন তত্তাদৃশম্ ; তৎ তরঙ্গরূপং জলন্তু কজ্জলাভং গগনপ্রতিবিম্বপাতাদঞ্জনবন্নীলবর্ণম্, আসীৎ ; অতএবানয়োঃ স্তনতরঙ্গয়োঃ বর্ণবৈষম্যাৎ ন তুল্যত্বমিতি ভাবঃ।

অত্র প্রতীয়মানা গুণোৎপ্রেক্ষালঙ্কারঃ, উপমানভূততরঙ্গাপেক্ষয়া উপমেয়ভূতস্তনযুগস্যাধিক্যাদ্ব্যতিরেকঃ, আর্থোপমাদ্বয়ম্, ছেকানুপ্রাস-শ্চেত্যেতেষাং পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ ॥২৬॥

বাঙ্গালা—কোনও উদ্দামযৌবনা রমণীর স্তনযুগল অতিদূর হইতে

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

নিশি রমণবিমর্দ্দাদঞ্জনেনাননেন্দুং
বিহিতমলিনিমানং হস্যমানং সখীভিঃ।
মৃদু মৃদু বিহসন্তী পাণিনা হেমকান্তিঃ
সপদি বিপদুপেতা মজ্জনান্তর্মমার্জ ॥২৭॥

আগত একটী তরঙ্গের সহিত মিলিত হইয়া কৌতুক করিয়াই যেন সমান আস্ফালন করিতে লাগিল; কিন্তু বাস্তবিক পক্ষে সে উভয়ের তুল্যতা ছিল না। কারণ, স্তনযুগল ছিল—বর্ণগৌরবে সুমেরুচূড়াবিজয়ী, আর তরঙ্গরূপ জল ছিল—কজ্জলের ন্যায় নীলবর্ণ ॥২৬॥

অন্বয়ঃ—হেমকান্তিঃ বিপদুপেতা মৃদু মৃদু বিহসন্তী (চ সতী) পাণিনা নিশি রমণবিমর্দ্দাৎ অঞ্জনেন বিহিতমলিনিমানং সখীভিঃ হস্যমানং (চ) আননেন্দুং মজ্জনান্তঃ সপদি মমার্জ ॥২৭॥

নিশীতি। হেম্নঃ স্বর্ণস্য কান্তিরিব কান্তির্বর্ণো যস্যাঃ সা তাদৃশী কাচিদঙ্গনা, বিপদুপেতা সখীনাং দর্শনাৎ লজ্জাকুলত্বং প্রাপ্তা, অথ চ কৌতুকাৎ মৃদু মৃদু বিহসন্তী সতী, পাণিনা, নিশি পূর্ব্বস্যাং রাত্রৌ, রমণবিমর্দ্দাৎ সুরতসঙ্ঘর্ষাৎ, অঞ্জনেন নয়নকজ্জলপ্রসরণেন, বিহিতঃ কৃতঃ মলিনিমা মালিন্যং যস্য তম্, সখীভিস্তদ্রূপতয়া হস্যমানঞ্চ, আননেন্দুং মুখচন্দ্রম্, মজ্জনান্তঃ স্বশিরোমগ্নতাবসরে, সপদি শীঘ্রম্, মমার্জ ঘর্ষণেন প্রক্ষালয়ামাস।

অত্র শৃঙ্গাররসস্য লজ্জাদিভাবাপেক্ষয়া গুণীভূতত্বাদ্রসবদলঙ্কারঃ স চ্ছেকানুপ্রাসেন সংসৃজ্যতে ॥২৭॥

বাঙ্গালা—পূর্ব্বরাত্রিতে রমণসংঘর্ষবশতঃ নয়নের কজ্জল বিসৃত হইয়া স্বর্ণবর্ণা কোন রমণী চন্দ্রতুল্য মুখখানিকে মলিন করিয়া ফেলিয়া-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पयसि सकुचमग्ना काप्यनुद्विग्ननग्ना
कटितटपरिमुक्तं क्षालयन्ती दुकूलम् ।
गतवति बहुनीचं वातनुन्ने प्रवाहे
प्रविवृतनिखिलाङ्गी लज्जया द्राङ् ममज्ज ॥२८॥

---

ছিল, তৎকালে সখীরা আবার তাহা দেখিতেছিল; সুতরাং সেই রমণী লজ্জায় আকুল হইয়া অথ চ মৃদু মৃদু হাস্য করিতে থাকিয়া ডুব দিয়া হস্তদ্বারা সেই মুখখানি মার্জিতে লাগিল ॥২৭॥

अन्वयः—पयसि सकुचमग्ना (अतएव) अनुद्विग्ननग्ना का अपि कटितटपरिमुक्तं दुकूलं क्षालयन्ती वातनुन्ने प्रवाहे बहुनीचं गतवति (सति) प्रविवृतनिखिलाङ्गी (सती) लज्जया द्राक् ममज्ज ॥२८॥

पयसीति। पयसि जले, कुचाभ्यां स्तनाभ्यां सहेति सकुचं यथा स्यात्तथा, मग्ना स्तनपर्य्यन्तं मग्नेत्यर्थः, अतएव अनुद्विग्नेन लज्जोद्वेगाभावेन नग्ना विवस्त्रा, कापि रमणी, कटितटात् परिमुक्तं प्रच्यावितम्, दुकूलं वस्त्रम्, क्षालयन्ती सती, वातनुन्ने वायुचालिते, जलस्य प्रवाहे, बहुनीचमत्यन्ताधोदेशम्, गतवति सति, प्रविवृतानि वसनाभावात् प्रकाशितानि निखिलान्यङ्गानि यस्याः सा तादृशी सती, लज्जया, द्राग् झटिति, ममज्ज जानुयुगलकौटिल्यकरणेन जले मग्ना बभूव।

अत्र स्वभावोक्तिरलङ्कारो वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते।

सकुचमग्नेति "स्तोकनम्रा स्तनाभ्याम्" इत्यादिवत् द्वितीयातत्पुरुषसमास एव। उद्विग्नेति भावे क्तप्रत्ययान्तं पदम् ॥२८॥

বাঙ্গালা—কোন তরুণী দেহটীকে কণ্ঠপর্য্যন্ত জলে মগ্ন করিয়া নিরুদ্বেগে নগ্ন হইয়া কটিদেশ হইতে স্খলিত বস্ত্রখানি প্রক্ষালন করিতে

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तरलशिशुनिकायः पूर्वकायं निमज्य
जलमविरतधारं पञ्चषान् संसिषेच ।
कथमपि लघुरेकस्तत्र तीरं ततार
करपिहितदृशोऽन्ये न्यश्वसन् सिक्तशीर्षाः ॥२९॥

---

ছিল ; এমন সময়ে জলের প্রবাহ বায়ু চালিত হইয়া অত্যন্ত নীচে চলিয়া গেল, তখন তাহার সমস্ত অঙ্গ বাহির হইয়া পড়িল ; সুতরাং তৎক্ষণাৎ সে লজ্জায় মগ্ন হইল ॥২৮॥

अन्वयः—तरलशिशुनिकायः पूर्वकायं निमज्य पञ्चषान् (प्रति) जलं अविरत-धारं संसिषेच, तत्र एकः लघुः ( सन् ) कथं अपि तीरं ततार, अन्ये करपिहितदृशः सिक्तशीर्षाः च (सन्तः) न्यश्वसन् ॥२९॥

तरलेति । तरलश्चञ्चलस्वभावश्चासौ शिशुनिकायो बालकसमूहश्चेति सः, पूर्वकायं देहोपरिभागपर्य्यन्तम्, निमज्य जले मज्जयित्वा, पञ्च वा षड्‌ वा परिमाणमेषामिति पञ्चषाः शिशवस्तान् प्रति, जलम्, अविरता अविच्छिन्ना धारा यस्मिन् कर्म्मणि तद्‌यथा तथा, संसिषेच, तरलतया ताच्छील्यादेवेति भावः । तत्र तेषु सिच्यमानेषु शिशुषु मध्ये, एकः शिशुः, लघुः सत्वरः सन्, कथमपि कष्टेन, तीरं नद्यास्तटम्, ततार उत्प्लुत्य जगाम ; अन्ये सिच्यमानाः शिशवस्तु, करैर्हस्तैः पिहिता आवृता दृशो नयनानि यैस्ते, सिक्तानि जलाप्लुतानि शीर्षाणि शिरांसि येषां ते तादृशाश्च सन्तः, न्यश्वसन् निश्वासान् अमुञ्चन् ।

अत्र स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते ।

पञ्चषानिति "संख्याया अवद्दोरन्त्यस्वरादिलोपश्च" इति अतृप्रत्ययः, षष्‌शब्दस्यान्त्यस्वरादिलोपश्च ॥२९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

বিদধদপি জপং যত্তত্র কশ্চিদ্বিপশ্চিত্
যুবতিজনমপশ্যন্নাল্পশঃ সোঽস্য দোষঃ ।
হরতি হি নবনারী কৌমুদী পদ্মিনী চ
নয়নমবহিতানামপ্যকস্মাৎ স্বভাবাৎ ॥৩০॥

বাঙ্গালা—চঞ্চলমতি বালকগণ কণ্ঠপর্য্যন্ত জলে মগ্ন করিয়া অপর পাঁচ ছয়টী বালকের দিকে অবিচ্ছিন্নধারায় জল সেচন করিতেছিল ; তখন তাহাদের মধ্যে একটী বালক কোন প্রকারে সত্বর যাইয়া তীরে উঠিল এবং অপর বালকগুলি হাত দিয়া চোখ চাপিয়া ধরিয়া জলাপ্লুত মস্তক হইয়া হাঁপাইতে লাগিল ॥২৯॥

অন্বয়ঃ—তত্র কশ্চিৎ বিপশ্চিৎ জপং বিদধৎ (সন্) অপি যৎ যুবতিজনং অপশ্যৎ সঃ অস্য অল্পশঃ (অপি) দোষঃ ন। হি নবনারী কৌমুদী পদ্মিনী চ স্বভাবাৎ (এব) অকস্মাৎ অবহিতানাং অপি নয়নং হরতি ॥৩০॥

বিদধদিতি। তত্র তদানীম্, কশ্চিৎ, বিশেষেণ সর্ব্ববিষয়াৎ চিণোতি জ্ঞানং সংগৃহ্ণাতীতি বিপশ্চিৎ বিদ্বান্ জনঃ, জপং বিদধৎ কুর্ব্বন্ সন্নপি, যৎ, যুবতিজনমপশ্যৎ ; সঃ, অস্য বিপশ্চিতঃ, অল্পশঃ স্তোকোঽপি, ন দোষঃ। হি তথাহি, নবনারী, কৌমুদী জ্যোৎস্না পদ্মিনী চ, স্বভাবাদেব, অকস্মাৎ অতর্কিতভাবাৎ, অবহিতানাং বিষয়ান্তরনিবিষ্টচিত্তানাং জনানামপি, নয়নং হরতি। নবনার্য্যস্তু তদানীং স্বভাবাদেব তস্য নয়নং হরন্তি স্ম, ন পুনঃ সকামমস্য দর্শনমিতি ন দোষ ইতি ভাবঃ।

অত্র পূর্ব্বার্দ্ধবাক্যার্থং প্রতি পরার্দ্ধবাক্যার্থস্য হেতুত্বাদ্বাক্যার্থহেতুকং কাব্যলিঙ্গমলঙ্কারঃ, তথা নবনারী প্রস্তুতা কৌমুদীপদ্মিন্যৌ চাপ্রস্তুতে

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अदिशदुदितवृद्धा काशनीकाशकेशा
निजयुवतिचरित्रं विस्मरन्ती विचित्रम् ।
चल चपलमगारं किन्नु जल्पैरनल्पैः
व्रणु च चलनिचोलं पूरुषाः सञ्चरन्ति ॥२१॥

तासाञ्च हरतीत्येकया क्रिययाभिसम्बन्धाद्दीपकस्थानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि पुनश्छेकानुप्रासेन संसृज्यते ॥३०॥

বাঙ্গালা—তৎকালে কোন বিদ্বান্ লোক জপ করিতে থাকিয়াও যে যুবতিগণের প্রতি দৃষ্টিপাত করিতেছিলেন, তাহা তাঁহার অল্পদোষও নহে। কারণ, নবীন রমণী, জ্যোৎস্না এবং পদ্মিনী—এইগুলি স্বভাবতই অতর্কিতভাবে বিষয়ান্তরাভিনিবিষ্ট লোকদিগেরও দৃষ্টি হরণ করিয়া থাকে ॥৩০॥

अन्वयः—काशनीकाशकेशा उदितवृद्धा विचित्रं निजयुवतिचरित्रं विस्मरन्ती (सती इव) अदिशत् । अनल्पैः जल्पैः किं नु चपलं, अगारं चल, चलनिचोलं च व्रणु, पूरुषाः सञ्चरन्ति ॥२१॥

अदिशदिति । काशैः काशकुसुमैः नीकाशास्तुल्याः पक्वतया सर्वथा शुभ्रवर्णाः केशाः यस्याः सा, उदिता तदानीमुपस्थिता चासौ वृद्धा चेति सा, विचित्रम्, निजं स्वकीयं यत् युवतिचरित्रं तरुणीसमयस्वभावः तत्, विस्मरन्ती सतीव, एतेनास्या अपि यौवने ईदृशमेव चरित्रमासीदिति सूचितम् ; अदिशत् तत्रत्यां काञ्चित् युवतिम् आदिष्टवती । किमादिशदित्याह चलेति । अनल्पैर्बहुभिः, जल्पैरनावश्यकवाक्यैः, किं नु फलं भवेत्, अपि तु किमपि नेत्यर्थः । चपलं शीघ्रम्, अगारं गृहम्, चल आगच्छ ; चलनिचोलञ्च वायुना चञ्चलीभूतं वस्त्रञ्च, व्रणु यथास्थानमारोपय । कुत एतदित्याह पूरुषा इति । पूरुषाः पुरुषाः,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति विगुणवचोभिर्यौवतं तद्विरक्तं
सजलकलसकक्षं सुष्ठु जोषं जगाम ।
निरगमदथ तासामार्द्रचेलान्तरालात्
विरलजलदलेपाच्छीतरश्मेरिव श्रीः ॥३२॥

सञ्चरन्ति तीरपथेन व्रजन्ति । अन्यथा ते तवैतामवस्थामवलोक्य तां निर्लज्जामेव मन्येरन्निति भावः ।

अत्र चलनिचोलसंवरणं प्रति पुरुषाः सञ्चरन्तीति वाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, काशनीकाशकेशीति लुप्तोपमा, विस्मरन्तीवेति प्रतीयमाना क्रियोत्प्रेक्षा वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः ।

"पूरुषाः पुरुषाः नरः" इत्यमरः ॥३१॥

বাঙ্গালা—এই সময় কাশপুষ্পের ন্যায় অত্যন্তশুভ্রবর্ণ কেশযুক্ত কোন বৃদ্ধ স্ত্রীলোক আসিয়া নিজের বিচিত্র যৌবনকালচরিত্র বিস্মৃত হইয়াই যেন কোনও যুবতিকে আদেশ করিল—'অনাবশ্যক কতকগুলি কথা বলিবার প্রয়োজন কি ? সত্বর বাড়ী চল এবং চঞ্চল বস্ত্র সংবরণ কর, পুরুষেরা বিচরণ করিতেছে' ॥৩১॥

अन्वयः—तत् यौवतं इति विगुणवचोभिः विरक्तं (सत्) सजलकलसकक्षं जोषं सुष्ठु (च) जगाम । अथ शीतरश्मेः श्रीः विरलजलदलेपात् इव तासां श्रीः आर्द्रचेलान्तरालात् निरगमत् ॥३२॥

इतीति । तत्, युवतीनां वृन्दमिति यौवतम्, इति इत्थम्, विगुण-वचोभिर्वृद्धायाः प्रतिकूलवाक्यैः, विरक्तं सत्, सजला जलपूर्णाः कलसाः कक्षेषु यस्मिन् कर्म्मणि तद्यथा तथा, जोषं नीरवम्, सुष्ठु सुन्दरञ्च, गृहं प्रति जगाम । अथ शीतरश्मेश्चन्द्रस्य, श्रीः कान्तिः, विरलै रल्पैः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हीनजातिवनिताकुलं क्वचित्
रैत्यभूषणविभूषिताङ्गकम्।
तारकाभिरुपशोभिताम्बर-
श्रीयुतं पुलिनसैकतेऽद्युतत्॥३३॥

जलदैर्मेघैर्यो लेप आवरणं तस्मादिव, तासां युवतीनाम्, श्रीः कान्तिः, आर्द्राणां चेलानां वस्त्राणामन्तरालात्, निरगमत् निर्गताभूत्।

अत्र श्रौतोपमालङ्कारः।

"यौवतं गणे" इत्यमरः॥३२॥

বাঙ্গালা—সেই যুবতিগণ বৃদ্ধার এইরূপ প্রতিকূল বাক্যে বিরক্ত হইয়া জলপূর্ণ কুম্ভ সকল কক্ষে লইয়া নীরব ও সুন্দরভাবে গৃহের দিকে গমন করিতে লাগিল। তাহার পর অল্প অল্প মেঘের আবরণ হইতে চন্দ্রের জ্যোৎস্নার ন্যায় আর্দ্র বস্ত্রের ভিতর হইতে তাহাদের দেহকান্তি নির্গত হইতে থাকিল॥৩২॥

अन्वयः—क्वचित् रैत्य-भूषण-विभूषिताङ्गकं (अतएव) तारकाभिः उपशोभिताम्बरश्रीयुतं हीनजातिवनिताकुलं पुलिनसैकते अद्युतत्॥३३॥

रैत्येति। क्वचित् नद्याः कुत्रचित् प्रदेशे, रैत्यभूषणैः पित्तलमयालङ्कारैर्विभूषितानि अङ्गानि यस्य तत्, अतएव तारकाभिर्नक्षत्रैरुपशोभितं यदम्बरं गगनं तस्य श्रीरिव श्रीर्गौरकृष्णकान्तिस्तया युतम्, हीनजातिवनिताकुलं चण्डालादिस्त्रीसमूहः, पुलिनसैकते तोयोत्थितवालुकामयस्थाने, अद्युतत् प्रकाशते स्म।

अत्र समासगतोपमालङ्कारः।

"रीतिः स्त्रियामारकूटो न स्त्रियाम्" इत्यमरः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

বাদবীজমপি বীজবর্জ্জিতং
রোপয়ন্ত্যপসদাঙ্গনা ক্বচিৎ ।
ধুন্বতী ক্বণিতকঙ্কণং করং
সন্ততর্জ্জ পরুষাক্ষরাপরাম্ ॥৩৪॥

---

রীতিঃ কর্ম্মণীমানীবেতি "যণ্ চ প্রকীর্ত্তিতঃ" ইতি প্রকীর্ত্তিত-গ্রহণাৎ কর্ম্মার্থে ইদমর্থে বা যণ্ ॥৩৩॥

বাঙ্গালা—পিত্তলময় অলঙ্কারে অলঙ্কৃত ; সুতরাং নক্ষত্রশোভিত আকাশের ন্যায় ঘোর কৃষ্ণবর্ণ নিম্নজাতীয় স্ত্রীগণ নদীর বালুকাময় পুলিনে প্রকাশ পাইতেছিল ॥৩৩॥

অন্বয়ঃ—ক্বচিৎ অপসদাঙ্গনা বীজবর্জ্জিতং অপি বাদবীজং রোপয়ন্তী ক্বণিত-কঙ্কণং করং ধুন্বতী পরুষাক্ষরা (চ সতী) অপরাং সন্ততর্জ্জ ॥৩৪॥

বাদেতি। ক্বচিৎ, অপসদাঙ্গনা কাচিৎ হীনজাতিস্ত্রী, বীজ-বর্জ্জিতং কারণহীনমপি, বাদবীজং বিবাদমূলম্, রোপয়ন্তী প্রবর্ত্তয়ন্তী, ক্বণিতানি শব্দায়মানানি কঙ্কণানি হস্তভূষণবিশেষা যত্র তং তাদৃশম্, করং হস্তম্, ধুন্বতী সঞ্চালয়ন্তী, পরুষাণি নিষ্ঠুরাণি অক্ষরাণি বাক্যবর্ণা যস্যাঃ সা তাদৃশী চ সতী, অপরামপসদাঙ্গনাম্, সন্ততর্জ্জ ভর্ৎসয়ামাস।

অত্র স্বভাবোক্তিরলঙ্কারশ্ছেকানুপ্রাসেন সংসৃজ্যতে ॥৩৪॥

বাঙ্গালা—কোন স্থানে কোন নীচজাতীয় স্ত্রী বিনা কারণে বিবাদের বীজ রোপণ করিয়া শব্দায়মান কঙ্কণযুক্ত হস্ত কম্পিত করিতে থাকিয়া নিষ্ঠুর বাক্যে অপর কোন নীচজাতীয় স্ত্রীলোককে ভর্ৎসনা করিতেছিল ॥৩৪॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दुःसहश्रमविषण्णविग्रहान्
मुक्तिमात्रपतितान् सरिज्जले।
मीलिताक्षमचलानसिस्नपन्
पुङ्गवान् कृषकपुङ्गवाः क्वचित् ॥३५॥
स्नानलब्धगुरुशान्तिनामुना
मुञ्चताप्यचिरजां कृतज्ञताम्।
कोटिना तटमुखानि शृङ्गयोः
नाम्नि तिष्ठति पयोऽहि भद्रता ॥३६॥

---

अन्वयः—क्वचित् कृषकपुङ्गवाः दुःसह-श्रम-विषण्ण-विग्रहान् सरिज्जले मुक्तिमात्र-पतितान् अचलान् पुङ्गवान् मीलिताक्षं असिस्नपन् ॥३५॥

दुःसहेति। क्वचित्, कृषकपुङ्गवाः कृषीवलश्रेष्ठाः, हलशकट-वहनादिना दुःसहेन श्रमेण विषण्णाः अवसन्नाः विग्रहाः शरीराणि येषां तान्, सरितो नद्या जले, मुक्तिमात्रं हलान्मोचनक्षण एव पतितान् मग्नान्, अचलान् स्पन्दनरहितान्, पुमांसश्च ते गावश्चेति पुङ्गवास्तान् वृषान्, मीलितानि तैः पुङ्गवैरेव मुद्रितानि अक्षीणि चक्षूंषि यस्मिन् कर्म्मणि तद्‌यथा तथा, असिस्नपन् स्नपितवन्तः।

अत्र स्वभावोक्तिरलङ्कारः, छेकानुप्रासस्तानयोः संसृष्टिः ॥३५॥

বাঙ্গালা—বহু সময় হল ও শকটপ্রভৃতি বহন করায় বৃষগুলির শরীর অবসন্ন হইয়া পড়িয়াছিল; সুতরাং কৃষকেরা নদীর কোন স্থানে যেই তাহাদিগকে ছাড়িয়া দিল, অমনি সেগুলি যাইয়া নদীর জলে পড়িল, পরে স্থির হইয়া দাঁড়াইল এবং চোখ বুজিয়া থাকিল; তখন কৃষকেরা সেগুলিকে স্নান করাইতে লাগিল ॥৩৫॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ऊर्द्धदण्डधृतवातवाससि
सन्ततेऽनुगुणमातरिश्वना ।
केनिपातमवलम्ब्य सुस्थितः
नाविको मुदितचक्षुरुज्जगौ ॥३७॥

अन्वयः—स्नानलब्धगुरुशान्तिना अमुना अचिरजां अपि कृतज्ञतां मुञ्चता (सता) शृङ्गयोः कोटिना तटं अखानि । पशोः भद्रता नाम्नि हि तिष्ठति ॥३६॥

स्नानेति । स्नानेन लब्धा गुर्व्वी महती शान्तिर्येन तेन तथोक्तेन, अमुना पुङ्गवेन, अचिरजाम् अनधिकपूर्व्वजातामपि, कृतज्ञतां स्नानलब्ध-शान्तिरूपकृतोपकारस्मरणम्, मुञ्चता त्यजता सता, पुनरपि स्नपना-वश्यकतया कृषकपरिश्रमावश्यम्भावादिति भावः । शृङ्गयोः कोटिना अग्रभागेण, तटं नदीतीरम्, अखानि विदारितम् । अतएव पशोः पशुजातीयस्य तस्य पुङ्गवस्य, भद्रता भद्र इत्यानुपूर्व्वीमत्त्वम्, नाम्नि हि संज्ञायामेव, तिष्ठति ; कार्य्ये तु भद्रता साधुता नेत्यर्थः । स्नाना-नन्तरमेव तटखननरूपाभद्रकार्य्यकरणात् । "उक्षा भद्रो बलीवर्द्द ऋषभो वृषभो वृषः" इत्यमरोक्तेश्चेति भावः ।

अत्र कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, नाम्नि हि भद्रता तिष्ठति, अन्यत्र तु नेत्यन्यव्यपोहनादार्थी परिसंख्या चानयो-रेकाश्रयानुप्रवेशरूपः सङ्करः ॥३६॥

বাঙ্গালা—কোন বৃষ স্নান করায় গুরুতর শান্তি লাভ করিয়া অচিরজাত কৃতজ্ঞতা পরিত্যাগপূর্ব্বক শৃঙ্গাগ্রদ্বারা নদীর তীর খনন করিতে লাগিল। কারণ, সে পশুর ভদ্রতা কেবল নামেই থাকে ॥৩৬॥

अन्वयः—ऊर्द्धदण्डधृतवातवाससि अनुगुणमातरिश्वना सन्तते ( सति ) नाविकः केनिपातमवलम्ब्य सुस्थितः मुदितचक्षुः ( च सन् ) उज्जगौ ॥३७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रातिकूल्यमुदके प्रधावति
कर्णधारनिकरो गुरुश्रमात्।
निक्षिपन् मुहुररित्रसन्ततिं
निश्वसंस्तरिमतीतरच्छ्लनैः ॥३८॥

ऊर्ध्वेति। ऊर्ध्वदण्डेन उच्चस्तम्भेन धृतं यत् वातवासो वायुवस्त्रं तस्मिन्, अनुगुणमातरिश्वना अनुकूलवायुना, सन्तते प्रसारिते सति, तथाभूतेन वायुनैव नौकायां चालितायां सत्यामित्यर्थः। नाविकः कर्णधारः, कैनिपातं जलप्रवेशितपृष्ठवर्त्तिप्रच्छदरित्रं तदुपरितनदण्डमिति तात्पर्य्यम्, अवलम्ब्य वामबाहुना कक्षमूले धृत्वा, सुस्थितः अचलभावेनावस्थितः, मुदितचक्षुर्निमीलितनयनश्च सन्, उज्जगौ उच्चस्वरेण गानं चकार।

अत्र स्वभावोक्तिरलङ्कारः।

"श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः" इति "अरित्रं कैनिपातकं" इति चामरः ॥३७॥

বাঙ্গালা—অনুকূল বাতাস আসিয়া মাস্তলের পালের কাপড় ছড়াইয়া দিয়া নৌকা চালাইতে লাগিলে, নৌকার মাঝি হালের গুটী ধরিয়া স্থিরভাবে থাকিয়া চোখ বুজিয়া উচ্চৈস্বরে গান করিতেছিল ॥৩৭॥

अन्वयः—उदके प्रातिकूल्यं प्रधावति (सति) कर्णधारनिकरः गुरुश्रमात् अरित्रसन्ततिं मुहुः निक्षिपन् निश्वसन् (च सन्) छलैः तरिं अतीतरत् ॥३८॥

प्रातिकूल्यमिति। उदके नदीजले, प्रातिकूल्यमाश्रित्य प्रतिकूलभावेनेत्यर्थः, प्रधावति वेगेन चलति सति, कर्णधारनिकरो नाविकसमूहः, गुरुश्रमादतीवायासात्, अरित्रसन्ततिं कैनिपातश्रेणिम्, मुहुर्वारं



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

তিষ্ঠ মামপি নয়েতিভাষিণঃ
বিপ্রকৃষ্টপথিকস্য ধাবতঃ ।
কোঽপি পারতরণিং প্রবাহয়ন্
অন্যতীরতরণায় তত্বরে ॥৩৯॥

---

বাহম্, জলে নিক্ষিপন্, যুবশ্রমাদেব নিশ্বসংশ্চ সন্, শনৈর্মন্দং মন্দম্, তরিং বিশালাং নৌকাম্, অতীতরত্ তারিতবান্ ।

অত্রাপি স্বভাবোক্তিচ্ছেকানুপ্রাসয়োঃ সংসৃষ্টিঃ ॥৩৮॥

বাঙ্গালা—নদীর জল প্রতিকূলভাবে বেগে চলিতে লাগিলে, নাবিকেরা অত্যন্ত পরিশ্রমসহকারে অরিত্র সকল ( দাঁড়গুলি ) মুহুর্মুহু জলে নিক্ষেপ করিতে থাকিয়া, অনবরত নিশ্বাস ত্যাগ করতঃ ধীরে ধীরে বৃহৎ নৌকা চালাইতেছিল ॥৩৮॥

অন্বয়ঃ—তিষ্ঠ মাং অপি নয় ইতি ভাষিণঃ ধাবতঃ বিপ্রকৃষ্টপথিকস্য কঃ অপি পারতরণিং প্রবাহয়ন্ অন্যতীরতরণায় তত্বরে ॥৩৯॥

তিষ্ঠেতি । হে নাবিক ! তিষ্ঠ, মামপি স্বনৌকাং নয় ইতি ভাষিণঃ, ধাবতঃ বেগেনাগচ্ছতঃ, বিপ্রকৃষ্টো দূরবর্ত্তী চাসৌ পথিকশ্চেতি তস্য তমনাদৃত্যেত্যর্থঃ । অনাদরে ষষ্ঠী । কোঽপি নাবিকঃ, পারতরণিম্ উভয়তীরগমনাগমননৌকাম্, প্রবাহয়ন্ চালয়ন্, অন্যতীরে তরণায় গমনায়, তত্বরে ত্বরাং কৃতবান্ ।

অত্র স্বভাবোক্তিবৃত্ত্যনুপ্রাসয়োঃ সংসৃষ্টিরলঙ্কারঃ ।

তত্বর ইতি "ত্বর সম্ভ্রমে" ইতি ত্বরধাতোঃ পরোক্ষায়াং প্রয়োগঃ ॥৩৯॥

বাঙ্গালা—'নাবিক ! দাঁড়াও, আমাকেও লও' এই কথা বলিয়া কোন দূরবর্ত্তী পথিক ছুটিয়া আসিতে লাগিলে, কোন নাবিক তাহাকে

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्राम्यताभिमतदेशकाम्यता
तापितेन तरणेर्महातपैः।
केनचित्तटतरोस्तले चणं
बध्नता स्वतरणिं विशश्रमे ॥४०॥

प्रतिकूलगामिनि सवेगवारिणि
गुरुणा गुणेन तरणिं प्रतीरगाः।
परिकृष्य पञ्चषजनाः परिश्रमात्
गुणकर्त्तनेन सहसाऽपतन् भुवि ॥४१॥

অগ্রাহ্য করিয়া পরের নৌকা বাহিতে থাকিয়া, অন্য তীরে যাইবার জন্য ত্বরা করিতেছিল ॥৩৯॥

अन्वयः—अभिमतदेशकाम्यता तरणेः महातपैः तापितेन श्राम्यता (च) केनचित् तटतरोः तले चणं स्वतरणिं बध्नता (सता) विशश्रमे ॥४०॥

श्राम्यतेति। अभिमतं देशं गन्तुमिच्छतीति अभिमतदेशकाम्यता, तरणेर्मध्याह्नसूर्य्यस्य, महातपैस्तीव्रद्योतैः, तापितेन, श्राम्यता दीर्घकालतरीवाहनात् परिश्रमं प्राप्नुवता च, केनचिन्नाविकेन, तटतरोस्तीरस्थवृक्षस्य, तले अधोदेशे, चणं कियन्तं कालम्, स्वतरणिं निजक्षुद्रनौकाम्, बध्नता सता, विशश्रमे विश्रान्तं विश्रामं क्रियते स्मेत्यर्थः।

अत्र छेकानुप्रासोऽलङ्कारः।

अभिमतं देशमिच्छतीति वाक्ये "काम्य च" इति काम्यप्रत्ययः। विशश्रम इति श्रमधातोर्भावे परोक्षा ॥४०॥

বাঙ্গালা—অভিমতদেশগামী, পরিশ্রান্ত এবং মধ্যাহ্নসূর্য্যের গুরুতর তাপে সন্তপ্ত কোন নাবিক তীরস্থ কোন বৃক্ষের তলে নিজের নৌকা বন্ধন করিয়া কিছুকাল বিশ্রাম করিতেছিল ॥৪০॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बहुकष्टपच्यफललाभलोभिनः
चिरकर्षणोपचितघर्म्मविन्दवः ।
रवितापतप्ततनवः कृषीबलाः
अतिशीतले तरुतले विशश्रमुः ॥४२॥

अन्वयः—प्रतीरगाः पञ्चषजनाः परिश्रमात् गुरुणा गुणेन प्रतिकूलगामिनि सवेगवारिणि तरणिं परिकृष्य सहसा गुणकर्त्तनेन भुवि अपतन् ॥४१॥

प्रतिकूलेति। प्रतीरगा नद्यास्तीरगताः, पञ्च वा षड़ वा परिमाण-मेषामिति पञ्चषास्ते जनाश्चेति ते पञ्चषजनाः, परिश्रमात्, गुरुणा महता, गुणेन रज्ज्वा प्रतिकूलगामिनि, वेगेन सहेति सवेगं यद्वारि नद्या जलं तस्मिन्, तरणिं विशालां नौकाम्, परिकृष्य आकृष्याकृष्य, सहसा, गुणस्य तस्याकर्षणरज्ज्वोः कर्त्तनेन छेदनेन, भुवि अपतन्; वेगसंवरणस्याशक्यत्वादित्याशयः।

अत्रापि स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते।

"कूलं रोधश्च तीरञ्च प्रतीरञ्च तटं त्रिषु" इत्यमरः।

अत्रापि पञ्चषेति "संख्यया—" इत्यादिना अत् अन्त्यस्वरादिलोपश्च।

इतःप्रभृत्यष्टसु श्लोकेषु मञ्जुभाषिणी नाम वृत्तम्—"स-ज-सा जगौ च यदि मञ्जुभाषिणी" इति लक्षणात् ॥४१॥

বাঙ্গালা—তীরবর্ত্তী পাঁচ ছয় জন লোক মহাকষ্টে বিশাল গুণ টানিয়া বেগবান্ উজান জলে নৌকা লইয়া যাইতেছিল, হঠাৎ গুণ ছিঁড়িয়া যাওয়ায় তাহারা ভূতলে পড়িয়া গেল ॥৪১॥

अन्वयः—बहुकष्टपच्यफललाभलोभिनः कृषीबलाः चिरकर्षणोपचितघर्म्मविन्दवः रवितापतप्ततनवः (च सन्तः) अतिशीतले तरुतले विशश्रमुः ॥४२॥

बह्विति। बहूनि कष्टे हलादिना कृतकर्षणे भूमिभागे पच्यन्ते

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महतातपेन तपनस्य तापितः
रसनां वितत्य विपुलं शुनां गणः।
चलिताङ्गसंहति विवर्द्धितानन:
विकचेक्षणोऽर्द्धशयितः समश्वसीत् ॥४३॥

इति कृष्टपच्यानि यानि फलानि धान्यादीनि शस्यानि तेषां लाभे लोभिनो लोभवन्तः, कृषीवलाः कृषकाः, चिरं यद्भूमेः कर्षणं तत् परिश्रम इत्यर्थः तेन उपचिता बाहुल्येनाविर्भूता घर्म्मबिन्दवो येषां ते तथोक्ताः, तथा रवितापेन तप्ता तनवो देहा येषां ते तादृशाश्च सन्तः, अतिशीतली तरुतले, विशश्रमुर्विंश्रामं चक्रुः।

अत्रापि स्वभावोक्तिरलङ्कारो वृत्त्यनुप्रासश्चानयोः संसृष्टिः।
"शस्ये हेतुकृते फलम्" इति "कृषकश्च कृषीवलः" इति चामरः।
कृष्टपच्येति "कृष्टपच्यकुप्ये संज्ञायाम्" इति निपातः ॥४२॥

বাঙ্গালা—কর্ষণ করা ভূমিতে প্রচুর শস্য জন্মিয়া থাকিবে এবং তাহা পাইবে এই লোভে লোভবান্ হইয়া কতকগুলি কৃষক দীর্ঘকাল ভূমি কর্ষণ করিয়াছিল, তাহাতে তাহাদের দেহে অধিক পরিমাণে ঘর্ম্মবিন্দু আবির্ভূত হইয়াছিল এবং সূর্য্যের তাপে তাহাদের শরীর অত্যন্ত সন্তাপ অনুভব করিতেছিল; সুতরাং তাহারা অতিশীতল কোন বৃক্ষতলে বিশ্রাম করিতেছিল ॥৪২॥

अन्वयः—शुनां गणः महता तपनस्य आतपेन तापितः अर्द्धशयितः विवर्द्धितानन: विकचेक्षणः (च सन्) चलिताङ्गसंहति रसनां वितत्य समश्वसीत् ॥४३॥

महतेति। शुनां कुक्कुराणां गणः, महता अधिकेन, तपनस्य सूर्य्यस्य, आतपेन द्योतेन तापितः, अर्द्धशयितः जानुचतुष्टयपातनेन भूमौ स्थित इत्यर्थः, विवर्द्धितं व्यादत्तम् आननं मुखं येन सः, विकचे

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

घनकाननान्तरगतो गवां गणः
प्रथमप्रभुक्तयवसान् समुद्गिरन् ।
परिचालयन् हनुमनुक्षणं शनैः
अभिचर्व्य सर्वमुदरे न्यवीविशत् ॥४४॥

---

उन्मीलिततया प्रकाशिते ईक्षणे चक्षुषी यस्य स तादृशश्च सन्, चलिता निश्वासेनैव कम्पिता अङ्गानां संहतिः समूहो यस्मिन् कर्म्मणि तद्यथा तथा, रसनां जिह्वाम्, विपुलमधिकम्, वितत्य विस्तार्य्य, समश्वसीत् छायायां स्थित्वा निरन्तरं श्वासमाविष्कृतवान् ।

अत्रापि स्वभावोक्तिरलङ्कारो वृत्त्यनुप्रासेन संसृज्यते ॥४३॥

বাঙ্গালা—কুকুরগুলি সূর্য্যের গুরুতর তাপে তাপিত হইয়া কোন ছায়ায় অর্দ্ধশয়িত থাকিয়া, মুখ বিকৃত করিয়া, চোখ মেলিয়া, জিহ্বাটাকে অধিক বাড়াইয়া এবং সমস্ত অঙ্গ কাঁপাইয়া শ্বাস ত্যাগ করিতেছিল ॥৪৩॥

अन्वयः—गवां गणः घनकाननान्तरगतः शनैः अनुक्षणं हनुं परिचालयन् प्रथमप्रभुक्तयवसान् समुद्गिरन् ( च सन् ) अभिचर्व्य उदरे सर्वं न्यवीविशत् ॥४४॥

घनेति । गवां गणः, घनं निविडं यत् काननं वनं तस्यान्तरं मध्यं गतः, तत्रत्यच्छायायामवस्थित इत्यर्थः, शनैर्मन्दं मन्दम्, अनुक्षणं निरन्तरम्, हनुं गण्डावयवम्, परिचालयन् चर्वणार्थं सञ्चालयन्, प्रथममादौ प्रभुक्ता उदराभ्यन्तरे प्रवेशिता ये यवसा घासास्तान्, समुद्गिरन् उदरान्मुखाभ्यन्तरे आनयंश्च सन्, अभिचर्व्य सर्वतोभावेन तच्चर्वणं कृत्वा, उदरे, सर्वम्, न्यवीविशत् प्रवेशितवान् ।

अत्रापि स्वभावोक्तिरलङ्कारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ।

"घासो यवसम्" इत्यमरः । "यवसः पुंसि च" इति तत्रत्यटीकायां रघुनाथः । "गण्डौ कपोलौ तत्परा हनुः" इति चामरः ॥४४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पथिको बृहत्पथगमश्रमाकुलः
परिपीय वारि निवसन्ननातपे ।
शिशिरानिलोपजनिताङ्गनिर्वृतिः
विवशो बभूव भुवि निद्रितो द्रुतम् ॥४५॥
रविरश्मिशुष्करसगात्रमार्जनीं
विनिधाय मूर्द्धनि कृषीबलाः खले ।
सततस्रुतप्रसृतघर्म्मबिन्दवः
हलिकृष्टभूमिगतखेदं व्यपानयन् ॥४६॥

---

বাঙ্গালা—গোসমূহ নিবিড় বনের ভিতরে থাকিয়া ধীরে ধীরে অনবরত গণ্ডযুগল সঞ্চালন করিয়া প্রথমভুক্ত ঘাস মুখে আনিয়া পুনরায় চিবাইয়া সে সমস্তই উদরের ভিতরে প্রবেশ করাইতেছিল ॥৪৪॥

अन्वयः—बृहत्पथगमश्रमाकुलः पथिकः वारि परिपीय अनातपे निवसन् शिशिरानिलोपजनिताङ्गनिर्वृतिः विवशः (च सन्) द्रुतं भुवि निद्रितः बभूव ॥४५॥

पथिक इति। बृहतो दीर्घस्य पथो गमेन गमनेन यच्छ्रमस्तेन आकुलः पथिकः, वारि नद्या जलं परिपीय, अनातपे छायायाम्, निवसन्नवतिष्ठमानः, शिशिरेण शीतलेन अनिलेन वायुना उपजनिता अङ्गानां निर्वृतिः शान्तिर्यस्य स तथोक्तः, विवशो निद्रागमादस्वाधीन-चेष्टश्च सन्, द्रुतम्, भुवि, निद्रितो बभूव ।

अत्रापि स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृष्टः ॥४५॥

বাঙ্গালা—সুদীর্ঘ পথ গমন করায় পরিশ্রান্ত পথিকগণ নদীর জল পান করিয়া বৃক্ষের ছায়ায় বসিয়া বিশ্রাম করিতেছিল; এমন সময় শীতল বায়ু আসিয়া তাহাদের অঙ্গের শান্তি জন্মাইতে লাগিল বলিয়া, তাহারা অবশ হইয়া সত্বরই ভূতলে নিদ্রিত হইয়া পড়িতেছিল ॥৪৫॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

প্রথমাদ্দিনস্য পথিকঃ পথি ব্রজন্
প্রযিযাসিতস্থলসমীপগোঽপি সন্।
গমনীয়মল্পমপি মার্গমুন্মনাঃ
বুবুধে প্রভূতমিব দুঃসহশ্রমী ॥৪৭॥

অন্বয়ঃ—কৃষীবলাঃ মূর্দ্ধনি রবি-রশ্মি-শুষ্ক-রস-গাত্রমার্জনীং বিনিধায় সতত-স্রুত-প্রসৃত-ঘর্ম্মবিন্দবঃ (সন্তঃ) খলে হলিক্লষ্টভূমিগ-তৃণং ব্যপানয়ন্ ॥৪৬॥

রবীতি। কৃষীবলাঃ কৃষকাঃ, মূর্দ্ধনি মস্তকে, রবিরশ্মিভিঃ সূর্য্যকিরণৈঃ শুষ্কা রসা জলানি যস্যাঃ সা চাসৌ গাত্রমার্জনী চেতি তাম্, বিনিধায় বন্ধনেন সংস্থাপ্য, সততং স্রুতা নির্গতাঃ প্রসৃতা বিস্তৃতাশ্চ ঘর্ম্মবিন্দবো যেষাং তে তাদৃশাঃ সন্তঃ, খলে শস্যস্থানে, হলিভিঃ কৃষ্টা যা ভূমিঃ তত্র গচ্ছতি তিষ্ঠতীতি তচ্চাদৃশং যত্তৃণং তত্, ব্যপানয়ন্ উত্তোল্যো-ত্তোল্যাপনীতবন্তঃ।

অত্রাপি স্বভাবোক্তিরলঙ্কারঃ।

"খলং শস্যস্থানে শঠে ত্রিষু" ইতি ত্রিকাণ্ডশেষঃ ॥৪৬॥

বাঙ্গালা—কৃষকেরা মস্তকে সূর্য্যকিরণশুষ্ক গাত্রমার্জনী বন্ধন করিয়া হলকৃষ্ট ভূমিজাত তৃণ সকল তুলিয়া ফেলাইতেছিল, সেই সময়ে তাহাদের গাত্র হইতে অনবরত ঘর্ম্মবিন্দু নির্গত হইয়া বিস্তৃতভাবে নিঃসৃত হইতেছিল ॥৪৬॥

অন্বয়ঃ—পথিকঃ দিনস্য প্রথমাত্ পথি ব্রজন্ প্রযিযাসিত-স্থল-সমীপগঃ অপি দুঃসহশ্রমী উন্মনাঃ (চ) সন্ গমনীয়ং অল্পং অপি মার্গং প্রভূতং ইব বুবুধে ॥৪৭॥

প্রথমাদিতি। পথিকঃ, দিনস্য, প্রথমাত্ প্রভাতকালাদবধি, পথি ব্রজন্ গচ্ছন্, প্রযাতুমিষ্টং প্রযিযাসিতং যত্ স্থলং তস্য সমীপং গচ্ছতীতি সঃ, তাদৃশঃ সন্নপি, দুঃসহঃ শ্রমোঽস্যাস্তীতি স দুঃসহশ্রমী উন্মনা

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ललितामला मृदुलपल्लवावली
प्रथमप्रकाशितसुखी नवा सती ।
प्रखरेण भास्करकरेण धर्षिता
प्रमुमोह साहसिकतावहिर्गमात् ॥४८॥

उत्सुकचित्तश्च सन्, गमनीयम्, अल्पमपि मार्गं पन्थानम्, प्रभूतं प्रचुरमिव, बुबुधे मेने । दुःसहश्रमीत्वादेवेत्याशयः ।

अत्र अल्पस्य पथः प्राचुर्य्यबोधं प्रति दुःसहश्रमिपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

दुःसहश्रमीति अतिशयार्थें मत्वर्थीय इन् । अतएव बहुब्रीहिणा तदर्थस्य बोधयितुमशक्यत्वात् "न कर्म्मधारयान्मत्वर्थीयः—" इत्यादि-निषेधस्य न प्रसक्तिरिति प्रागप्युक्तम् ॥४७॥

বাঙ্গালা—পথিকগণ দিনের প্রথম সময় হইতে পথে চলিতে থাকিয়া গন্তব্যস্থানের নিকটবর্ত্তী এবং উৎকণ্ঠিত হইয়াও অত্যন্ত পরিশ্রান্ত বলিয়া অল্প পথকেও অধিক বলিয়া মনে করিতেছিল ॥৪৭॥

अन्वयः—ललिता अमला नवा (च) मृदुलपल्लवावली साहसिकतावहिर्गमात् प्रथमप्रकाशितसुखी प्रखरेण भास्करकरेण धर्षिता (च) सती प्रमुमोह ॥४८॥

ललितेति । ललिता सुन्दरी, अमला निर्म्मला, नवा नूतना, च, मृदुला चासौ पल्लवानामावली श्रेणिश्चेति सा मृदुलपल्लवावली तादृशी रमणी च, साहसिकतया अल्पसमयेन साहसेन च वहिर्गमात् तरुलता-शाखाभ्य उत्थानात् भवनाद्वहिर्गमनाच्च, प्रथमं प्रकाशितं सुख-माद्यभागो वदनञ्च यया सा तादृशी, अतएव प्रखरेण अतितीव्रेण, भास्करकरेण सूर्य्यकिरणेन विटहस्तेन च, धर्षिता ग्लाना आक्रान्ता च सती, प्रमुमोह अतीवविकला प्रमूर्च्छिता च बभूव ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पादपादपि लताकुलादपि
भूतलादपि च दूरवर्त्तिनः ।
काचवज्जलधिवीचिचञ्चलं
निर्म्मलं किमपि तेज उद्गतम् ॥४९॥

शोषयन् रसमशेषवस्तुनः
तापयन् गृहगतान् जनानपि ।
दुःसहो दिनकरोऽकरोत्तदा
चण्डरोचिरिति नाम सार्थकम् ॥५०॥

अत्र कार्य्यसाम्येन विशेषणसाम्येन च तादृशपल्लवावल्यां तरुणी-व्यवहारसमारोपात् समासोक्तिरलङ्कारो वृत्त्यनुप्रासश्चानयोः संसृष्टिः ॥४८॥

বাঙ্গালা—নির্ম্মল, মনোহর, অল্পকালমাত্র নির্গত ও প্রথম প্রকাশিত মুখ তরুলতার নূতন পল্লবগুলি সূর্য্যের প্রখর কিরণে ম্লান হইয়া ক্রমে অতিবিকল হইতেছিল ॥৪৮॥

अन्वयः—काचवत् जलधिवीचिचञ्चलं निर्म्मलं (च) किं अपि तेजः दूरवर्त्तिनः पादपात् अपि लताकुलात् अपि भूतलात् अपि च उद्गतं ॥४९॥

पादपादिति । काचवत् लघुम्, जलधिवीचिवत् समुद्रतरङ्ग इव चञ्चलम्, निर्म्मलञ्च, किमपि तेजः, दूरवर्त्तिनो द्रष्टुर्दूरदेशस्थितात्, पादपाद्वृक्षसमूहादपि, लतानां कुलात् निचयादपि, भूतलादपि च, उद्गतमुत्थितमभूत् ।

अत्र श्रौतोपमालुप्तोपमयोः परस्परनिरपेक्षतया संसृष्टिः ।

इदन्तु तेजो निदाघकाले मध्याह्नसमये तीव्रातपे नितरामनुसन्धित्-सूनां प्रत्यक्षीभवति ॥४९॥

বাঙ্গালা—কাচের ন্যায় হাল্‌কা, জলতরঙ্গের ন্যায় চঞ্চল ও নির্ম্মল, কোন তেজ দূরবর্ত্তী বৃক্ষ, লতা ও ভূতল হইতে উঠিতেছিল ॥৪৯॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रायशस्त्रिजगतामकारणं
दृष्टिमेष मलिनो विलुम्पति ।
इत्यवेत्य किरणैरिवैरिरत्
अन्धकारमरुणो गुहान्तरे ॥५१॥

---

अन्वयः—तदा दुःसहः दिनकरः अशेषवस्तुनः रसं शोषयन् गृहगतान् अपि जनान् तापयन् (च) चण्डरोचिः इति नाम सार्थकं अकरोत् ॥५०॥

शोषयन्निति । तदा दुःसहो दिनकरः सूर्य्यः, अशेषवस्तुनो रसवतः धान्यादिसर्वपदार्थस्य, रसं शोषयन्, गृहगतानपि जनान् तापयंश्च सन्, चण्डं भीषणं रोचिरातपो यस्य स चण्डरोचिरिति नाम संज्ञाम्, सार्थकं व्युत्पत्त्यर्थयुक्तम्, अकरोत् ।

अत्र चण्डरोचिरिति नाम्नः सार्थकीकरणं प्रति प्रथमार्द्धगतपदार्थद्वयस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारश्छेकानुप्रासेन संसृज्यते ॥५०॥

বাঙ্গালা—তৎকালে দুঃসহ সূর্য্য রসযুক্ত সমস্ত বস্তুর রস শোষণ এবং গৃহস্থিত জনগণেরও সন্তাপ জন্মাইতে থাকিয়া, 'চণ্ডরোচি' এই নাম সার্থক করিতেছিলেন ॥৫০॥

अन्वयः—एषः मलिनः अकारणं प्रायशः ( एव ) जगतां दृष्टिं विलुम्पति इति अवेत्य इव अरुणः किरणैः अन्धकारं गुहान्तरे ऐरिरत् ॥५१॥

प्रायश इति । एष मलिनः कृष्णवर्णः पापी च, अन्धकारः, अकारणम्, प्रायशो बाहुल्येनैव, जगतां जगद्वासिनां जनानां दृष्टिम्, विलुम्पति स्वभावेन मन्त्रौषधिप्रभावेण च अपहरति ; इति अवेत्य ज्ञात्वेव, अरुणः सूर्य्यो राजा च, किरणैर्मयूखै राजपुरुषैश्च, अन्धकारं तिमिरं चौरञ्च, गुहान्तरे पर्वतकन्दरे कारागारे च, ऐरिरत् प्रेरितवान् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ভাস্বদংশুনিচয়ৈস্তিরস্কৃতঃ
সূর্য্যকান্তমণিরগ্নিমাতনোৎ ।
শক্তিমান্ জগতি কো জনো মুধা
সংসহেত হি পরাবমাননাম্ ॥৫২॥

অত্র কার্য্যসাম্যেন সূর্য্যে রাজ্ঞঃ অন্ধকারে চ চৌরস্য ব্যবহার-সমারোপাৎ সমাসোক্তিরলঙ্কারঃ, ক্রিয়োৎপ্রেক্ষা চানয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ, সোঽপি চ ছেকানুপ্রাসবৃত্ত্যনুপ্রাসাভ্যাং সংসৃজ্যতে ॥৫১॥

বাঙ্গালা—এই মলিন অন্ধকার বিনা কারণে প্রায় জগদ্বাসী লোকেরই দৃষ্টি হরণ করে ; ইহা জানিয়াই যেন সূর্য্য আপন কিরণদ্বারা অন্ধকারকে পর্ব্বতের গুহার ভিতরে প্রেরণ করিতেছিলেন ॥৫১॥

অন্বয়ঃ—সূর্য্যকান্তমণিঃ ভাস্বদংশুনিচয়ৈঃ তিরস্কৃতঃ (সন্) অগ্নিং আতনোৎ । জগতি শক্তিমান্ কঃ হি জনঃ মুধা পরাবমাননাং সংসহেত ॥৫২॥

ভাস্বদিতি । সূর্য্যকান্তমণিঃ, ভাস্বতঃ সূর্য্যস্য অংশুনিচয়ৈঃ কিরণসমূহৈঃ, তিরস্কৃত আবৃতো ভর্ৎসিতশ্চ সন্, অগ্নিম্, আতনোৎ বিস্তারিতবানাবিরকরোৎ । জগতি, শক্তিমান্ প্রতিক্রিয়াপ্রদর্শনে সমর্থঃ, কো হি জনঃ, মুধা বৃথা বিনাকারণমিত্যর্থঃ, পরাবমাননাং পরকৃত-মপমানম্, সংসহেত, অপি তু কোঽপি নেত্যর্থঃ ।

অত্রাবরণভর্ৎসনয়োর্ভেদেঽপি তিরস্কৃত ইতি পদস্য শ্লেষেণাভেদাধ্য-বসায়াদতিশয়োক্তিরলঙ্কারঃ, সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তর-ন্যাসশ্চানয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ ।

রবিকিরণস্পর্শে সূর্য্যকান্তমণেরগ্নেরাবির্ভাবঃ খলু স্বাভাবিকঃ ॥৫২॥

বাঙ্গালা—সূর্য্যকান্তমণি সূর্য্যের কিরণসমূহে আবৃত হইয়া অগ্নি

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दीर्णभूविलमुपेत्य भास्करः
ध्वान्तशेषमिव हन्तुमुद्यतः ।
नागलोकमगमद्विचक्षणः
नाश्यलेशमपि नैव शेषयेत् ॥५३॥
तापितं रविकरेण सैकतं
तीव्रमुष्णकिरणं समासृजत् ।
तीक्ष्णतेजसमुपेत्य यो जड़ः
दुर्भगः स खलु सर्वसम्मतः ॥५४॥

---

আবিষ্কার করিতেছিল। কারণ, জগতে শক্তিশালী কোন্ লোক বিনা কারণে পরকৃত অপমান সহ্য করে? ॥৫২॥

अन्वयः—भास्करः दीर्ण-भू-बिलं उपेत्य ध्वान्तशेषं (अपि) हन्तुं उद्यतः इव नागलोकं अगमत् । विचक्षणः नाश्यलेशं अपि न एव शेषयेत् ॥५३॥

दीर्णेति । भास्करः सूर्य्यः, दीर्णाया निजकिरणैरेव विदारिताया भुवो भूमेः बिलं गर्त्तम्, उपेत्य प्रविश्य, ध्वान्तस्य अन्धकारस्य शेषमवशिष्टमंशमपि, हन्तुमुद्यत इव सन्, नागलोकं पातालम्, अगमत्। गन्तुमारभते स्म । विचक्षणो नीतिज्ञो लोकः, नाश्यस्य हन्तव्यस्य लेशमल्पमंशमपि, नैव, शेषयेत् अवशिष्टतया रक्षेत् ।

अत्र वाच्या भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चानयोः परस्परनिरपेक्षतया संसृष्टिः ॥५३॥

বাঙ্গালা—সূর্য্য বিদীর্ণ ভূমির গর্ত্তের ভিতরে প্রবেশ করিয়া অবশিষ্ট অন্ধকারও যেন বিনাশ করিতে উদ্যত হইয়া পাতালে যাইতেছিলেন। কারণ, নীতিজ্ঞ লোক হন্তব্যের লেশও অবশিষ্ট রাখেন না ॥৫৩॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शोषणाय सदनाङ्गने खगान्
खादतो विततशस्यसंहतिम् ।
निस्वनन्नतिजरो जनो वसन्
कुञ्चिकाभिसरणैरसारयत् ॥५५॥

---

अन्वयः—सैकतं रविकरेण तापितं (सत्) तीव्रं उष्णकिरणं समासृजत् । यः तीक्ष्णतेजसं उपेत्य (अपि) जड़ः (एव तिष्ठति) सः खलु सर्वसम्मतः दुर्भगः ॥५४॥

तापितमिति । सैकतं सिकतामयं वालुकामयं स्थानमिति यावत्, रविकरेण सूर्य्यकिरणेन, तापितं सत्, तीव्रमुष्णकिरणम्, समासृजत् आविरकरोत् । यः पदार्थः, तीक्ष्णतेजसं पदार्थम्, उपेत्य प्राप्यापि, जड़ो निस्तेजा एव तिष्ठति, स खलु सर्वसम्मतो दुर्भगः ।

अत्रापि सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥५४॥

বাঙ্গালা—বালুকাময় স্থান সূর্য্যের কিরণে সন্তপ্ত হইয়া তীব্র উষ্ণ-কিরণ আবিষ্কার করিতেছিল। কারণ, যে পদার্থ, তীক্ষ্ণ তেজ পদার্থ পাইয়াও নিস্তেজই থাকে, সে পদার্থ সর্ব্বসম্মত দুর্ভাগ্য ॥৫৪॥

अन्वयः—अतिजरः जनः वसन् निस्वनन् ( च ) कुञ्चिकाभिसरणैः शोषणाय सदनाङ्गने वितत-शस्यसंहतिं खादतः खगान् असारयत् ॥५५॥

शोषणायेति । अतिजरः अतीववृद्धो जनः, वसन् अनतिदूर एवोपविशन्, निस्वनन् 'हुस्' इत्यादिरूपं शब्दं कुर्वंश्च, कुञ्चिकाया वंशशाखाया अभिसरणैः सर्वतः प्रचलनैः, शोषणाय शुष्ककरणाय, सदनाङ्गने गृहचत्वरे, वितता विस्तृता या शस्यसंहतिः धान्यादि-समूहस्ताम्, खादतः खगान् पक्षिणः, असारयत् अपसारितवान् ।

अत्र स्वभावोक्तिरलङ्कारश्छेकानुप्रासेन संसृज्यते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भोज्यमुत्तमतमं स्वयं कृतं
सम्प्रशस्य समदन्तमन्तिके।
संस्थिता स्मितमुखी कुलाङ्गना
वल्लभं व्यजनवत्यतूतुषत् ॥५६॥

उपरि वद्धायाः कुञ्चिकाया बन्धनरज्जुसमाकर्षणेन तस्याः स्वयमिव सर्वतश्चलनमिति कारितप्रत्ययाभावेऽपि तदर्थप्रतीतिः ॥५५॥

বাঙ্গালা—শুকাইবার জন্য ঘরের উঠানে শস্য ছড়াইয়া রাখিয়াছিল; তখন পক্ষিগণ আসিয়া তাহা খাইতে লাগিয়া গিয়াছিল; এমন সময়ে কোন অত্যন্ত বৃদ্ধ লোক অদূরে বসিয়া 'হুইস্' ইত্যাকার শব্দ করিতে থাকিয়া এবং বাঁশের কঞ্চি সকল দিকে চালাইয়া সে পক্ষীগুলিকে তাড়াইতেছিল ॥৫৫॥

अन्वयः—अन्तिके संस्थिता स्मितमुखी कुलाङ्गना व्यजनवती (सती) स्वयं कृतं उत्तमतमं भोज्यं सम्प्रशस्य समदन्तं वल्लभं अतूतुषत् ॥५६॥

भोज्यमिति। अन्तिके संस्थिता, स्मितं मृदुहास्यं मुखे यस्याः सा स्मितमुखी, काचित् कुलाङ्गना, व्यजनवती तालवृन्तहस्ता, व्यजनं सञ्चालयन्ती सतीत्यर्थः स्वयमात्मना कृतं पक्वम्, उत्तमतममतीवोत्कृष्टम्, भोज्यं खाद्यम्, सम्प्रशस्य विशेषेण प्रशस्य, समदन्तं सम्यग्-भक्षयन्तम्, वल्लभं दयितम्, अतूतुषत् पाकनैपुण्येन व्यजनवातेन च सन्तोषितवती।

अत्र छेकानुप्रासोऽलङ्कारः ॥५६॥

বাঙ্গালা—কোন কুলবধূ নিজে যাহা পাক করিয়াছিল, তাহার প্রিয়পতি বিশেষ প্রশংসা করিয়া সেই অত্যুৎকৃষ্ট অন্ন ভোজন করিতে-ছিলেন; তখন সেই কুলবধূ তাঁহার নিকটে বসিয়া সহাস্য মুখে ব্যজন সঞ্চালন করিতে থাকিয়া তাঁহাকে সন্তুষ্ট করিতেছিল ॥৫৬॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रचण्डमार्त्तण्डमरीचिमण्डलैः
समाहतस्तप्तसमीरणैरपि ।
विगाहमानोऽपि सरोवरान्तरे
न देहदाहं स्म जहाति दन्तुरम् ॥५७॥
प्रभञ्जनो वह्निसमानमर्शनः
धरारजोराजिमुपाहरन् जवात् ।
सनिस्वनं नीरसपर्णमुद्वहन्
उदभ्रमत् सिन्धुजलभ्रमोपमम् ॥५८॥

---

अन्वयः—प्रचण्ड-मार्त्तण्ड-मरीचि-मण्डलैः तप्तसमीरणैः अपि समाहतः (जनः) सरोवरान्तरे विगाहमानः अपि (सन्) दन्तुरं देहदाहं न जहाति स्म ॥५७॥

प्रचण्डेति । प्रचण्डस्य प्रखरतया नितान्तभीषणस्य मार्त्तण्डस्य सूर्य्यस्य मरीचिमण्डलैः किरणसमूहैः, तप्तसमीरणैरपि तन्मरीचिमण्डल-सन्तप्तवायुभिश्च, समाहतस्ताड़ितः भृशं स्पृष्ट इत्यर्थः, जनः, सरोवरान्तरे उत्तमजलाशयमध्ये विगाहमानो मज्जन्नपि सन्, दन्तुरं विषमं देहदाहं शरीरसन्तापम्, न जहाति स्म सहसा न तत्याज; तदतिरेकादिति भावः ।

अत्र विगाहनरूपे कारणे सत्यपि देहदाहत्यागरूपतत्कार्य्यानुत्पत्तेर्विशेषोक्तिरलङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासश्च त्येतेषां संसृष्टिः ।

इतःप्रभृति पञ्चसु श्लोकेषु वंशस्थविलं वृत्तम् ॥५७॥

বাঙ্গালা—প্রচণ্ড সূর্য্যের কিরণ ও সন্তপ্ত বায়ুর সংস্পর্শের পরে মানুষ সরোবরমধ্যে অবগাহন করিতে থাকিয়াও সহসা দেহের দারুণ সন্তাপ ত্যাগ করিতে পারিতেছিল না ॥৫৭॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृतच्छणं प्राणपतिं प्रवासिनम्
अवीक्ष्य साक्षाद्युवतिरुपागतम्।
सुदुःसहोऽन्तर्ज्वलितो महातपः
जिगाय मध्यन्दिनभास्वदातपम् ॥५९॥

अन्वयः—वह्निसमानमर्म्मनः प्रभञ्जनः जवात् धरारजोराजिं उपाहरन् सनिस्वनं नीरसपर्णं उद्वहन् (च) सिन्धुजलभ्रमोपमं उदभ्रमत् ॥५८॥

प्रभञ्जन इति। वह्निसमानमर्म्मनः अग्नितुल्यमर्म्मः, प्रभञ्जनो वायुः, जवाद्वेगात्, धराया भूमे रजोराजिं धूलिसमूहम्, उपाहरन्नाददानः, सनिस्वनं सशब्दम्, नीरसपर्णं वृक्षस्य शुष्कपत्रम्, उद्वहन्तोलयंश्च सन्, सिन्धुजलभ्रमः समुद्रजलावर्त्त उपमा यस्य कर्म्मणा इति तद्यथा तथा, उदभ्रमत् घूर्णितवान्।

अत्र स्वभावोक्तिरलङ्कारः, समासगतमार्थोपमाद्वयश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रासेन संसृज्यते ॥५८॥

বাঙ্গালা—অগ্নির তুল্য উষ্ণস্পর্শ বায়ু বেগে ভূতলের ধূলি লইয়া, শব্দের সহিত শুষ্ক পত্র বহন করিতে থাকিয়া, সমুদ্রের জলাবর্ত্তের ন্যায় (ঘোলার মত) ঘুরিতেছিল ॥৫৮॥

अन्वयः—कृतक्षणं प्रवासिनं प्राणपतिं साक्षात् उपागतं अवीक्ष्य युवतेः अन्तर्ज्वलितः सुदुःसहः महातपः मध्यन्दिनभास्वदातपं जिगाय ॥५९॥

कृतेति। कृतः क्षणः आगमनसमयनिर्द्देशो येन तम्, प्रवासिनं विदेशस्थम्, प्राणपतिम्, साक्षादुपागतमुपस्थितम्, अवीक्ष्य अनवलोक्य, स्थितायाः इति शेषः; युवतेः, अन्तः हृदयाभ्यन्तरे ज्वलितः, सुदुःसहो महातपः तीव्रद्योतः, मध्यन्दिनभास्वतो मध्याह्नसूर्य्यस्यातपं द्योतम्, जिगाय जितवान्।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्वतः कुलायालयकोकिलेन यः
कुहूरवः काननतोऽन्तरेऽन्तरे ।
वियोगिनीनां स मनस्युहूरिति
ततान पीड़ापिशुनं प्रतिस्वनम् ॥६०॥

---

अत्र सन्तापविरहवेदनयोर्भेदेऽपि महातपपदेन तयोरभेदाध्यवसायादेकातिशयोक्तिरलङ्कारः, जयासम्बन्धेऽपि तत्सम्बन्धोक्तेरपरा चातिशयोक्तिः, छेकानुप्रासश्चेत्येतेषां मिथो निरपेक्षतया संसृष्टिः ॥५९॥

বাঙ্গালা—প্রাণতুল্য প্রিয়পতি সেই সময়ে আসিবেন এইরূপ নির্দ্দেশ করিয়া বিদেশে গিয়াছিলেন ; কিন্তু তখনও তাঁহাকে প্রত্যক্ষে উপস্থিত না দেখিতে পাওয়ায় যুবতির হৃদয়ের ভিতরে অতিদুঃসহ বিশাল আতপ, মধ্যাহ্নসূর্য্যের আতপকে জয় করিতেছিল ॥৫৯॥

अन्वयः—कुलायालयकोकिलेन अन्तरे अन्तरे काननतः यः कुहूरवः क्वतः सः वियोगिनीनां मनसि उहूः इति पीड़ापिशुनं प्रतिस्वनं ततान ॥६०॥

क्वत इति। कुलायो नीरमालयोऽवस्थितिस्थानं यस्य स चासौ कोकिलश्चेति तेन, अन्तरे अन्तरे मध्ये मध्ये, काननतो वनात्, यः कुहूरवः क्वतः, स कुहूरवः, वियोगिनीनां विरहिणीनां रमणीनां मनसि, 'उहूः' इति इत्थम्, पीड़ापिशुनं वियोगवेदनासूचकम्, प्रतिस्वनं प्रतिध्वनिम्, ततान विस्तारयाञ्चकार ; कोकिलरवस्योद्दीपकत्वात् प्रतिध्वनेश्च प्रायेण ध्वन्यनुरूपत्वादित्याशयः ।

अत्र तादृशप्रतिस्वनोत्पादनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ।

"कुलायो नीरमस्त्रियाम्" इति "पिशुनौ खलसूचकौ" इति चामरः ॥६०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वह्निः प्रतप्तं तपनातपैर्वपुः
सुशीतलं स्वेदजलं किलाकरोत्।
अनङ्गतप्तं पथिकाङ्गनामनः
निरुद्धमप्यस्रुजलं न किञ्चन ॥६१॥

---

বাঙ্গালা—নীরবাসী কোকিল মধ্যে মধ্যে বন হইতে যে 'কুহূরব' করিতেছিল; তাহাই বিরহিণী রমণীগণের হৃদয়ে 'উহূ' ইত্যাকার বিয়োগবেদনাসূচক প্রতিধ্বনি উৎপাদন করিতেছিল ॥৬০॥

अन्वयः—स्वेदजलं किल तपनातपैः वह्निः प्रतप्तं वपुः सुशीतलं अकरोत्। (किन्तु) निरुद्धं अपि अस्रुजलं अनङ्गतप्तं पथिकाङ्गनामनः किञ्चन शीतलं न अकरोत् ॥६१॥

वह्निरिति। स्वेदजलं घर्म्मवारि कर्त्तृ किल, तपनातपैः सूर्य्यद्योतैः, वह्निः प्रतप्तम्, वपुः शरीरम्, सुशीतलमकरोत्। किन्तु, निरुद्धम् अन्तरे अवरुद्धमपि, अस्रुजलं कर्त्तृ, अनङ्गेन कामेन तप्तम्, पथिकाङ्गनायाः पान्थस्त्रियाः विरहिण्या रमण्या मनः, किञ्चन किमपि, शीतलम्, न अकरोत्।

अत्र स्वेदजलास्रुजलयोर्योग्यताभेदादिना विरूपयोः सङ्घटनया विषमालङ्कारः, अस्रुजलरूपकारणे सत्यपि शीतलत्वरूपतत्कार्य्यानुत्-पत्तेर्विशेषोक्तिस्तानयोरङ्गाङ्गिभावेन सङ्करः, सोऽपि च छेकानुप्रास-वृत्त्यनुप्रासाभ्यां संसृज्यते ॥६१॥

বাঙ্গালা—ঘর্ম্মজল সূর্য্যের তাপে বাহিরে সন্তপ্ত শরীরকে সুশীতল করিতেছিল বটে; কিন্তু অশ্রুজল অন্তরে অবরুদ্ধ করিলেও বিরহিণী রমণীর কামসন্তপ্ত মনকে ঈষৎ শীতলও করিতেছিল না ॥৬১॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भानोर्भानुमहोष्णतामनुभवन् पत्रातपत्रान्तरात्
यानश्रान्तनितान्ततान्तकरणो गच्छन् स मध्यन्दिने ।
स्वच्छे व्योमनि यामिनीमणिमिव श्रीद्वारकापत्तनं
सिन्धौ सौधविभाविभासितसितं दूराद्ददर्शादरात् ॥६२॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
मध्याह्नवर्णनं नाम सप्तमः सर्गः ॥०॥

——०:०:०——

अन्वयः—मध्यन्दिने यान-श्रान्त-नितान्त-तान्त-करणः सः पत्रातपत्रान्तरात् भानोः भानुमहोष्णतां अनुभवन् गच्छन् (च) स्वच्छे व्योमनि यामिनीमणिं इव सिन्धौ सौध-विभा-विभासित-सितं श्रीद्वारकापत्तनं दूरात् आदरात् ददर्श ॥६२॥

इत्थं प्रासङ्गिकं मध्याह्नवर्णनं समाप्य प्रकृतमनुसरन् भाविसर्गञ्च सूचयन् प्राक्प्रस्थितस्य रुक्मिण्या दूतभूतस्य ब्राह्मणस्य द्वारकानगरी-दर्शनमाह भानोरिति। दिनस्य मध्यं मध्यन्दिनं तस्मिन् मध्यन्दिने मध्याह्नकाले, यानेन दीर्घपथगमनेन श्रान्तानि आयस्तानि नितान्त-तान्तानि अत्यन्तक्लान्तानि च करणानि चरणादीनीन्द्रियाणि यस्य सः, स रुक्मिण्या दूतभूतो ब्राह्मणः, पत्रातपत्रं पर्णमयं यत् छत्रं तस्यान्तरात् मध्यादपि, भानोः सूर्य्यस्य, भानूनां किरणानां महोष्णतामनुभवन्, गच्छन् रुक्मिण्या दौत्यावश्यकत्वात् द्वारकां प्रति व्रजंश्च सन्, स्वच्छे निर्म्मले व्योमनि आकाशे, यामिनीमणिं चन्द्रमिव, सिन्धौ समुद्रे, सौधानां राजसदनानां या विभा शुभ्रप्रभा तया विभासितो विशेषेण प्रकाशितः सितः शुभ्रवर्णो यस्य तत्, श्रीद्वारकापत्तनं श्रीमद्द्वारका-नगरम्, दूरादेव, सौन्दर्य्यातिशयेनादरात्, ददर्श ।

अत्र श्रौतोपमालङ्कारः, छेकानुप्रासो वृत्त्यनुप्रासश्च इत्येतेषां संसृष्टिः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

"ভানুঃ কিরণসূর্য্যয়োঃ" ইতি বিশ্বঃ। "করণং সাধকতমং ক্ষেত্র-গাত্রেন্দ্রিয়েষ্বপি" ইত্যমরঃ।

দ্বারকায়াঃ কৃষ্ণাধিষ্ঠানাৎ দেবস্থানতয়া শ্রীপূর্ব্বকমভিহিতং তত্র, "দেবং গুরুং গুরুস্থানং ক্ষেত্রং ক্ষেত্রাধিপং তথা। সাধ্যং সিদ্ধাধিকারাংশ্চ শ্রীপূর্ব্বং সমুদীরয়েৎ॥" ইতি স্মৃতিঃ। অত্র গুরুস্থানমিতি গুরুপদং দেবস্থাপ্যুপলক্ষণমিতি গুরবঃ। শ্রীমত্ত্বে লক্ষ্মা বা।

মধ্যন্দিনমিতি "ধেন্বনুডুহাদয়শ্চ" ইতি নিপাতঃ। "শুক্লে শুক্লাদয়ঃ পুংসি গুণে লিঙ্গাস্তু তদ্বতি" ইত্যমরোক্তিপ্রামাণ্যাৎ সিতশব্দোঽত্র গুণবচনঃ।

শার্দ্দূলবিক্রীড়িতং বৃত্তম্ ॥৬২॥

ব্রহ্মর্ত্তুবহ্নিন্দুমিতে শকাব্দে সৌরাশ্বিনে পঞ্চদশে দিনে চ।
বঙ্গানুবাদান্বয়সংযুতেয়ং সমাপিতা সপ্তমসর্গটীকা॥

ইতি শ্রীহেমচন্দ্রতর্কবাগীশবিরচিতায়াং রুক্মিণীহরণটীকায়াং
বিচিত্রায়াং সপ্তমঃ সর্গঃ ॥০॥

বাঙ্গালা—রুক্মিণীর দৌত্যকার্য্য করিবার জন্য মধ্যাহ্নকালে সুদীর্ঘ-পথ গমন করায় সেই ব্রাহ্মণের প্রায় সমস্ত ইন্দ্রিয়ই পরিশ্রান্ত ও অত্যন্ত ক্লান্ত হইয়াছিল এবং তিনি পত্রময় ছত্রের অভ্যন্তর হইতেও সূর্য্যকিরণের গুরুতর উষ্ণতা অনুভব করিতেছিলেন; তথাপি তিনি কার্য্যের গুরুত্ব-বশতঃ গমন করিতে থাকিয়া দূর হইতেই আদরপূর্ব্বক দ্বারকানগরী দর্শন করিলেন। নির্ম্মল আকাশে পূর্ণচন্দ্রের ন্যায় সমুদ্রমধ্যে সেই নগরীটী বিরাজ করিতেছিল এবং অট্টালিকাসমূহের শুভ্রবর্ণে সেই নগরীটীর শুভ্রবর্ণ আরও উদ্ভাসিত ছিল ॥৬২॥

———•———

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## अष्टमः सर्गः ।

——:०:——

नाविको गुरुगम्भीरं कल्लोलकुलसङ्कुलम् ।
अश्रान्तं तं सरस्वन्तं नाव्यमेनमतीतरत् ॥१॥
ततार तरणिस्तीरे तरुणातपतापितः ।
शोणपाषाणसोपाने पानेहापीनपीड़ितः ॥२॥
द्वारकान्तःसभाद्वारं प्रतिहारिप्रदर्शितम् ।
शेषशायिसभाशेषं विशन्नेष निरैक्षत ॥३॥
घनः स्वानो घनस्येव नर्त्तयन् शिखिदम्पती ।
सभावसानं संसूच्य शङ्खस्योदचरच्चिरम् ॥४॥
शृङ्गादिव तुषाराद्रेः स्रोतस्विस्रोतसोऽम्भसाम् ।
केशवस्य सदस्यानां गोपुरात् परिनिर्ययौ ॥५॥
जनौघं तं विनिर्यान्तम् अविश्रान्तप्रसारिणम् ।
अतिचक्राम पार्श्वेन शैलसिन्धुमिव द्विपः ॥६॥
प्रविश्य नगरान्तः स बभूव हृषितान्तरः ।
अदृष्टपूर्वसौन्दर्य्य-विलोकलोललोचनः ॥७॥
लक्ष्मीपतेः पुरो लक्ष्मीम् अभिलक्ष्योचकार सः ।
स्वच्छेऽमरावतीच्छायाम् अम्बुधाविव विम्बिताम् ॥८॥
रत्नावलीविलम्बिन्यः कान्ताश्चारुमरीचयः ।
चत्वरेऽन्योन्यसंयोगात् इन्द्रेष्वासश्रियं दधुः ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विशेषरत्नशीतांशु-निःशेषनिहतश्रमः।
नापेक्षते स्म सुस्थः सन् आकर्षव्यजनानिलम् ॥१०॥

विचिन्वन् शार्ङ्गधन्वानं कुलोके लोकमण्डले।
ददर्शयाऽज्ञातमपि प्रभावसंस्तुतं तु तम् ॥११॥

गिरीशगिरिशुभ्रांशु-रेवतीजानिपाणिना।
गङ्गाम्बुना श्लिष्टाङ्गं प्रवाहमिव यामुनम् ॥१२॥

सवारिवारिदश्यामं पीतकौषेयवाससम्।
तप्तकाञ्चनसन्नद्ध-महानीलमणिद्युतिम् ॥१३॥

प्रियङ्गुकुसुमासन्ने कुन्दपुष्पमिव स्फुटम्।
बिभ्रतं नोलनासान्ते शुक्तिमौक्तिकमेककम् ॥१४॥

जगत्तिलकतां तस्य बोधयन्तमिवाखिलान्।
ललाटे तिलकं कान्तं धारयन्तं छिदान्तरम् ॥१५॥

भक्तपापपशुच्छेद-यूपेनेवोज्ज्वलात्मना।
तिलकेन ललाटान्तः अथवा भान्तमुच्चकैः ॥१६॥

मणिचूड़ाचरच्चारु-मरीचिचयचुम्बितम्।
प्रभया बर्हिणो बर्हं गर्हयन्तमिवात्मनः ॥१७॥

वनजाममलां मालां पीवरोरःस्थलस्थिताम्।
गोपीवियोगविषम-शोकलक्ष्मेव बिभ्रतम् ॥१८॥

गोपाङ्गनास्तनाघात-कलङ्कमिव वक्षसि।
श्रीवत्सलक्षणं स्पष्टं दधानं चन्दनाचितम् ॥१९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सूक्ष्मत्वेनाखिलं कार्य्यम् अस्ति कारणवस्तुनि ।
सांख्योक्तमिति गृह्णन्तं कन्दर्पजनकं स्फुटम् ॥२०॥

असत्यामपि योषायां जनयन्तं सुतं स्मरम् ।
अजातेनापि जातेन त्रिजगत्प्रथितोक्ततम् ॥२१॥

स्मितदन्तसितद्योत-स्नातां रोमाङ्कुरावलीम् ।
कैशोरस्येव सीमानं बिभ्राणं दन्तवाससि ॥२२॥ (कुलकम्)

अनंसीत् सहसा शौरिः निनंसुमिममागतम् ।
अहो ! लोकललामस्य विनयः खल्वलङ्कृतिः ॥२३॥

आतिथेयोऽतिथेस्तस्य नयविद्विनयान्वितम् ।
अन्वयुङ्क्त स कल्याणं कल्याणाकरदर्शनः ॥२४॥

सोऽपि फुल्लमनाः शौरिम् अनामयमनारतम् ।
पृच्छन्नुत्तरमादत्त दत्तोत्तरमनःसुखम् ॥२५॥

क्वणत्कङ्कणहस्ताभिर्वामाभिरुपवीजितः ।
चतुर्विधमुदारान्नं मुदा सुस्वादु सस्वदे ॥२६॥

हेमपर्य्यङ्कशय्याङ्के निषण्णे सुहसानने ।
विश्रान्ते तत्र गोविन्दः पादपीठमविन्दत ॥२७॥

कुतस्त्यः कथमत्रेति पिपृच्छन्तं निनंसया ।
बलिच्छलस्मृतेऽप्येनं वामनीकृतविग्रहम् ॥२८॥

कोमलस्पर्शिना शीर्षं स विप्रः पाणिना स्पृशन् ।
आचख्यौ सस्मितं कृष्णं श्वेतयन् दन्तरोचिषा ॥२९॥ (युग्मकम्)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनन्यगो गुणस्तेऽसौ रूपञ्च नयनामृतम्।
मन्ये परस्परसद्धि देहे साम्राज्यमिच्छति ॥३०॥

सजलाभ्रतनो! बिभ्रत् अकाले सकलाः कलाः।
अतिचक्रमिथ क्षीणम् आचतुर्द्दशि शीतगुम् ॥३१॥

अनन्तगुणकान्तस्य कान्तिः किन्तु महासुखम्।
स्वर्णे सौरभमित्यस्य प्रवादस्य निदर्शनम् ॥३२॥

चापल्यं शोभते बाल्ये धैर्य्यं वैधुर्य्यसूचकम्।
बुद्ध्यङ्कुरो हि संसार-प्रवाते न स्थिरायते ॥३३॥

जनानां यौवने जातु विलासो नहि दुष्यति।
नवीनस्य प्रवालस्य शोणतैव हि शोभते ॥३४॥

वलीपलितनिःसारैः कृत्रिमश्रीर्न शस्यते।
नहि शुष्कसरोजस्य दत्तं मध्वपि कान्तिकृत् ॥३५॥

अकाले तु विलासानां जलदानाञ्च दर्शनम्।
न चोपकुरुते किञ्चित् प्रत्युतोद्वेजयत्यलम् ॥३६॥

वर्त्तमाना प्रवृत्तिश्चेद्धर्म्मे शर्म्मकरी चिरम्।
वृद्धे विषयतां याति क्षुधातुरिव मानवः ॥३७॥

धर्म्मसमीरसङ्घासः प्रास्य नैया तनूतरिः।
संसारसागरोत्ताल-कल्लोलैर्न विहन्यते ॥३८॥

शैशवे साधिता शिक्षा वर्त्तते पुरुषायुषम्।
वल्लीवृततरोर्बाल्ये तल्लक्ष्म चिरमक्षयम् ॥३९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शिक्षया खलु लोकोऽयं प्राधान्यमुपगच्छति ।
रोचिरेव हि रत्नानाम् उपलेभ्योऽतिरिच्यते ॥४०॥

अनुकार्य्यत्वमाधातुं यतेत नानुकर्त्तृताम् ।
राममेव हि संस्तौति नटं नास्याभिनायिनम् ॥४१॥

यं यं प्रार्थयते लोकः तं तं सन्दर्शयन् गुणम् ।
अत्यच्छः शिक्षया याति नृणामादर्शतां नरः ॥४२॥

उपकारी न बन्धूनां नापकारी च वैरिणाम् ।
स्वकार्य्याशक्तः परवान् शवस्योपैति तुल्यताम् ॥४३॥

तर्ज्यमानोऽपि संसत्सु प्रसादमभिलाषुकः ।
पराधीनविड़ालोऽयं खादत्युत्कोचमूषिकम् ॥४४॥

परप्रयोजनाधीन-वृत्तिः परपदं लिहन् ।
परार्थं जागुरूकस्व शुनकः परवनापि ॥४५॥

उच्छिष्टप्रार्थिनः सिंहात् ऐहिकादन्यजन्मनि ।
स्वातन्त्र्यार्थं हतः श्वापि श्रेयान् मानुषपूर्वकम् ॥४६॥

स्वभीतान् प्राणिनः कुर्वन् वृत्तिमान् स्वयमर्ज्जितैः ।
आश्रयन् गहनं दुर्गं धन्यः पुरुषकेशरी ॥४७॥

धर्म्मः समुदितः सोऽयं कैशोरे त्वयि वर्त्तते ।
उद्यत्येव हि शोभेन्दौ गुणो नापेक्षते वयः ॥४८॥

हित्वा हेतुमनर्थानाम् अविद्यामिव वैरिताम् ।
तदास्पदात् स्थितो दूरे मुक्तात्मा प्रकृतेरिव ॥४९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चिरशान्तमहाऽमित्रः मकरध्वजवृत्तिमान् ।
रामाभिलषितासक्तिः अद्वितीयोऽधुना भवान् ॥५०॥

इत्यालप्य द्विजन्मासौ जन्मावधि यशस्विनम् ।
सुस्पर्शमस्पृशत् पाणेः शीतलेन तलेन तम् ॥५१॥

ततस्ततमहानन्दं सुचिरं रुचिरं वचः ।
स्मरन् स्मररुचिर्विप्रम् अदः समदमूचिवान् ॥५२॥

तवास्वाद्य सुधास्वादां सूक्तिं युक्तिसहामिमाम् ।
कृष्णोऽपि विशदात्मास्मि प्रक्षालितमनोमलः ॥५३॥

खगोऽपि कानने कौति कीचकोऽपि प्रकूजति ।
वक्ति यः परभावज्ञः स वक्ता भक्तिभाजनम् ॥५४॥

द्विजः परभृतः स स्याद्यस्योन्मादयति स्वनैः ।
स्वतन्त्रः स द्विजो यस्तु तैरेव शमयत्यलम् ॥५५॥

असम्पृक्तः परो बन्धुः वलं निर्भर्त्सति रक्षकम् ।
अनाचार्य्यो ज्ञानदाता यथेष्टं यो हितं वदेत् ॥५६॥

अस्मिन् संसारकान्तारे शुभपादपमर्द्दिनम् ।
वागङ्कुशो निगृह्णाति मनोदन्तिनमुल्वणम् ॥५७॥

प्रतिभानुगृहीतस्य शिक्षा नोपैति योग्यताम् ।
तपने राजति व्योम्नि नहि दीपमपेक्षते ॥५८॥

सर्वं निविशते वस्तु सूक्ष्मा सूचिरभिन्दती ।
अतपन्ती रवेर्मूर्त्तिः प्रतिभा भासयत्यपि ॥५९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनुक्तामपि सामर्थ्यात् पदवीमवगाहते ।
प्रतिभा नरमादाय शिक्षितेव तुरङ्गमी ॥६०॥

सर्वैरदृष्टसञ्चूर्त्तिः अन्तरप्रतिवासिनी ।
अश्रान्तगत्याप्यश्रान्ता प्रतिभोपैति सज्जनम् ॥६१॥

अविशन्नपि तत्त्वेषु तीक्ष्णेन मतितेजसा ।
भासयत्यखिलं विद्वान् भास्वानिवोदयं गतः ॥६२॥

शून्यमापद्यमानोऽपि परार्थमनिशं भ्रमन् ।
न केन स्तूयते विद्वान् शान्तमूर्त्तिस्तमोनुदः ॥६३॥

उच्चैर्वादोऽयमस्मासु क्षुद्रेषु युज्यते न ते ।
मण्डूके करिसाम्योक्तिः भङ्गीभेदेन गर्हणा ॥६४॥

हितमस्मादृशान् वक्तुम् उपस्थानं भवादृशम् ।
आलोकनाय लोकानां भ्रमतीन्दुस्तमोपहः ॥६५॥

इत्यालप्य व्यरंसीत् स नताननसरोरुहः ।
श्रोतुमन्यां ततो वाचं व्यग्रता-पिशुनेक्षणः ॥६६॥

ब्रुवतः स्वरमाधुर्य्यं विभाव्य च दृशोः श्रियम् ।
तासां वाचामलक्ष्यस्य ब्राह्मणः पुनरालपत् ॥६७॥

लोकेऽस्मिन्नातिदुर्लभाः अर्थाः परिजनाश्च वा ।
गतः पुनरनावर्त्ती समयो हि सुदुर्लभः ॥६८॥

अधिका मेऽभवन्नब्दा अविदन्तो विदन्त्यदः ।
वस्तुतस्ते न वर्द्धन्ते क्षीयन्ते हि शरीरिणाम् ॥६९॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नानाभावां विजानानः ईदृशीं जागतीं गतिम् ।
न केवलोपदेशाय देशेऽस्मिन् गतिमादिशम् ॥७०॥

विदर्भाधीशितुर्धन्या कन्या कन्यासु मन्यते ।
व्याख्येया सा यया सम्यङ्नेक्ष्यते वागमूदृशी ॥७१॥

नापि स्यादुपमेयान्येया समानविषया हि सा ।
अद्वैतत्वादसामान्यात् जगत्स्वेषा विलक्षणा ॥७२॥

यच्च यदिन्द्रियग्राह्यं तत्तु तेनैव तायते ।
व्यक्तीभवति वाङ्मात्रात् न रूपं सम्यगात्मनि ॥७३॥

आहरन्त्योः परं रूपं दृशोर्यदि कृतार्थता ।
तस्या एव तदा रूपं साक्षात्कृत्येति मन्यते ॥७४॥

अस्थानं नीयमानेव समीरेण तरङ्गिणी ।
नितान्तचञ्चला बाला प्रेषयामास मामसौ ॥७५॥

विकसन्नलिनीकान्ता सरसी च नवाङ्गना ।
सारस्य वयसः पातात् शान्तापि तरलायते ॥७६॥

सतो स्वतः प्रैति पतिं स्वयोग्यं
मुधायते तत्र गुरूपदेशः ।
मन्दाकिनी शैलपतेर्निपत्य
ययावजस्रं स्वयमेव सिन्धुम् ॥७७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पात्रस्य ते पत्रमपत्रपाकुला
ददाविदं रागनिदर्शनं मया ।
वल्ली विलोला नवसूनशालिनी
विकीर्य्य गन्धं श्रयते हि पादपम् ॥७८॥

इत्यूचिवानुचितमेव यदा प्रदाय
शोणोत्पलामलकरे लिपिमास्त तूष्णीम् ।
उच्चाशयाकुलतया गुरुशङ्कया च
शौरिः स्म वाचयति तां ललिताक्षराङ्काम् ॥७९॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे
महाकाव्ये संलापो नामो
अष्टमः सर्गः ॥०॥

——:०:——

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## नवमः सर्गः ।

———:०:———

स्मरसुन्दर ! स्मरणमात्रवल्लभ !
रमणीप्रियातिरमणीयसद्गुण ! ।
शशि-चन्द्रमः-सम- यशोऽतिविक्रम !
हृदयास्वरे पदयुगं निधेहि मे ॥१॥
विनिवेदने गुरुषु गौरवक्षतिः
स्वयमर्थने चपलता च धृष्टता ।
त्रपया स्थितिस्तु परमात्मवञ्चना,
वद नाथ ! किन्नु करणीयमत्र मे ॥२॥
गलितत्रपामलमलभ्यलालसां
वद मां तथापि परमाश्रयो भवान् ।
ललना लताप्यमलमूलशालिनी
धवमन्तरेण नहि जातु जीवति ॥३॥
विधिना तव प्रविहितं हितं हरे !
इममंशमुज्ज्वलरुचे ! रुचीकरम् ।
शुनको न कोऽपि हरतामनीहया
तदहो गुहाशय ! विजानीहि द्रुतम् ॥४॥
पशुरस्मि हीनसदसन्मतिः किल
पशुपाल ! पालयतु मां तथार्थिनीम् ।
अशिशुः सती नहि यथा पशूपम-
शिशुपालपाणिवशगामिनी स्त्रिये ॥५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ललनाशतेन ननु नाथ ! नार्थितः
परिहर्त्तुमर्हसि न मामकिञ्चनाम् ।
बहुतीः समेत्य सरितः पयोनिधिः
घनवारिबिन्दुमभिविन्दते न किम् ॥६॥

पुरुषोत्तमो गुणितमः स्वलालसाम्
अबलाधमां न विगुणां विनिन्द माम् ।
कमते न किन्नु, सरमा रमा-बलिं
भुवि लालसा निरवधिर्हि जन्मिनाम् ॥७॥

बहुचारचारणगणाननेरितः
चिरभावनारचितविश्वगोचितः ।
अनिशं दृशोरविषयं गतोऽपि सन्
उपकण्ठमर्पित इव प्रभासि मे ॥८॥

ननु कृष्णचन्द्र ! समुदित्य नित्यशः
ललितेऽत्र शून्यहृदये करं किरन् ।
अनिनार्थिनं जनमिमं यशःसितः !
कुमुदं प्रमोदय चिर-स्वयाचकम् ॥९॥

त्वदधीनवृत्तिरधुनात्मना अपि
नहि कैतवादिति भवन्तमालपम् ।
प्रनिधीयते जगति यत्र जीवनं
स्वजनो न जातु किल तं हि वञ्चति ॥१०॥१

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इदमत्र रासरसिक ! स्मर स्वयम्
अधिकं ब्रवीमि भवतेऽहमीदृशम् ।
परितो हि सौरभभरे प्रसारिणि
सुमना मनागपि चलेत नालिनम् ॥११॥

अनुरागसूत्रवलितां चलाचलां
सुचिराय चारुचरणान्तचारिणीम् ।
अपरार्थितामपरगां शुचिप्रियां
वनमालिकां स्वदयितामवेहि माम् ॥१२॥

दमघोषसूनुवशतागमान्मम
मरणं वरं मरणमेव वा भवेत् ।
किमु कौमुदी वलति भास्वता धृता
मनसोऽनुकूलमिह जन्तुजीवनम् ॥१३॥

यदि नो भवान् यदुपते ! घनद्युते !
चपलामिमां प्रकुरुषे स्वचारिणीम् ।
अचिरप्रभैव भविता स्वहेतुतः
क्षणमुल्लसन्त्यपि लयं गता पुनः ॥१४॥

प्रणिशम्य कोकिलकुलस्य काकलीम्
अवलोक्य वोपचितशीतदीधितिम् ।
परिदृक्ष्यसे च परिरभ्यसे न तु
किमनङ्गवन्नु भवतोऽङ्गसंवृतिः ॥१५॥



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गृहमाश्विकेयमभिसायमागता
भजते विवाहदिवसे कुमारिका ।
इदमस्ति नः किल कुलव्रतं विभो !
तदहो ! मयापि करणीयमादरात् ॥१६॥

व्रजितास्मि तत्र ससखी परश्शतैः
परितो वृता प्रहरिभिर्धृतायुधैः ।
हर मां मनोहर हरे ! पराक्रमी
दलयन् परान् खगपतिः सुधामिव ॥१७॥

स्वविचर्वितेक्षुरसमुत्तमं विदुः
स्वयमाहृतञ्च कुसुमं परं प्रियम् ।
हरणं प्रसह्य परमं प्रतिग्रहात्
नहि विक्रमी परमुखं प्रतीक्षते ॥१८॥

ननु ! बाहुजस्य मुनयोऽनुमन्वते
प्रसभं हृतिं गुणितया गुणिप्रिय ! ।
ध्रुवमेव विश्वसिति तन्नवानिदं
भुवनं शिशिक्षयिषुरागतः क्षितौ ॥१९॥

विशिखस्य पञ्चविशिखस्य पञ्चता
मयि सम्प्रति प्रति भवन्तसुञ्चकैः ।
अनुपागते त्वयि तदेति निश्चितु
भवितातिवै भव ! ममैव पञ्चता ॥२०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति वाचयन् वचनकौशलादसौ
बहुभावभावितसुखः सतां सुखम्।
अतिदूरतः प्रथमरागतः स्वतः
विविनक्ति वोच्छ्वसिति वा स्म सीदति ॥२१॥

तिमिरान्तरे सपदि पूर्णदीपिकां
मरुमण्डले सुसरसीं गरीयसीम्।
स्वयमर्थिनीं प्रथमयौवनेऽबलां
सशरीरनाकगमनं नृणां विदुः ॥२२॥

अपि संवरीतुमभिलाषिणो हरेः
प्रविकस्वरं स्मितमभून्मुखाम्बुजे।
सुगभीरतागलमुदस्य हि द्रुतं
हृदयाम्बुखे स्फुरति भावनिर्भरः ॥२३॥

अपरोक्षगामिव समीक्ष्य रुक्मिणीं
विकृतोऽभवत् स लिपिलाभमात्रतः।
ददती लिपिं हृदयमस्य साहरत्
गुणगौरवश्रवणदत्तजीवना ॥२४॥

विषयं विदर्भतनयामनीषितम्
उररीचकार स हरिस्तदा हृदा।
विजहाति किं जलधिरागतां नदीं
व्रततिं न वा तरुरपेक्षते श्रिताम् ॥२५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति चेतसा निजमतं विहसति
स्मितसुन्दरावनतवक्त्रमच्युते ।
पुनराननहिजनिरैष पेशलं
नहि बुद्धिमान् परमनो न बुध्यते ॥२६॥

अलमच्युताच्युतमते ! विकल्पय ते
उपपाद्यतां नृपसुताकृतार्थता ।
भवनान्तरे स्वयमुपेतकौमुदी
वद केन नाम वसनैः पिधीयते ॥२७॥

परमोज्ज्वलां विमलवर्णशालिनीं
नृपभोगयोग्यसुभगामतिश्रियम् ।
अपि रुक्मिणीं पुरमचेतनामिमां
प्रविदाङ्करोतु ननु चेतनान्तु ताम् ॥२८॥

इयमुत्तमापि नगरी गरीयसी
नहि कृष्ण ! योग्यरटहिणीं विनाधुना ।
सुरसापि चारुसरसी महीयसी
नलिनीं विना न खलु पुष्यति श्रियम् ॥२९॥

भविता च यातिचिरमर्द्धदेहिनी
परिचीयतां प्रथममेव सा गुणैः ।
असकृन्मृदोऽपि घटिका परीक्ष्यते
क्रयणेऽङ्गुलीप्रहरणैस्स्व वारिभिः ॥३०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुरसेव कृष्णा! वसुधातले सुधा
प्रियदर्शनेव परिपूर्णचन्द्रिका।
ननु सा च सा च ललिताऽबला सती
विषयेष्वियं किमपि वस्तु वास्तवम् ॥२१॥

मुखपुष्पिका स्तनफला सुकोमला
गुणसौरभा च विषयोष्णवारिणी।
ललिता सुवर्णललिका कुलाबला
रससेकतः क्रमिकपुष्टिशालिनी ॥२२॥

प्रियभाषिणी गुणवती नवा बधूः
भजते सुदुर्गतमपोह यं जनम्।
अमरावतीं वत स सञ्चरेत चेत्
न तदा ततो भुवि विभाति वालिशः ॥२३॥

शततापितापि न भवेद्विरूपिका
मुहुराहतापि नहि भङ्गमेति वा।
प्रभवे सदा शुचिरुचिः प्ररोचते
ललना सती च कनकस्य मालिका ॥२४॥

विदधाति वेद इव नीरसं गुरुः
अपि नीतिवत् सरसनीरसं सुहृत्।
सरसं कलत्रमिव काव्यमुत्तमं
परलौकमैहिकमिति द्वयं क्रमात् ॥२५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परमुन्नयन्त्यलमधोगतं जनं
विषमेषु दुःखितहृदां प्रसादिनी ।
कुलदेवतेव कुलसम्पदां प्रसूः
गृहिभिः सदैव गृहिणी निषेव्यताम् ॥३६॥

भजते करी जलजिनीं जलं मथन्
दिवसश्रियञ्च तिमिरं हरन् हरिः ।
रिपुसैन्यचक्रमवजित्य रुक्मिणीं
सहकीर्त्तिमाहर हरे ! पतिंवराम् ॥३७॥

लिपिमात्रतोऽस्य सुमहोत्सुकं मनः
वचसा ननर्त्त निपुणद्विजन्मनः ।
समयोपयोग्यनुगुणञ्च भाषितं
त्वरितं तनोति हृदये तड़ित्क्रियाम् ॥३८॥

इह मन्त्रकर्म्मणि भवान् पुरःसरः
प्रणवो ममाद्य परमार्थवाचकः ।
प्रयतिष्यते भवदुदीरिताध्वनि
गिरमित्थमस्य हरिरन्वमोदत ॥३९॥

अथ दारुकं निभृतमाजुहाव सः
प्रथमप्रचारकृतदोषभीरुकः ।
त्वचिसार उत्स्वनति मारुतं स्पृशन्
अभिव्रध्य गर्जति घनस्तु सावधान् ॥४०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तमुपागतं स निदिदेश सारथिं
रथयोजने प्रचुरयोजनं गमी ।
नतपूर्वकायमयमप्युपागमत्
तदमुष्य कार्य्यमिव पारितोषिकम् ॥४१॥

विविधैर्निजैः प्रहरणै रणाक्षमैः
तुरगैश्चतुर्भिरसितैस्तरस्विभिः ।
सुखभोग्यपञ्चषदिनप्रवर्त्तिभिः
बहुवस्तुभिश्च समलङ्कृतं नवम् ॥४२॥

प्रणमन्नरं हरिरभीष्टदेवतां
सुखजन्मना सह तथा तदाश्रया ।
प्रतिकर्म्मचारुविकसत्कलेवरः
कृतसज्जजैत्ररथमारुरोह सः ॥४३॥ (युग्मकम्)

अथ संक्षिपन्निव दिशां कदम्बकम्
अभिवर्त्ति पत्तनमिव ग्रसन् मुहुः ।
समगाज्जवात् खगपतिं हसन्निव
परितर्पयन् सरथिसारथी रथः ॥४४॥

प्रथमः कविः स च पराशरात्मजः
स्थविरः स्थिरो वदतु तं जवं कथम् ।
भवभूतिरास्तु तु समासचिन्तने
कियदामनेत् स तु शकुन्तलाकविः ॥४५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सविधस्थपार्श्वतरवः क्षणं पृथक्
अनुवर्त्तनास्तु वनवीथयः समाः ।
अभि दूरगाः स्वमभिधाविनो नगाः
सुजवं रथे दृष्टशिरे प्रधावति ॥४६॥

प्रथमा शताङ्गमभितो वनावली
प्रदधाव पृष्ठत इवातिरंहसा ।
पुरतः कियद्दूरवहिता द्वितीयिका
प्रयती प्रदक्षिणमिवाभ्रमत् पुनः ॥४७॥

अपरस्परप्रमिलिताः स्थलान्तरे
वृतिभिर्वृते रथपथस्य पार्श्वयोः ।
नवपल्लवालिविलसत्पलाशिनः
हरिदश्मनाञ्जुघुणिरे सुखादिव ॥४८॥

रथवर्त्मनासुभयतो नतानताः
शतपर्विकादिलवणराशयोऽसितैः ।
कुशकाशसूननिकरास्तु पाण्डुरैः
वसनैर्वृता इव ययुः समानताम् ॥४९॥

युगपत् सहस्रधनुषोऽन्तरे रवं
निशमय्य तन्निहितलोचनो जनः ।
अवलोकयन्नभिमुखे रथं कियत्
स्तुतवान् सहस्रधनुषः परन्तु तम् ॥५०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दिवि सप्तसप्तिरपि सप्तसप्तिभिः
रथमुद्व्रजन्नतिरथस्य तं रथम् ।
अवलोकयन् जवमलौकिकं किल
समनुद्रवन्ननुचरो बभाविव ॥५१॥

हरिदारुकौ चिररथानुशीलिनौ
जवगौरवात् प्रहर्षितौ बभूवतुः ।
द्विजनिस्तु वेगजनितार्त्तिरच्युतत्
विधुताच्युतो निजपदात् पदे पदे ॥५२॥

उपदिश्यमानमयनं द्विजन्मना
बहुचत्वराटविनगान्तरास्थितम् ।
समतिव्रजन् व्रजपतिः परेद्यवि
स विदर्भदेशमगमद्दिनच्चये ॥५३॥

बहुलोकजैः कलकलैः सुदूरतः
परिसूचितां निविविशे पुरं हरिः ।
निजकार्य्यवार्य्यपरकार्य्यदृग्जनां
मकरस्तरङ्गमुखरामिवापगाम् ॥५४॥

कुशलाशिषा मुखजनिर्जनार्द्दनं
परिवर्द्धयन्नुपवने निवेशयन् ।
समसुत्सुकेन मनसास्य यातवान्
ललनाकुलाकुलविदर्भजालयम् ॥५५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रमितुं स्खलच्यमभिलक्षयन् हरिः
अतनुं तनूमपि विनिह्नुते रहः ।
स इमं प्रवादमभजत् प्रमाणयन्
नृपकन्यकामभिलषन् लतालयम् ॥५६॥

अथ दारुके सहरथे वहिर्गते
न बभूव दूरगतया स निष्क्रियः ।
भ्रमया तिरोहितदृशामविद्यया
परमात्मवन्नयनगोचरो हरिः ॥५७॥

आकर्षिणीमज्ञजनस्य सद्गुणां
निदानभूतां महदागमस्य च ।
मुक्तः पुमान् वा प्रकृतिं वनद्युतिं
स्वभोगयोग्यां सजलामलोकयत् ॥५८॥

असितनलिननीलो भक्तसंसक्तशील:
कनकरुचिदुकूलः कान्तिकान्तानुकूलः ।
घन इव घनचञ्चद्विद्युदुद्यानमध्ये
निविड़तिमिरपुञ्जाकाशकाशे चकाशे ॥५९॥

आलीनां ललितालिभिः समवयोरूपाभिरन्तःपुरे
योग्याकल्पविकल्पनेन मुदिताऽप्येकान्तचिन्ताकुला ।
आयान्तं द्विजमन्तिके हरिकथाभावं निधायान्तरे
साशङ्कञ्च सहासुखञ्च ससुखं राजात्मजालोकयत् ॥६०॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
कृष्णप्रयाणो नामो नवमः सर्गः ॥०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# दशमः सर्गः ।

—:०:—

अथान्तिके कञ्चुकिनः कथञ्चन
सखीसभायाः सभयं जगाम सा ।
जलभ्रमिभ्रान्तसरोजिनीगणात्
प्रतीरमिकेव रयान्तरेरिता ॥१॥

यदा पदान्तेऽस्य ननाम नाम सा
तनूसवर्णातिसुवर्णभूषणा ।
तदेत्यवादीत् स विदन् विदर्भजे !
प्रसद्यतामद्य शुभं शुभे ! तव ॥२॥

ददर्श विप्रोऽथ गभीरचिन्तया
नृपात्मजाया मलिनं किलाननम् ।
तनोति चिन्तान्तरगापि सन्ततं
दृशोर्ललाटे लपने च लक्षणम् ॥३॥

विशालशङ्कादहनस्य नीरस-
हृदिन्धनं सन्दहतो निरन्तरम् ।
उदीर्णवाष्पेण मलीमसाननां
हसन्नवोचन्नृपनन्दिनीं द्विजः ॥४॥

मनोरथस्ते सरथः समागतः
वधूपुरोद्यानतलेऽत्र विद्यते ।
लिपिर्वयस्येव विशुद्धवर्णिका
निकामकामं कुरुतेतरां प्रभुम् ॥५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जगन्ति तावन्ति भवन्ति सन्ति च
विशन्ति वाश्रित्य युगे युगेऽपि यम् ।
मयाऽनयास्मिन् दयया त्वदीयया
कृतं कृतार्थं नयनं तदीक्षया ॥६॥

अदारयिष्यत् कुलिशं यदि क्षितिं
महामहेन्द्रो यदि वाऽप्लविष्यत ।
तदाऽभविष्यच्चकिता तथा न सा
विशृङ्खती विप्रवचो यथाऽभवत् ॥७॥

तमागतं विप्रमवेक्ष्य दूरतः
शनैश्शतस्त्वश्चतुराः किलालयः ।
अनुद्रुतास्तन्निखिलं न्यशीशमन्
किशोरकाले सुलभं हि कौतुकम् ॥८॥

धिनोतु पद्मापतिरेष पद्मिनीं
ततः स कामः फलतात् सुखेन वाम् ।
जहातु वृष्टिं भुवि शस्यदां घनः
वदन्निदं प्रास्थित सुस्थधीर्द्विजः ॥९॥

स्वयं निशम्यापि चिरात्तविप्रतः
प्रियाप्रयाणं निरणायि नो तया ।
न सम्भवा सम्पदपि प्रतीयते
प्रतीयते त्वापदसम्भवापि हि ॥१०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अये ! सरस्वन्तमियं तरङ्गिणी
चलन्त्यविश्रान्तरया पुरोमुखी ।
न जन्मभूजातलताः प्रतीच्छति
किमु प्रमुक्ता प्रथमात् कृतज्ञता ॥११॥

विना मृणालीमलिना सरोजिनी
विहाय सन्ध्यां शशिना च शर्वरी ।
चिरानुगत्यं प्रतिहत्य युज्यते
कृतज्ञताऽस्माज्जगतो गतैव किम् ॥१२॥

विलक्षणं प्राप्य सुखार्णवं नवं
कथं कथां नः सदृशां स्मरेः स्वतः ।
न किञ्चिदस्मादपरं चतामहे
सुनीरसा नः सरसा स्मरिष्यसि ॥१३॥

चिराय युक्तैधि मनोहरे हरौ
घनं घनाङ्के चपला पलायताम् ।
नरेन्द्रपुत्र्याश्चिबुकं दधत्यदः
समुन्नमन्ती मुखमालिरालपत् ॥१४॥

निशम्य सम्यग्वचनं सखीरितं
स्मितानना राजसुताऽवदत् पुनः ।
न कामिनी काचिदिहास्त्यमूदृशी
न या प्रियप्रेमगिरा प्रहृष्यति ॥१५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विदिग् दिगन्तश्रुतकीर्त्तिमालया
विनिर्म्मिते मर्म्मविदस्मि न स्वयम् ।
विलच्यतामेष विलच्चणो विधुः
रुचिर्यदि स्याङ्गवतोभिरादरात् ॥१६॥

करोत्यभिन्नात्मजनस्तु यां क्रियां
स्वयं कृता सेति मतं मनस्विनाम् ।
तरौ कपालं यदि युज्यते ततः
घटेत नो किं घटयुक्तिरन्तिके ! ॥१७॥

अगोचरो मादृशचेतसामपि
भवेन्मसार्थीति यथार्थमेव न ।
प्रवर्षुको वारिधरः सुदुर्लभः
पदे पदे चेत्रमसुष्य तु स्थितम् ॥१८॥

विलोलमासामवलोकनेच्छया
हरेः पुरोऽभूदधुना निदेशतः ।
ननर्त्त चित्तं मदमत्तमुल्लसत्
मनोऽनुकूलं वचनं किलामृतम् ॥१९॥

असौ नवालापललामलालसा
ततः सखीसन्ततिराततोत्सवा ।
उपासरत् संसरणाय पूरुषं
कृतप्रयत्ना प्रकृतिः शनैरिव ॥२०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुदूरयालोकमरीचिमालया
तरोस्तमिस्त्रे तलिनीकृते तले।
यमस्वसुर्नीलमिवोत्पलं जले
उपेत्य कृष्णं ददृशुर्मृगीदृशः ॥२१॥

समाङ्गमङ्गेन निजेन जोषकं
परिच्छदाशङ्कितयेव गोपयन्।
अधस्तरोर्वालहरिस्तृषातुरः
व्यपेक्षमाणो हरिणीमिवावसत् ॥२२॥

विलोक्य नालं हरिमालयोऽभवन्
द्रुतं किलालापकृती स्मराकुलाः।
विलालयत्येव महोज्ज्वलोऽबलां
हविर्न शोनं हि कृशानुसंस्तुतम् ॥२३॥

इमास्तु धृष्टास्तु न कापि रुक्मिणी
सुधीरभावा स्वयमागतास्तु सा।
अलिं किलोपैति लता न तां तुःसः
मुरद्विषेदं निरचायि चेतसा ॥२४॥

अथोदितेऽह्नि प्रथमे सखीगणैः
पराङ्गमाह स्म स वक्रया गिरा।
सरोजिनीं यः सरसाञ्च कामिनीं
न चेक्षते वह्नि हतेन्द्रियो हि सः ॥२५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तरोस्तले किन्नु भवान् स माधवः
वदस्व विद्वन् ! शुभमागतं तव ? ।
स्फुटत्वशोकं ननु माधवोऽस्मि चेत्
शुभागताद्यः शुभमागतं मम ॥२६॥

विभासि रूपेण नवीननीरदः
स्थिरायतां सा चपला चिरं त्वयि ।
द्रुतं निशान्तं विशतातिकोमलाः
उपैति वर्षं स्तिमिता भविष्यथ ॥२७॥

तव प्रिया नः प्रजिघाय रुक्मिणी
छलं तदस्मासु गिरा न युज्यते ।
न रुक्मिणी हीरकिणी च वाधिपा
सखीषु कुर्य्यादधिकं हि गौरवम् ॥२८॥

उदीर्य्यसे त्वं नरपुङ्गवो जनैः
जुषस्व पन्थानमृजुं तदत्र भोः ।
निरन्तरायं व्रजत स्थलान्तरं
द्विषाणाहतिभीतिरस्ति चेत् ॥२९॥

इहोदितः केनचनाप्यनाकृतः
विविक्तगस्त्वमतो मलिम्लुचः ।
स एष मासस्तु मलिम्लुचाभिधः
स्वयं पतत्येव विविक्तगोऽपि न ॥३०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सभाजनार्थं समुपागता वयं
कथं त्वया क्रूरधियावधीरिताः।
तदा वहिर्दर्शसभाग्रहान् विना
किमत्र मामागमते कलं रहः ॥२१॥

नरेन्द्रपुत्रीमविदन्निदन्तया
प्रतारयन्नः स्वधिया प्रतारितः।
स्तनोऽस्ति केशोऽस्ति, रमाकृतिर्हि सा
न चाधिकाङ्गी, किमु वेद्यमस्ति मे ॥२२॥

विधीयते किं खलता पदे पदे
अपद्यतामद्य सदर्थकं पदम्।
विधातुमर्हः खलतामजोऽपि न
न चास्ति भाषासु निरर्थकं पदम् ॥२३॥

वचःप्रयोगे तव दक्षता मुखे
इतः स्फुरत्यन्तरसारता न किम्।
मखात् पुरो यद्युररीकरोमि तां
परन्तु चेदिच्छति वः सखी हि माम् ॥२४॥

उपेत यामः कथयाम रुक्मिणीं
हरिः परेषां विवरानुवृत्तिमान्।
अये! किशोरीः सुदृशो भवादृशीः
विलोकयन् को विवरं नहीहते ॥२५॥



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रियं प्रियावाचिकमाचिकीर्षुणा
जिताश्व तां वीक्ष्य मधुद्विषोदितम् ।
कदाचिदर्थं प्रकृतं कृताग्रहं
न हेलया सत्पुरुषो जहाति हि ॥२६॥

सहासमाप्याङ्गमवोचदच्युतः
परा प्रगल्भा च पराङ्गमालपत् ।
विभाति वामास्वधिका हि चातुरी
सरोरुहस्वच्छलता लताकुले ॥२७॥

सखी सुखं वः कुसुमेषु वृत्तिभाक्
भुनक्ति किं वा विधुलालसा च सा ।
न साऽलिनी यत् कुसुमेषु वर्त्ततां
कुमुद्वती यन्न विधुत्वं याचताम् ॥२८॥

समन्ततः सन्ततमेव सद्गुणा
निशम्यते सा किमु सम्यगित्यलम् ।
सखी सतैले लिखिताऽसितोपले
सुवर्णलेखेव भवेद्भवत्यहो ॥२९॥

द्विजैर्वयस्या कियती नु माहृशान्
न्यमन्त्रयत् पारतरीव नाविकैः ।
अलीककोलाहललाभलोभतः
हरीननेकानिह सा समग्रहीत् ॥४०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समीरलोलं कुसुमं कृतेङ्गितं
पतन् पतत्येव बहूनि षट्पदः ।
बहून्यथैकार्थमुपेत्य लिप्सते
न षट्पदोऽसौ तु चतुष्पदो ध्रुवम् ॥४१॥

मधुव्रतेभ्यो ददते न चेन्मधु
स्फुटन्ति पुष्पाणि कथं तदा मुधा ।
करोतु मन्धङ्करणं निजं रजः
दुराग्रहभृङ्गस्य दृशोः स्फुटन्ति हि ॥४२॥

सरागपुष्पप्रसूनमनोमुखं पिबन्
रसान्तरोऽन्धोऽपि वरं प्रसूनलिट् ।
विहीनमूर्त्तेर्मनसः चमेत कः
मुखं प्रपातुं ननु गोपबालक ! ॥४३॥

अतीव ते दर्शनशक्तिशालिता
विलोकते पण्डितमानिता तु न ।
न गोपरागैरहमन्धतां गता
नवा गवालापकलासुपेशला ॥४४॥

तडिल्लतेव प्रभया प्रभासते
घनेऽन्धकारेऽत्र भवाङ्गगोपिका ।
तदत्र वृन्दावनशाद्वले नवे
चरेच्छया भद्र ! भवामि गोपिका ॥४५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इहैकरम्भोपरि किञ्चिदुन्नतं
किमद्भुतं राजति मोचिकायुगम् ।
नवानराणां खलु मोचया कियत्
फलं फलेनैव विपाकचारुणा ॥४६॥

करं किरत्येव निशाकरः स्वयं
स्ववीक्षणोल्लासिकुमुद्वतीं प्रति ।
अतः शशाङ्कः सुचिरं कलङ्कितः
विधुन्तुदस्तं ग्रसते च भूयसा ॥४७॥

न धीरता धृष्टतयाऽनया हरेः
अभाजि भार्य्यासमभावकेलिषु ।
पुरःसरीकृत्य यतीः सरिद्वरां
प्रष्टह्य कुल्या जलधिर्न निन्द्यते ॥४८॥

स्पृशन् प्रसूनं छदनं समीरणः
जहाति नो वा कुमुदं विधुस्तृणम् ।
न शैवलं वापि सरोजमस्थिमा
भवन्ति भूम्ना हि समाः सहायनाः ॥४९॥

प्रियावयस्यास्वपि यो न चाटुकृत्
न कौशलं तस्य कलासु किञ्चन ।
न पद्ममाध्वीकमलिः पिबन् यदि
धुनोति पत्रं ननु पङ्गुरेव सः ॥५०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सकेलिसंलापविलासहासतः
यथार्थमर्थं विरतोऽर्थयन् हरिः।
नवं रसं सारसिनीश्रितं जहत्
कलङ्कितं पङ्कलवैः क इच्छति ॥५१॥

प्रियां जिह्रीर्षन् बहुरच्चिरचितां
अथो जिघृक्षन् सुपथं निरापदम्।
विशङ्कमानो विपदं पदे पदे
सखीः प्रियाया इदमन्वयुङ्क्त सः ॥५२॥

सरोजशोभा विमला न शीतला
शशाङ्ककान्तिस्तुहिना न निर्म्मला।
चिरं निरङ्का नितराञ्च शीतला
प्रलोभनीयैव पतिंवराऽबला ॥५३॥

स्वयंवरां वीक्ष्य वराङ्गनां गुणैः
निजैर्मनोहारिसुधासुधाकरीम्।
समस्तरत्नं परयत्नमार्जितं
चिरं प्रतस्थे गिरिकन्दरान्तरे ॥५४॥

जनाननोद्गीतगुणामृतं पिबन्
यदीदृशं संह्रषितोऽस्मि दूरतः।
कियन्न जानेऽथ समक्षवर्त्तिनी
विलासिनी मे प्रमदं किमाचरति ॥५५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिस्रुताभिर्गुणवीचिवीथिभिः
प्रमाथिनीभिर्बलवन्मनोधृतीः।
पुरीमिमामागमितः क्षतस्थितिः
परिप्लुतो भूमिरुहस्तटीमिव ॥५६॥

प्रमथ्यमानादुदगात् सुधाम्बुधेः
निखायमानादपि रत्नमाकरात्।
उपैति हन्त स्वयमेव मामियं
श्रमं सुदैवं समपेक्षते हि न ॥५७॥

बिभेमि नो भीमभटावलेर्बलात्
नवा विशङ्के छलनञ्च मानिनाम्।
अनेकजन्मार्जितसत्क्रियावशात्
भवेदियं लोचनगोचरो यदि ॥५८॥

विनिघ्नतारीन् महतो मनस्विनो
स्वमोजसा हारयितुं मयादिशत्।
स्वयं निरस्यंस्तिमिरं तमोनुदः
नतो हि लोकैर्दिवसश्रियं श्रयन् ॥५९॥

तदम्बिकायाः क्व नु सद्म विद्यते ?
कुतः कदा याति पुरा च रुक्मिणी ?।
उपेत्य यादःपतिमीप्सया मणेः
न याति मानो यदि लाभ एव सः ॥६०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मनोऽनुकूलं लपितं हरेरिदं
निपीय हृत्सारसभाससमुज्ज्वलाम् ।
निवेशयन्त्या वदने स्मितच्छलात्
कयाचनावाचि वचस्तदीप्सितम् ॥६१॥

गुणैर्जगन्मोहन ! भीरुवल्लभ !
सखीगुणैस्ते सुखमेतदङ्गतम् ।
प्रसादसिन्दोर्भुवनैकनन्दिनः
तनोति खद्योततनुद्युतिः किमु ॥६२॥

सुहृत् प्रियप्रेमकथासु, सज्जनः
सदा सदालापकलासु केशव ! ।
क्रियावकाशेषु गुरुः, सयौवना
बधूर्भवन्तं शयनेषु चेष्यति ॥६३॥

शिशिश्चिषुस्त्वां गुरुमन्तकं रिपुः,
शिशुं स्वपूर्वी जन, आर्त्तिमान् बलम् ।
मुनिः परं ब्रह्म, मनोजमङ्गना
प्रपश्यतीयन्तु पुराणगाथिका ॥६४॥

सदा भवन्तं शशिनश्च पर्वणः
जगज्जनोऽयं निरपेक्षमिच्छति ।
सुदुर्ज्जयाद्दन्तुरजन्तुयौवनात्
कुतोऽबला त्वां चकिता चतेत न ? ॥६५॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वधूः प्रियं प्रायश एव बालिशं
स्वनिर्भरोपेत्य चिरं विषीदति ।
प्रतानिनी स्थाणुमुपाश्रिता लता
निजाङ्गभङ्गेन विधृत्य वर्द्धते ॥६६॥

चिरं कुमारी भवने भवत्वसौ
दधातु वैधेयकरे करन्तु न ।
सरित् सरस्वन्तमनाप्य शुष्यतु
वरं पदव्यामपि मा मरुं गमत् ॥६७॥

प्रियां न भर्त्ता यदि भर्त्तुमीप्सिता
निवर्त्ततां ग्राहयितुं करं पुनः ।
न चेदशक्यद्विनिधातुमात्मनि
किमग्रहीष्यत्तटिनीं तदाम्बुधिः ॥६८॥

रसेऽमृतम्, चक्षुषि चन्दनाञ्जनम्,
सुधा च वाचि, त्वचि दक्षिणानिलः ।
घनीकृतं शर्म्म च मानसेऽमले
परस्परं राजति जम्पतिद्वयम् ॥६९॥

अदृष्टमस्पृष्टमवृत्तसम्भवं
विलक्षणाकारमिदं विदेशगम् ।
परस्परं पाणिनिपीड़नात् परं
अनेकमैक्यं व्रजतीत्यहो विधिः ॥७०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वयं पतन्तीं स्वकरे सखीमिमां
कृपानिधे ! नः कृपणामुपाश्रय ।
विलोलवल्लीं विटपावलम्बिनीं
कसत्प्रसूनां विटपी जहाति किम् ॥७१॥

यथा प्रियप्रेमपरा स्वयंवरा
वराङ्गनान्या ललितापि नो तथा ।
यथा निदाघं प्रणिहन्ति दक्षिणः
तथा जलार्द्रीजनितोऽपि नानिलः ॥७२॥

विशाललावण्यजला मुखाम्बुजा
समुद्भवद्यौवनपूरशालिनी ।
कुचोर्म्मिका मुग्धमहोभ्रदुद्भवा
सुदक्षिणा दृक्शफरी सखीसरित् ॥७३॥

अनन्तमक्षुब्धमगाधमव्ययम्
अलङ्घनीयं कमलावलम्बितम् ।
समन्यकेभ्योऽप्यमृतप्रदायिनं
सशङ्कं कृपानिधिं यियासति ॥७४॥

सहोदरात्यादरदित्सितापि सा
न चेदिनाथं यदुनाथ ! नाथति ।
विना न वेदेन हि धर्म्मसंहिता
समाहितार्थं प्रथमास्वमन्कृति ॥७५॥

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

सुपक्करम्भामिव स प्लवङ्गमः
इमां समायादभिलाषुकः सखीम् ।
यतिष्यतेऽप्येष नितान्तमन्ततः
न चानभिज्ञो निजयोग्यताज्ञता ॥७६॥

असौ तु पूर्वेण नवां वनीमिमां
तदम्बिकामन्दिरमौलिरीक्ष्यते ।
मणित्विषा यत्र प्रदीपविभ्रमं
विधाय चूड़ा नव सञ्चकासति ॥७७॥

आलिः सहालिरमुना चलितार्चनान्ते
सायन्तने बलिबलैः सुमहे पथा स्वः ।
सौदामिनीमिव घनो घनलोकमध्यात्
अङ्कं नयन् हर हरे ! तिलकाङ्कितान्ताम् ॥७८॥

शशी शशकलङ्कितः समपचीयते चासिते
जलप्रकृतिपङ्कजं शिशिरलुप्तसर्वप्रभम् ।
कलङ्करहितं समं प्रकृतिचेति शश्वत्प्रभं
प्रतुष्यति विलोकयन् परमभीकरत्नं भवान् ॥७९॥

कामं कामाभिलापात् सुरसरसगिरः कर्णमस्याङ्गनास्ताः
स्वान्तं तान्तं नितान्तं नयनमतरलं कान्तितश्चाहरन्त्यः ।
आकर्ण्योत्कर्णमन्तःसरणि घनरवं मन्दगस्यन्दनस्य
क्षान्त्यायासुः परेषामवगतिविहितोत्कण्ठमस्योपकण्ठात् ॥८०॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
सखीसंलापो नाम दशमः सर्गः ॥१०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# एकादशः सर्गः ।

——:०:——

आनन्दकन्दलनिरस्तसमस्तचेष्टं
नानानिनादमधुरोन्नतवेणुनादम् ।
सप्तस्वरश्रितविकस्वररागरम्यम्
उच्चै रुदञ्चदचिरादविगीतगीतम् ॥१॥

अस्पष्टवर्ण निकरै रविनिश्चितार्थैः
कोलाहलै विंकलितश्रवणै विंशालैः ।
लोकाकुलोन्नतमदो नगरं गरीयः
चञ्चत्तरङ्गमुखरं जलधिं जिगाय ॥२॥

वाद्यं प्रवादयितुमुद्यति वाद्यकारे
निःश्रेणिकं तमनुधावति सार्थ सार्थैं ।
संवस्यमानवसनं शिशुको जनन्या
मुञ्चन्नरं निरसरत् करदत्ततालम् ॥३॥

सौधाङ्गने चरति चारुकलाकलापे
आकल्पकल्पितरुचामबलावलीनाम् ।
यूनां पणायितुमिवोत्कलिकां चिराय
रूपापणः समजनि स्वमनोऽनुरूपः ॥४॥

दीपावलीविनिहतं तलिनं तमिस्रं
निघ्नन्निशामिव दिनं विदधत् खधूपः ।
स्त्रीपुंसयोः पुरसदोः प्रमदप्रवाहैः
सतोच्चकै रभिपतन् चपलेव रेजे ॥५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बालान् विलोलललितान् वहती बुभुक्षा
यूनः सुवेशरुचिरान् सुरसान् रिरंसा ।
प्रौढ़ानवश्यकरणीयपरान् चिकीर्षा
जीर्णांश्चकर्ष च यथासमयं सुषुप्सा ॥६॥
तस्मिन्निशीथपिशुनो घनसान्द्रमन्द्रः
साकं तदुत्सवमहालहरीविरत्या ।
शङ्खस्वनः समभवत् स्वपदाद्विनिद्रान्
उत्थापयन्नपि च जागरयन् प्रसुप्तान् ॥७॥
तत्राङ्गने युवतिराजिविराजितायाः
कुन्देन्दुसुन्दरतमस्मितपूर्वमेकः ।
दृष्टिं विवर्त्तिशफरीस्फुरिताञ्चलोलां
भ्रूविभ्रमादलभत प्रणयी प्रियायाः ॥८॥
स्वैरस्वनं मशककारणकैतवेन
निर्म्माय हर्म्म्यगमिनीं विमुखीमखिन्नाम् ।
बद्धाञ्जलिः परममञ्जुलताविलासां
कान्तां न्यवीविददरं रतिदैन्यमन्यः ॥९॥
धीरोऽपि सम्मुखगतां दयितामधीरः
साङ्गोऽपि कान्तिविभवैः प्रचरन्ननङ्गः ।
दक्षेण दक्षिणतमामपि कोऽपि वामां
दोष्णा सलक्ष्यनयनः प्रजहार पुष्पैः ॥१०॥
फुल्लत्सहासलपनं चपलाक्षिपक्ष्मं
नीचैः सखीः प्रियगुणं चिरमामनन्तीम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संलापलोलमनसामबलावलीनां
पश्चाच्छनैरभिसृत्य दयितां व्रजन्तीम्।
पार्श्वान्नटन्निव नटः सुपटुः समेत्य
गण्डे चुचुम्ब चलकुण्डलतुल्यवर्णे ॥१७॥

उत्क्रम्य मोदविमनीकृतलोकसार्थान्
प्राङ् मेलनाद्युवजनाः प्रमदादमाद्यन्।
आरम्भतोऽतिवृहतः पुर एव वीजं
पूर्वं हि पूजनविधेरधिवासकर्म्म ॥१८॥

पूर्वं श्रमस्मृतिचलत्तनवो नवोढ़ाः
नात्युत्सुकाः सकुतुकास्त्रपिताः किशोर्य्यः।
आनन्दनान्वितधियश्च परास्तरुण्यः
मन्दं सखेलनमरञ्च ययुर्गृहाणि ॥१९॥

आजन्मयोगपरिशीलनया मुनीनां
नो योगबुद्धिरुदगात् कियतो जड़ानाम्।
सन्त्यज्य हन्त भगवत् किमुदाररत्नं
यस्मात् सुखं प्रभवतीन्द्रियवृत्तिरोधात् ॥२०॥

संसारसाररससिन्धुषु यद्यमज्जन्
वैराग्यमार्गमृषयो न तदाऽगमिष्यन्।
द्राक्षारसं रसयितुं रसवित् समर्थः
चिञ्चां किमर्थयति कश्चन बालिशोऽपि ॥२१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रत्नान्ययत्नसुलभान्यु पलिप्ससे चेत्
किं दूरतो मृगयतां तरुण ! स्वगेहे ।
सन्त्यत्र नीलमणि-शेवधि-चन्द्रकान्ताः
कान्तेक्षणस्तनयुगाननकैतवेन ॥२२॥

कान्तं विलासललितं शयने शयानं
वीक्ष्यावगुण्ठनवतीं विनिवर्त्तमानाम् ।
आपूर्य्य सस्मितमुखीभिरतीव खिन्नां
बाह्यात् सखीभिररर निगड़ेन रुद्धम् ॥२३॥

उत्थाय भित्तितनुलग्नतनूरनूनं
श्लिष्टा प्रियेण चकितेव निजाङ्गलीना ।
बालाकुलाऽननुगुणा भुवि जोषमास्त
किं खिद्यतीत कलिका मधु षट्पदाय ॥२४॥

नीतेऽवगुण्ठनपटे मुदिताक्षियुग्मा
निःसृतेऽधरे नतमुखी, रुदती समुन्ना ।
आलिङ्गिते वपुषि सङ्कुचिता च कान्तम्
अध्यापयन्तमिव मूढ़मतिस्तताप ॥२५॥

तन्वन्तमन्तिकगतं पृथु वक्त्रापाङ्गं
अदृष्टमिष्टमलमुद्यतदण्डभीमम् ।
कार्य्यानुसारकृतदुःखसुखं दिधीर्षुं
कान्तं कृतान्तमिव पश्यति बालवामा ॥२६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संश्यानदेहलतिकामणुलब्धशिक्षां
हारोपमां भुजयुगेन गलावलम्बाम् ।
अङ्केन सस्मितमुखीं शयनं वहन्तम्
अत्रापयद्वहिरमुं हसितं सखीनाम् ॥२७॥

चोचुम्बग्रसानवदना दयितं चुचुम्ब
सासज्यसानकरणा च मनाक् ससञ्ज ।
उत्साहिनां किमपि सिध्यति न प्रयत्नात्
सम्मर्दिताात् सुरभिरित्यपि कर्णिकारात् ॥२८॥

चेलं हरन्तमखिन्नं पुलकाञ्चिताङ्गी
रन्तारमन्तरगतं निषिषेध नैषा ।
कालं कियन्तमबले खलु भीतिलज्जे
भावेन भीषणभटेन नियोद्धुमर्हे ? ॥२९॥

रोमाञ्चसञ्चिततनू रमणं वसन्तं
पुष्प्यत्कदम्बकलिकेव नवीनभृङ्गम् ।
मन्दं शिरो विधुनती विनिवारयन्ती
सञ्जातयोगहर्षिता क्रमशः प्रफुल्ल ॥३०॥

पश्यन् गवाक्षविवरादनयोर्विलासम्
आलीगणो विकृतिमाप नितान्तमन्तः ।
चिन्ता परेण हि परं परिपिष्यमाणा
प्रादुष्करोति परकीयमुखे जलानि ॥३१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सख्यो महाहवपदे सति सन्धिबन्धे
गाढ़ोत्सवात् प्रथमदोच्चितयोः सवेऽस्मिन् ।
आरिप्सिते सुमनसः खलु दक्षिणार्थम्
आकीर्य्य धैर्य्यविधुराः स्वसवाय जग्मुः ॥३२॥

उत्कर्णमुत्कमनसो मनसि स्थितस्य
नृत्यत् स्वकीयगमनेन विशालनृत्यम् ।
कर्णे स्वनूपुरयुगेन च शिञ्जितानि
पत्युर्वितीर्य्य भवने समगात् किशोरी ॥३३॥

आमस्तकात् स्तनयुगावधिवर्त्तिचेलात्
अन्तःस्मितां निजमुखाम्बुजमापिवन्तीम् ।
धम्मिल्लफुल्लसुमसौरभलोभनीयां
द्रागुत्थितः प्रियतमो दृढ़मालिलिङ्ग ॥३४॥

उच्चुम्बर काममधरन्तु तदेकमस्याः
संश्लिष्य गाढ़मसकृत् सकृदेव तच्च ।
आसाद्य दुर्लभमिदं समचिन्ति तेन
नो संख्यया विनिमयोऽपि तु तारतम्यात् ॥३५॥

शीत्कारभिन्नदशनच्छददंशिनापि
निष्पेषिणापि कुचकोरकयोर्नितान्तम् ।
प्राणप्रियेण विदधेऽङ्गुतशर्म्म तस्याः
धन्यो मनोजमहिमा हि महान् विचित्रः ॥३६॥



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नीवीं प्रिये सपदि मुञ्चति चञ्चलाक्षी
रोमाञ्चकञ्चुकितदेहलता विलोला ।
मामित्युवाच मनसाप्युररीचकार
चेलं चकर्ष च करेण मुमोच चाल्पम् ॥३७॥

आच्छिद्य प्रच्छदपटे निहिते धरण्यां
पर्य्याकुला सपदि पर्य्यवृतद्वयदा सा ।
तस्याः प्रहस्य करियुग्मकरौ सकुम्भौ
रेजे तदोरुयुगलं सनितम्बविम्बम् ॥३८॥

दूरे प्रहाय निजमंशुकमेष तस्याः
अंसद्वयोपरिगतेन करद्वयेन ।
आच्छाद्य चारुचुचुके परिरभ्य पश्चात्
गण्डे प्रचुम्बय च कियत् पटकर्म्म चक्रे ॥३९॥

सद्यस्त्रपां विजहती प्रजहार कान्तम्
आहत्य वक्षसि कुचद्वितयेन भूयः ।
नव्योदये सति वृहत्तरुणीहरिण्योः
कण्डूयनं कुचविषाणयुगे हि दृष्टम् ॥४०॥

अन्योन्यमाचकृषतुः सुभृशं तथेमौ
अन्योन्ययोर्विविशतुर्नितरां यथोरः ।
एकं द्वयञ्च खलु तत्र तयोर्विरोधि
हन्त स्ववक्ष्वपि भवेत् क्वचिदन्तरायः ॥४१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पादाग्रयोरधरयोरुरसोश्च दोष्णोः
संयोगसङ्गततमं क्रमशो विलोक्य ।
केलीकलाऽभिनवदीच्चितयोररोदीत्
खेदच्छलादिव वियोजितपृष्ठयुग्मम् ॥४२॥

बिम्बाधरौ परिपिबन् विदलन्नुरोजौ
पादौ दधच्च युगपत् प्रपदद्वयेन ।
तस्थाश्चलाचलतनुः स रिरंसमानः
स्तब्धं पिबन्तमलिनं नलिनीं जहास ॥४३॥

निघ्नन्मनोजजवनानिलचञ्चलायां
वामाग्रपूरसरिति स्तनसैकतायाम् ।
उद्दण्डनायकतनूतरणिः सवेगं
शश्वन्मुहुश्च निममज्ज समुन्ममज्ज ॥४४॥

वैचित्र्यमत्र रतनर्मणि यौवतस्य
वेश्मे गृहे च शयने परसम्भृतौ च ।
या सप्तमी भवति या च महाष्टमीह
ताभ्यां महाय तु महानवमी चिराय ॥४५॥

अम्लान्तमुज्ज्वलरुचिं रुचिरं युवानं
नाथं विलोकितवती युवतिः सहासम् ।
पेयं पिबन्त्यपि तृषाविरतिं न लेभे
खेदच्चणेऽपि विपुलं पुलकं बभार ॥४६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चित्रप्रसाधनधनायितदर्शना सा
भासा स्वया हतशयाहितदीपहेतिः ।
ताम्बूलसंवलितबालमृणालपाणिः
सज्जं जगाम सरया त्वरया स्वगेहम् ॥४७॥

उद्गन्धिपुष्पविशिखैः प्रहितैर्युवानौ
उद्वेजितुं पुरत एव मनोभुवेव ।
विष्वग्वृतं सुरभिसाररसैश्च सिक्तं
पल्यङ्कमुच्चशयनीयतलं व्युलोके ॥४८॥

अन्योन्यमक्षियुगले नियतं स्मितं यत्
तावप्यहो विविदतुर्न तु तस्य मर्म्म ।
कृत्वा न किञ्चिदपि सञ्चितदृष्टिमात्रौ
ईदृङ्ननन्दतुरुभौ न तथा कुतोऽपि ॥४९॥

हस्तान्तरावपि निरन्तरतां प्रयातौ
सद्यो हि मध्यमसमध्य च माद्यतः स्म ।
दोषाकरः शुचिकरो भवतीह येषां
तेषां नवीनवयसां नहि किं विचित्रम् ॥५०॥

दन्तच्छदं रमयितुर्नितरां निपीय
रम्यं प्रफुल्लपने क्रमुकं ददौ सा ।
दष्टाधरा पुनरितस्तनुखण्डितं तत्
आसीसदच्च रसनादशनावकाशे ॥५१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राजीवजेन रचितं रतिमन्मथाभ्यां
नैवेद्ययुग्ममिव सत्तमशर्करायाः ।
वक्षोजयोर्युगमसौ कृतदानमुद्रः
ताभ्यां निवेदयितुमस्पृशदङ्गनायाः ॥५२॥

आस्पृश्य वीक्ष्य च घनं कठिनञ्च पीनम्
एनीदृशः कुचयुगं बलवत्तुतोष ।
नो चेद्युगं भुवि भवेदनयोः परस्मिन्
एकस्य तस्य न तुला युवतेस्तदा स्यात् ॥५३॥

संस्पृश्य शीतचुचुकं गुरुमाप तापं
उत्पीय पूर्णमधरं नितरां ततर्ष ।
आवध्य बाहुलतया दयितो युवाऽसौ
लब्ध्वा सितस्मितरुचिञ्च बभूव रक्तः ॥५४॥

श्लेषं मुहुः सरसतां बहुगाढ़बन्धं
प्रायोऽप्यलङ्कृतिमनोहरशब्दशोभाम् ।
सद्वृत्तिकं युवयुगं युगपद्विधाय
काव्यस्य सुष्ठु महतखुलनामधासीत् ॥५५॥

मञ्चोपवेशिरमणाधरपानकाले
तत्कण्ठगाद्भुजयुगादवनौस्थितायाः ।
प्राक् स्रस्तमंशुकमुपांशु कटीप्रदेशात्
साकं भुवि त्रपितयेव ह्रिया विलीनम् ॥५६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पूर्णं ततो नवरसस्य जगत्प्रतिष्ठस्य
न्युन्नोन्नतं सुविकचं कुचकुम्भयुग्मम् ।
आलोक्य लोलमनसा सहसा सहासं
तत्पातशङ्कितया पिदधे कराभ्याम् ॥५७॥

आसीदसौ प्रथमतोऽस्य विशिष्य शिष्या
विद्यां गताद्य तु रतावभवत् किलोच्चैः ।
उन्नत्यधोगतिविधौ नियतं नियन्त्री
वाञ्छेव यद्भगवतो जगतां जनस्य ॥५८॥

नग्नं तदाखिलमनङ्गवशा स्वमङ्गं
निर्वर्ण्य पत्युरपि सा वसनं निरास ।
जायापती व्यवहृती सदृशौ भवेतां
किं गोष्पतेर्गिरमिमामियमन्वधावत् ॥५९॥

अङ्काय निह्नुतकलालपितामृतः स
उत्तानमुत्तमवपुर्विनिधाय शिश्ये ।
तस्मिन् पतिष्णुरबला विकसद्विहासा
सा पद्मिनि प्रसृशुभे स्फुटपद्मिनीव ॥६०॥

आकाङ्क्षया सकलयोग्यतया च युक्ता
नित्यप्रसादमधुरा प्रियरीतिवर्णा ।
शाब्दीव चारुरचना दयितोरसीयम्
आसक्तिमाप परमासुरसा निजेन ॥६१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उत्तानशायिनि नवे तरुणीजनेऽस्मिन्
यूनां चिरादुपरि सन्तरतामगाधे।
अब्धाविवोच्चपुलिने धृतमीनचिह्ने
पीनोन्नतौ घनकुचाववलम्बनाय ॥६२॥

नीचं गतस्य रमणस्य निराश्रयस्य
ताविव पाणिविधृतौ परमाश्रयौ च।
सिन्धुं गतस्य पुरुवेगपरिप्लवस्य
कूटाविव क्षितिभृतो नतिहस्तलभ्यौ ॥६३॥

क्षीणाश्रयः श्रयति यौ समदं रिरंसुः
शुष्काननः पिबति यौ च शिशुः पिपासुः।
दृष्ट्वा च हृष्यति यतः सकलोऽबला तौ
स्वार्थं विना गुरुकुचौ दधती हि धन्या ॥६४॥

नास्ति स्तनो न च विलम्बितकेशपाशः
दूरं शिरो यदभृता बिभृयादियं सा।
मान्द्यं गतेत्युपरिगा विपरीतरत्यां
वामाः किलात्र सुतरां सुरतेऽतिवामाः ॥६५॥

सन्दीप्तकाममधुरा विधुराऽधरस्य
पाने रते च तनुदीर्घतरप्रियेण।
स्वोच्चस्थितेर्नियमतः स्वमुदीर्य कण्ठं
आश्वासिता प्रियतमा निपुणेन तेन ॥६६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आकुञ्चितोरुयुगले स्वनितम्बबिम्बं
पश्चात् प्रविश्यति करद्वितयेन गाढ़म् ।
वामा प्रिये निजभुजौ विसवन्निधाय
वल्ली जलौघ इव पाकघना ननर्त्त ॥६७॥
कान्तश्चुचुम्ब चुचुके, ललना कपोले
वस्तिं ममन्थ तरुणी, तरुणस्तदूरू ।
एकोत्सवान्तशयितं पुनरप्यनङ्गम्
अन्योन्यमीदृशमिमावुददीपयाताम् ॥६८॥
क्वचिदज इव पश्चात् सम्मुखः क्वापि चोच्चः
क्वचन च शयितः सन् क्वापि चासीन एषः ।
रमणपरमदच्चां कान्तिकान्ताञ्च कान्तां
स्वसदृशकृतवृत्तिं तोषयामास तुष्यन् ॥६९॥
फुल्लं मन्दं मलयपवनो व्याधुनोत् पुष्पजातं
पुष्पात् पुष्पाद्दिशि दिशि महासौरभं पर्य्यगच्छत् ।
वेशे वेशे नवयुवतयः सौरभं प्रत्यगच्छन्
तस्यां नव्या निशि समवसन् वा युवत्यां युवत्याम् ॥७०॥
साङ्गोपाङ्गमनङ्गमुत्सवविधौ सम्भाव्य नव्या जनाः
केलिक्लान्तनितान्ततान्तकरणाः श्रान्ताङ्गनालिङ्गिताः ।
शृण्वन्तश्च निशानिशेषपिशुनं शङ्खस्वनं शोभनं
सान्द्रस्यन्दनमन्दमन्द्रमिलितं द्रागेव निद्रां ययुः ॥७१॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये सम्भोगशृङ्गार-
वर्णनो नाम एकादशः सर्गः ॥०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# द्वादशः सर्गः ।

——:०:——

शशिनि निशामुपभुज्य निलीने
परिशिथिलांशुकशालिनि शैले ।
उरसि दिनेशमुषा नवरागा
विजनवियत्यु दियाय दधाना ॥१॥

विटपिकुलायविलीनविहङ्ग-
कलकलिलो मृदुलोऽखिललोकान् ।
सुमधुरमङ्गलवाद्यनिनादः
युगपदजागरयत् सुजवेन ॥२॥

कलकलनादितधीवरजालं
दृढमभिगृह्य तदा वरजालम् ।
झषवति वारिणि नीरदवर्णम्
अगमदुदीर्य गिरा रदवर्णम् ॥३॥

वियति वितत्य पतत्रयुगानि
भ्रमणपराः परितः किल चिल्लाः ।
अधितटमुल्लसितानणुमीनान्
द्रुतमुपगृह्य नगान्तमपप्तन् ॥४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विशति शनैः सलिलं गलशेषं
जननिकरे परिकर्षति जालम् ।
विचकितरोहितका इव धानाः
सपदि विपुप्लुविरे प्रतिकूलम् ॥५॥

अचलनलोचनमूर्त्तिरटीपि
जनतुमुलान्निभृतं प्रतितिष्ठन् ।
क्वचन बकः परमैकविलक्ष्यः
मुनिरिव लब्धसबीजसमाधिः ॥६॥

शिशुशफरीं दधतं कलविङ्कं
वदनपुटेन मुदा विरुवन्तम् ।
नभसि जयन् करटोऽपजहार
नहि बलवान् सदसद्विविनक्ति ॥७॥

उपपुलिनस्फुरितं शिशुमीनं
सरभसमेत्य पतन्तमरिष्टम् ।
द्रुपदसुतान्वितसिन्धुमहीन्द्रं
परकरटोऽनुययाविव भीमः ॥८॥

स्थिरनयनभ्रमिभिः समयानैः
परिपतनैः सहसाक्रमणैश्च ।
विहगगणो गगनोपरि राजन्
अकृत सरस्तुमुलं घनरावी ॥९॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पथि परितः परितस्तरिरे गां
प्ररुरुचिरे रुचिरेऽपि च कूले ।
च्युतिविकले विकले सलिले च
जनविसरा विसराजिनि केचित् ॥१०॥

वसनतले पृथुले पृथु रोमणि
चलति भृशं चलितं सहशङ्कम् ।
विजनपथेन पटच्चरमारात्
नृपतिचरः प्रजहार विधृत्य ॥११॥

क्व तनुतमा जनभोजनतृप्तिः
क्व तनुमताञ्च वधः प्रचुराणाम् ।
परमणिचूर्णलवैर्विमतीनां
निजनखमार्जनमत्र न चित्रम् ॥१२॥

सुचिरचलाचलमीनसमुद्गं
पुरि शतशो नृपतेरुपनीतम् ।
अतिमलिनापसदी पशुनाम्नि
प्रमदवतीव दधे यमदूती ॥१३॥

अधरचिकर्त्तिषया निगृहीतः
झटिति सहस्तरदः करशाखाः ।
उरु विदशन् विजहेऽथ कयाचित्
विधुवति कः प्रतिवैरसमर्थम् ॥१४॥

धृतकवजो बृहती दृढपुच्छ-
परिधुननैर्विनिनाशयिषन्त्याः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दृशि विचकार च भस्मनिकायं
श्वपनपराऽप्यसुचच्च तमीका ॥१५॥
क्वचिदधिवैणवखण्डगशिक्यं
स्फटिकघनानि दधीनि दधानाः ।
सुसदृशगोपजना विशिखायाम्
अभिपततो मनुजानतिपेतुः ॥१६॥
ललितचतुर्विधभोज्यपदार्थान्
नृपभवनानि बहून्युपनिन्युः ।
समवहिता हितकर्म्मणि राज्ञः
पुरु पुरुषाः प्रतिवस्तु ररक्षुः ॥१७॥
विविधमशान यथेप्सितमन्नम्
अललितमप्यलमेव ददस्व ।
अपि वसुधेशवसूनि गृहाण
स्वमतिमतानि तदा मतिमन्तः ॥१८॥
सुभगतया तुलिता किल कन्या
तदुपमिता नृपमानसवृत्तिः ।
इदमनुरूपतयातिमहः सः
तदनुगुणश्च जनागम आसीत् ॥१९॥
अथ विपदः पदमत्र भविष्यत्
किमपि विशङ्क्य कलङ्कनिदानम् ।
प्रतिविदधे पुर एव स रुक्मी
गहनगमो नहि किं श्रयतेऽस्त्रम् ॥२०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्षतशपथाः सुपथे नगरस्य
निविविशिरे पुरुषा धृतशस्त्राः ।
प्रतिभटगन्धमनाप्नुवतोऽपि
धरणिपतेः किमियं पृथु सज्जा ॥२१॥

अयमसतोऽपि जनीमुपगच्छन्
अणुमतगीतमदर्शनदर्शी ।
स्थिरतरभावुकभावुककर्म-
ण्यशिषदशेषसुभीषणसज्जाम् ॥२२॥

विकसितनग्नतनूरसियष्टिः
शुचिरुचिरुन्मृदुला च कृशाङ्गी ।
जिगमिषुमीषदपि प्रविलोक्य
वलवदकम्पयदाहितकम्पा ॥२३॥

समरशरासनधारयितारः
विबभुरुरश्छदगूढशरीराः ।
सशिवशतैकसहस्रबुधाङ्का
इव सदृशाः पुरुषा युगमानाः ॥२४॥

ग्रसितुमिव द्विषतो विवृतास्याः
धृतगुडिकाः सहचक्रशतघ्नीः ।
परि परिखां समया वरणान्ते
सुदृढमवीविशदन्तिकसैन्याः ॥२५॥

बुबुधिर एव यथा दलरावात्
अवदधिरेऽत्र तथा घनसैन्याः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न तु विविदुर्विदितागतिकन्या-
पुरविपिने हरिमद्रिगुहावत् ॥२६॥
सहगुलिकं नलिकं सुविशालं
पितृपतितर्जनिकामिव बिभ्रत् ।
निजपरिलोकनमात्रविभीत-
व्यपसृतलोकमलोकि च लोकैः ॥२७॥
अनिलविलोलनिचोलनिगूढं
नवललनोरुमभीष्य बभूव ।
कनकगदामिव कोषनिविष्टां
कुसुमशरस्य भयाज्जड़ एकः ॥२८॥
अतिचकितः परितः परिपश्यन्
असिमुपवेश्य च चर्मणि सद्यः ।
गणतरुणीमभितः समुपेतां
समलपदीषदभीप्सितमन्यः ॥२९॥
अयनमुपागतमीशनिविष्टं
शकटमतीव्यमलं प्रतिषिध्यन् ।
विचकितसूतगृहीतधनः सन्
अनुमुमुदे गमनाय च कोऽपि ॥३०॥
चतुरतमोऽथ चिरन्तनसेना-
पतिरसृजत् समितिप्रणिधायी ।
तुरगगतोऽखिलसैन्यततीनां
समवदधे सकलं किल तत्त्वम् ॥३१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ तुहिनाद्रिगुहामिव पूरः
सुरसरितः पुरमुच्चगभीराम् ।
निजनिजचिह्नचितो रथवारः
सद्धृति विवेश विशेषसुवेशः ॥२२॥

सपदि पदा पुरगोपुरवर्त्ती
विनयनयौ मतिमानपि रुक्मी ।
करयुगलेन रथस्थितिमाधम्
अदधत रश्मिमशान्तहयस्य ॥२३॥

विदितपरस्परवैभवमानौ
युगपदुभावपि नेमतुरेतौ ।
भवति समानगुरुः समनस्का
क्रियदुदिता तु तुला लघुताभाक् ॥२४॥

नृपतिमनामयमाप्तमनाः सन्
अपि शुभमागतमित्यपि पृच्छन् ।
कमपि नियोज्यममुष्य नियोज्य-
परिषदमैरिरदेष विशिष्टाम् ॥२५॥

पुरमुखतोरणनिम्नविभागे
विशति रथे जनसङ्कुलदुर्गे ।
द्रुतमवतीर्य च पृष्ठचरेण
ततिरुदसारि पथो विमनस्का ॥२६॥

ललितलयान्वितदुन्दुभिवेणु-
मुरजमुखध्वनितं कणशोऽथ ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अरणितमुच्चकवर्णैरतिदूरात्
अवहितपौरजनैरनुभूतः ॥३७॥
स कलकलः क्रमशः सविधः सन्
समसुलभां गुरुतां लभमानः ।
सममुरसा दुहितुः क्षितिपस्य
नगरमकम्पयदाहितमोदम् ॥३८॥
स जनगणः स्फुटतामुपगच्छन्
अनवरतध्वनिभिः श्रुतियुग्मम् ।
नवनृपतेर्नयनैऽतुलवेशैः
प्रमदरसैश्च मनः प्रपुपूरे ॥३९॥
अथ पृतनां सकलो विलुलोके
महितमहेभधृताङ्गपताकाम् ।
मकरवतीं तपनातपदीप्त-
तरलतरङ्गततिं तटिनीं वा ॥४०॥
अविकलपूर्णरुचिः स्वगणेन
सदृशरुचा च वृतः सुमहार्घः ।
स्रज इव मध्यमणिः शिशुपालः
समुचितसूत्रधरः समुपागात् ॥४१॥
स विपुलमण्डनमण्डितमूर्त्तिः
नवनृपतेरकरोदतिरागम् ।
स्वयमधुना च वहन् गुरुभारं
व्यधित नतानि शिरांसि परेषाम् ॥४२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधुरिह पूरयति चिरमुद्यन्
जलधिमलं कियतीमपि नाशाम् ।
समुदित एव स भीष्मकसूनोः
युगपदपूरि मनः पुनराशाः ॥४३॥

सविधमुपेयुषि चेदिनरेन्द्रे
पृथु तरसिंहनिनादितसैन्ये ।
सपदि विदर्भपतेरपि शङ्खाः
प्रतिजगृहुः प्रतिनादकृतस्तम् ॥४४॥

शिशुललनाजनमुद्विजमाना
समुदितवीरमनो मदयन्ती ।
अतितुदती श्रवणञ्च नराणाम्
असकृदगर्जदनेकशतघ्नी ॥४५॥

गमनवतीं महतीं वरसेनां
प्रथमसुसज्जितरुक्मिचमूः सा ।
अभिपतितां तटिनीव तिरश्ची
सकलकलं सरितं समगृह्णात् ॥४६॥

अगणितलोकगणान्तरयातौ
निजरुचिरोचितचारुमरीचौ ।
अधिमणि चेदिविदर्भनरेन्द्रौ
विमलमणीव शुभं शुशुभाते ॥४७॥



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परमवलोकयतः शिशुपालं
धरणिपतेः प्रमदो हृदि यावान् ।
नृपदुहितुस्तु जनाच्छ्रुतवत्याः
तदधिक एव बभूव विषादः ॥४८॥

प्रमदिहृदोरितरेतरमूर्त्तौ
अभिगमनाय परस्परपाणी ।
विरचयितुं रभसादिव सेतुं
दधतुरुभौ पुलकाञ्चितदेहौ ॥४९॥

अविरलमाल्पतोर्ल्लितेलां
दशनसितांशुततेरभितोऽपि ।
उपरि विलोलविलोचनभृङ्गं
वदनसरोजयुगं प्रचकाशे ॥५०॥

समितिसमीपमुपेतमथासुं
सुरभिसमेतमनोजसमानम् ।
युगपदवेक्ष्य ससम्भ्रममाशु
सदसिसदः सदसः समुदस्थुः ॥५१॥

पटलतलात् प्रहिता वनिताभिः
धृतरजतातपवारिणि लाजाः ।
स्थितिसमयाविदिता जनासथैः
प्रविविदिरे परितो निपतन्तः ॥५२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नरनिकराः प्रचुरं जयशब्दं
द्विज निगणाः परमाशिषमस्य ।
नवललना अतिसाधुगिरश्च
प्रति शिशुपालमजस्रमकार्षुः ॥५३॥

ललितललाममणिप्रचयेन
विरचितमासनमेष समेत्य ।
उदयशिलोच्चयशृङ्गमिवेन्दुः
सुचिरमरोचत राजसमाजे ॥५४॥

नवविपणीतरुणीगणपाणि-
विचलितचामरचञ्चलचूड़ः ।
अनिलविलोलशिरोलतिकालिः
परिषदि मेरुरिव प्रदिदीपे ॥५५॥

मणिमयमण्डनविम्बितदेहान्
कुतुककृतस्मितशोभिमुखाब्जान् ।
पृथु पृथु कान् प्रवदन्नभिवृत्तान्
स्फुटमभवत् स तदा शिशुपालः ॥५६॥

ललितविकस्वरसुस्वरशाली
महदभिनन्दितवन्दिसमूहः ।
पिक इव पञ्चमगो मधुमत्तः
नवनवगानगणैरनुवृत्तम् ॥५७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अविरलपङ्क्तिीकृतैर्जनवर्गैः
विततवितानचयैश्च दिनेऽपि ।
क्षणमभवत् क्षणदाभ्रमकारि
सतिमिरमङ्गलमाकुललोकम् ॥५८॥

सदसि च चेतसि चोपगतानां
सपदि सुहासमदुर्बहुदीपाः ।
सह सुतया जरतः क्षितिभर्त्तुः
घनतिमिरं तदगाच्चलचित्ते ॥५९॥

स्वसुखमुदोर्विधये विविधासु
क्षतिषु सतीष्वपि रुक्मिजनानाम् ।
स तु विषसाद हृदा शिशुपालः
पिशुनयते स्वमनो हि भविष्यम् ॥६०॥

भूयिष्ठभूषणविभूषितमञ्जुमूर्त्तीन्
वामागणानिव निरीक्ष्य वरं दिदृक्षून् ।
सिन्दूरसुन्दरमुखी विरलान्धकार-
चेला विलोकितुमिवोपजगाम सन्ध्या ॥६१॥

परिषदि परिपूर्णं भूरिसम्भारभारं
समुदितवरलक्ष्मीराजितं चेदिराजम् ।
प्रमुदितमति पश्यन् भीरुसारां स्वसारम्
उदयितुमिह रुक्मी रुक्मिणीमादिदेश ॥६२॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
शिशुपालागमनं नाम द्वादशः सर्गः ॥०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## त्रयोदशः सर्गः ।

——:०:——

अपरां भजन् दिनमणिः क्रमशः
विगतप्रभावमहिमा समयात् ।
अकरोत् प्रदोषमपि सन्तमसं
स्वयमस्तमाप च मलानुस्रुतः ॥१॥

नियतिं न कोऽपि जगति क्रमितुं
क्षमते विधूतपुरुषक्षमताम् ।
उपरि भ्रमन् त्रिजगतां नयनं
सविता विवेश चरमाद्रिगुहाम् ॥२॥

विलयं गते दिनपतावसकृत्
जहती दिनद्युतिरपि श्वसनम् ।
विकलस्वना मलिनकान्तिकला
सहगामिनी समभवत् सहसा ॥३॥

उदयाचलं चलति चन्द्रमसि
नवतारका मृदुलहासकृतः ।
क्रमशः प्रतिस्वमिव वेदयितुं
प्रियमाश्रयं समुदगुर्गगनु ॥४॥

सहचक्रवाकमिथुना नलिनी
सहकौशिका कुमुदिनी च तदा ।
दुदुवे जहास च समायतना
न विधेर्विधिर्भवति नित्यसमः ॥५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुरयोषितां हुलुरवैः सुरभिः
शुभगीतिभिर्विविधनादचयैः ।
मिलितः कलः कलकलैः कलिलः
सहसावरोधनगरादुदगात् ॥६॥
सततस्वनैर्बधिरितश्रवणः
जनसङ्कथामतिसमीपजनः ।
तटिनीनिमग्न इव दृष्टिकणां
कियदन्वमात् कियदपि व्यशृणोत् ॥७॥
परमम्बिकासदनगामिस्थितिम्
अभिनिःसृतां नृपसुतां प्रविदन् ।
रणपारदृश्वपृतनामभि तां
झटिति न्ययुङ्क्त वसुधाधिपतिः ॥८॥
परिमुक्तकाञ्चितञ्चितासिधराः
पथिपार्श्वयोर्निपुणसैन्यगणाः ।
मधुरद्युतन्नु परिरेफभृतः
समपङ्क्तयो हल इव द्विगुणाः ॥९॥
सुषमासमालियुगलान्तरगा
पदचारिणी सपदि राजसुता ।
मुखमञ्जरी किसलयानुसृता
नवकेतकीव सरणिं निरगात् ॥१०॥
ललनासु तामतुलनां ब्रुवती
परमाकृतिः सुकृतिजातकृता ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उदिता समच्चमवलोकयतां
समजीजनन्मनसि तर्कमिमम् ॥११॥
इयमेव हन्त कमला विमलात्
स्वपदादधो हि कमलं कमलम् ।
अबुधान् प्रबोधयितुमर्थममुं
सुचिरान्नु चारयति तत्र पदम् ॥१२॥
सुपदे स्थितान्नखविधून् दश तान्
विशदान् विलोक्य चिरचिह्नचितः ।
उषितः पराजयभयादपदे
विधुरेक एष किमु शून्यमगात् ॥१३॥
ननु वस्तुतस्त्वजड़ ! वाङ्निपुण !
कविसार्थ ! निश्चिनुत कोपमितिः ? ।
समधर्म्मवत्त्वमिति चेत् कदलीं
ललनोरुणा तुलयतेह कथम् ॥१४॥
अमुनोरुणा प्रभुरतिप्रभुणा
मसृणेन तप्तकनकच्छविना ।
पशुभोगकृत् सुकठिना विरुचिः
कदली हि कुत्सिततया दलिता ॥१५॥
अथवा विजित्य जगतां त्रितयं
सकलं स्मरेण किल भीषयितुम् ।
निहितं स्वमन्दिरमुखे कनक-
गदयोर्द्वयं न तु तदूरुयुगम् ॥१६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यत उद्भवो मनसिजो जनिभू-
समवस्तुशालियुवतीर्जगति ।
निजजन्मभूरुचिरतां गदितुं
स्पृहितास्य कार किमु वर्ण्यमिदम् ॥१७॥
अथवा यतः प्रभविता मदनः
मदनत्वमस्य किमु वाच्यमपि ? ।
जनयन्ति कारणगुणा हि गुणं
ननु कार्य्यवस्तुनि जगन्नियमात् ॥१८॥
रसनासनीकृतनितम्बयुगं
कनकाभमिष्टरुचितं मसृणम् ।
सुतरामराजदिव काममरि-
दधिरोहिणीपरिगवेदियुगम् ॥१९॥
पृथुलोन्नतौ नवनितम्बकुचौ
निखिला नुवन्त्यतितनुं न तु माम् ।
इति चिन्तयेव चिरसन्ततया
क्रमशो मध्याकृशमभूदुदरम् ॥२०॥
परितो विघुष्य जगति स्वजयं
कुसुमेषुणा किमपि विश्रमितुम् ।
कलधौतदुन्दुभियुगं निहितं
परिवक्षर्यं वक्षसि कुचौ न तु तौ ॥२१॥
सुतनुस्तनूरुहचयः सुतनोः
नतनाभितः स्तनगतः सरलः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवने स्मरस्य च विहारवने
पदवी बभाविव गतागतयोः ॥२२॥
कमलं किलोपरि मृणालमधः
स्वयमेव रीतिरिति चेत् किमियम् ।
विचरन्त्यधोमुखचलन्नलिन-
द्वयवन्मृणालयुगलं वहते ? ॥२३॥
नवपल्लवो व्रजति पल्लवतां
मृदुलं न विद्रुमदलं विमलम् ।
सुरसं न विम्बमपि वा न ततः
तुलना मृदी तदधरे मधुरे ॥२४॥
अतसीप्रसूनरुचि रक्ततलं
सुतनोः कपोलयुगलं ललितम् ।
निचितं लसत् कनकचूर्णचयैः
पृथुलं प्रवालफलमन्वकरोत् ॥२५॥
न तुला तिलस्य कुसुमेन यतः
सुदृशो नसोऽतिविषमेण समम् ।
विफलोपमा तदिह सा त्वभितः
वदनोचिता भवति येन तथा ॥२६॥
यदि दृष्टिशक्तिरसिताब्जदले
हरिणीक्षणे सरलता यदि वा ।
ननु तेन तेन च तदा विपुलम्
उपमीयतां नृपसुतानयनम् ॥२७॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मृदुमानितम्बपतितं कुटिलं
कचहस्तमस्तनिजकेशरुचिम् ।
त्रपया विलोक्य चतुरा चमरी
समभिश्रयत् समजनामटवीम् ॥२८॥

सुतनोस्तनोर्विनिहिताभरणं
निखिलं तिरस्कृतिमिवाजनयत् ।
स्फुटसारसे सहजमञ्जुतमे
परिरञ्जनं खलु विरक्तिकरम् ॥२९॥

इयमेकला कुसुममात्रकरा
पृथुका प्रसूनसुकुमारवपुः ।
बहुयोधिनो बहुविधायुधिनः
सममूमुहत् सरलयैव दृशा ॥३०॥

सुषमाप्रवाहमधुरा मधुरा
पथि संवितीर्य्य सहसा सहसा
अखिलाब्धिशक्तिमुदिता मुदिता
चलिता तदेव चपलाऽचपला ॥३१॥

अथ रुक्मिणी सहचरीद्वितय-
सहगामिनी परमभक्तिमती ।
विहिताञ्जलिः क्षितिधरेन्द्रसुता
सदनं समेत्य किल तामनुवत् ॥३२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकृतिः सती त्वमसि सत्त्वरज-
स्तमसां समानमिलनप्रकृतिः।
अवबोधयत्तव महत्त्वमलं
महदद्भुतं समभवत् प्रथमम् ॥२३॥

पुरुषेण येन चिरयत्नवता
सकृदीक्षिता गुणवति! प्रकृते!।
सविधं प्रयासि नहि तस्य पुनः
कुलकामिनीमनुकरोषि किमु? ॥२४॥

प्रसुवत्यपि त्रिभुवनं पुरुषः
वहसे च सङ्गरहिताप्यखिलम्।
गुणवर्जितापि सगुणा प्रथसे
तव तत्त्वविन्न खलु कश्चिदपि ॥२५॥

जननि! त्वया सचिवयाधिकृतात्
परमात्मनो वियदिदं समभूत्।
अथ भूतमन्यदमुतश्च जगत्
त्वमतः स्मृताखिलजगज्जननी ॥२६॥

अथवा त्वमेव परमात्मतया
विदिता स्वशक्तियुगलाधिकृता।
भजसीश्वरादिविविधामभिधां
वनपादपादिसमिताम्बरवत् ॥२७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्रिविधस्वरोच्चरितमन्त्रमयीम्
अवपुष्मतीं भगवतीं भवतीम् ।
स्वरलेशमप्यविदुषी विमतिः
शिशुरङ्गना ननु नुयात् किमियम् ? ॥३८॥

अयि कष्टकर्म्मरहितोऽखिलवित्
समयाविशिष्टविभवः पुरुषः ।
भवतीति ते सकलसिद्धिकर-
प्रणिधानयोग्य इह नैष जनः ॥३९॥

तव वाचकं प्रणवमात्रमहो !
महिला तु तन्न वदितुं च्चमते ।
अपि नासि वाङ्मनसयोर्विषयः
तदियं नभःकुसुममेव नुतिः ॥४०॥

इति ते परस्परविभिन्नधियः
मुनयोऽम्ब ! रूपमनिरूप्यमिदम् ।
अशरीरशब्दमिव दूरगतं
स्वमनोऽनुरूपमसमं ब्रुवते ॥४१॥

रणभूः पुरा तव पदं स्पृशतो
दनुजद्रुता शिवमवाप यदि ।
सुरवैरिपाणिभयगाद्य तव
प्रपदं श्रिता, मम शिवं कुरुतात् ॥४२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तव सन्त्यनन्तकजगन्ति तनौ
न जहासि तानि गुरुभारधिया।
सुमनो नितान्तमणु मन्निहितं
पदसारसात् किरसि किं विरसा ॥४३॥

मृदुबाल एव बलवानपि सः
कथमुत्तरेत् प्रचुरवीररणात्।
विहरन् पुरन्दरदिगङ्कतले
तिमिराणि हन्ति नु कियन्ति रविः ॥४४॥

इह नो हरिर्यदुपतिर्यदि माम्
अथवा स्पृशेत्तृषितचेदिपतिः।
त्वमतः सतीत्वविगमान्न सती
शिरसां मणिः किमु पुरा व्यथसे ? ॥४५॥

पदपङ्कजं हरिरिह प्रददौ
इति भाषितं न खलु विश्वसिमः।
कमलाकरान्तरविहारिकरी
न करोति दृष्टिमपि वृष्टिजले ॥४६॥

अनुपागतं हरिमुपागमय
ननु शक्तिरूपवति ! भक्तिनतम्।
कलहायमानमधितिष्ठ हरिं
त्रिदशद्विषामिव पुरा समरे ॥४७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनलानिलाम्बरधरासलिलं
सकलं किल त्वमसि देवि ! जगत् ।
अनुरूपरूपनिकरैरिमकैः
अनुकूलयस्व कुलकुण्डलिनि ! ॥४८॥

अतिचण्डचण्डहतिहेतुतमः
तव चण्डिमा भजतु चण्डि ! हरिम् ।
सुकुमारनूतनतनुः क्व हरिः
विकटा भटाः क्व च नु लौहघनाः ॥४९॥

लभतामजीवनिमसावसमः
कमिताद्य मां विमतिचेदिपतिः ।
सवदक्षिणामपजिहीर्षुमलं
न जनङ्गमं प्रहरतीह हि कः ॥५०॥

जगदम्बिकापदसरोजयुगे
भ्रमरायितं विदधती हृदयम् ।
युगपद्विषादसुखमध्यगता
तदगारतो विनिरगात् सुदती ॥५१॥

हरिरैष्यतीति महती मुदिता
क्षणमुच्चफुल्ललपना समगात् ।
कथमैष्यतीत्यतिविषादवशात्
मलिनानना च विकला न्यपतत् ॥५२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अभितो हतापि धृतशस्त्रचयैः
विभयाश्चकार पथि रथिभटैः ।
चलिता समेन च चलद्गमना
विमना मनाक् स्तुतिमतीतवती ॥५३॥

चपलामिव प्रचलितामसुकीं
समबोधि नाप्यवहितः पुरुषः ।
सुषमा सुरा च रसगौरविणी
जनचेतनापहरणी सुसमा ॥५४॥

नृपकन्यकारुचिरतानुभवात्
जनचक्रमालिखितवद्विबभौ ।
स्थलमोट्टगध्वनि बभूव यथा
क्षितिपाति कत्तृणमपि व्यरणीत् ॥५५॥

हरिरन्तरेऽत्र समदं चकितं
सविशङ्कमप्यनुरथं प्रचलन् ।
क्वचिदुज्झितध्वनि शनैः क्वचन
सजवं ययौ तदयनाभिमुखः ॥५६॥

पथिपार्श्वतः पथि रथोपहितः
रभसादुपेत्य घनसैन्यततेः ।
अनुतो रराज रजनीशकरे
इव दीपधामनि स नीलमणिः ॥५७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रयती नरेन्द्रदुहिता सुहितं
सुचिरान्मनोरथशतेन रथे ।
चकिता विलोक्य किल विश्वसितुं
हरिरित्यसौ न सहसाऽसहत ॥५८॥

मिलनागमे नयनयोरनयोः
युगपन्मनो बलवदुच्छ्वसितम् ।
तटिनीप्रपातसमयेऽम्वु निधौ
उभयोरिवातिजवमोघयुगम् ॥५९॥

चिरचिन्तितं हृदयदैवतवत्
पुरु रूपमङ्गतमसेचनकम् ।
अवलोक्य लोचनसुधाञ्जनवत्
परिचिक्यतुः शुभनुभावुभयोः ॥६०॥

पलमात्रदृष्टिकलया सकलं
चिरजीवभावमितरेतरयोः ।
वदतः स्म तौ हि निपुणं नयनं
वचसामगोचरमपि प्रथते ॥६१॥

गुणसंस्तवात् सुचिरमङ्कुरितः
सुदृशा समक्षमसुनेक्षणतः ।
उदितः स्मिते हृदयराग इव
व्यतनोत् प्रभामधरयोरुभयोः ॥६२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ सावलोकनसमुत्सुकहरी-
श्रयमानदेहलतिका सरला ।
हरिमाधुरीसमुदयोपशमात्
उदतोलयन्नलिनदक्षकरम् ॥६३॥

अथवातिमञ्जुलममुं जगति
परिरभ्य साथ कमभूत्स्मयनम् ।
किमहं जडः ? पुलकजालचितः
इति चिन्तयन्निव करोऽभ्युदितः ॥६४॥

जगति स्वयौः सुषमयाऽसमया
विमलीकृतान् हृतचितश्चतुरः ।
पुरुषान्निहत्य रथसम्मुखतः
स पुरःसरः समसरत् सरथः ॥६५॥

किमयं स्मरः ? स खलु पुष्पधनुः,
किमु चेदिराट् ? स तु सभाधिगतः ।
उत भूपतिः ? स किमु हन्ति निजान्
समतर्कयन्निति जनाः कतिधा ॥६६॥

अथ फुल्लपाणिनलिनं ललितं
जितकाञ्चनाभरणकान्तिमसौ ।
परिगृह्य विद्युतमिवाम्बुवहः
वहतितमां प्रियतमां स्म रथम् ॥६७॥


CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्यन्दनोपरि परीतरुक्मिणी
कृष्णसंवलितकामनीयकम् ।
तप्तहेमनवनीलरत्नयोः
मिश्रितां श्रियमशिश्रियत्तदा ॥६८॥

परं परावर्त्य शताङ्गमिङ्गितात्
स दारुको दारुणवेगितं हरेः ।
प्रधिप्रमर्द्देन विमर्द्य पश्चतान्
जनान् युयुत्सून् सजवं ययौ ततः ॥६९॥

व्याहर्त्तुमद्य ननु पद्यसमूहमेनं
यावानभूत् किल मया समयोऽपनीतः ।
सञ्जीभवज्जनगणास्त्रविसर्गकाल-
सम्पादिते तु हरणे हरिणा न तावान् ॥७०॥

मुखं हरिर्विरगामिनीं जहार च
जघान चाच्युतकरणो भटानिमान् ।
इतो महाकालकलमाकुलोल्वणा
सरिज्जलभ्रमिरिव साऽकरोच्चमूः ॥७१॥

हरिर्हरति रुक्मिणीं किमिति हन्त नः पश्यतां
हरिर्हरति रुक्मिणीं वदत तूर्णमुर्वीपतिम् ।
हरिर्हरति रुक्मिणीं किमु भवाः स्थ निस्पन्दनाः ?
हरिर्हरति रुक्मिणीं निहत भिन्त रुन्धाग्रतः ॥७२॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
रुक्मिणीहरणं नाम त्रयोदशः सर्गः ॥०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# चतुर्दशः सर्गः ।

——:०:——

सत्र यात्यथ यथा सभां रवे
सम्भ्रमः समभवत् सभासदाम् ।
ह्लादिनी क्षितिविदारदारुणा
यद्यपश्यदपि नैव तादृशः ॥१॥

शष्कुसन्नपि रदच्छदं दशन्
घूर्णयन्नरुणलोचने मुहुः ।
धूनयन् सकलसंसदङ्गनं
पार्थिवो युगपदुत्थितोऽखिलः ॥२॥

रोषरुद्धवचनोद्यमो ज्वलन्
कोऽपि न प्रथममुक्तिमाददे ।
केवलन्तु पुटपाकसन्निभः
संबभौ सुभृशतापितान्तरः ॥३॥

दन्तवक्त्र इति नाम भूपतिः
स्तम्भकं करतलेन ताडयन् ।
आह्वयन्नखिलराजमण्डलं
संजगाद घनगर्जनस्वनः ॥४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हन्त भो यदि फणावतः प्लवः
मूर्द्धरत्नमपहर्त्तुमर्हति ।
तुच्छजीवनजनिः स गच्छतु
मानहानिमलिनाननो बिलम् ॥५॥

पन्नगः खगपतेर्निपत्य चेत्
पश्य सञ्चितसुधाघटीं हरेत् ।
उच्छिनत्तु स वरं निजच्छदं
मज्जतूत सुचिरं सरिज्जलम् ॥६॥

आहरेत हरिणो हरेर्यदि
जाग्रतोऽपि रसनं रसक्रमः ।
वेधसं स मृगयन् मृगेन्द्रतां
संजहन्नवतु मन्दिरोन्दुरः ॥७॥

सन्निपत्य च पतङ्गपोतको
लेलिहानविपुलानलार्चिषम् ।
संग्रसेन्नतुरसञ्चरो ध्रुवं
कोऽप्यचिन्त्यसमयोऽयमागतः ॥८॥

नीरधिं पिबति चेत् पिपीलिका
संभुनक्ति चटकोऽचलञ्च वा ।
नो तथापि शिशुपालवल्लभां
गोपभक्तधृतजीवनो हरेत् ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मानद्धारिहरिहारितौजसः
स जहीत जड़राजराजयः ।
अद्य रत्नमुकुटं कटुप्रभं
गौरवास्तनतमस्तकादद्द्रुतम् ॥१०॥

चेज्जलं ज्वलयते वनं नवा
सेकमेव ननु तं तनूनपात् ।
अद्य भीष्मकसुतापहारतः
तत्र चित्रमपि सागरौकसः ॥११॥

लाघवाद्व्रजति सर्वमुच्चतां
गौरवाच्च ननु नीचतां पुनः ।
मानदण्ड इह तन्निदर्शनं
वस्तुतस्तु विपरीतिराहवे ॥१२॥

नोन्नवन्तिरनिशं जलाश्रयः
मर्द्दितो व्रजति यस्तु नम्रताम् ।
तत्र को न कुरुते पदक्रमं
कर्द्दमं दलयते हि गौरपि ॥१३॥

प्रख्यदुन्नतिरतोवदुःसहः
आहतो द्विगुणमेधते तु यः ।
तं न मानयति को महस्विनं
पंचकं वहति मूर्द्धनोरगः ॥१४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दारयन्तमुरसि स्वसिद्धये
दूषयन्तमपि वा बिभर्त्ति यः ।
पादपातमरवं सहेत सः
भूमिरत्र नितरां निदर्शनम् ॥१५॥

कण्डूपश्चयसुखी हरिर्जटां
स्वां समेत विलिखन्तमुन्दुरम् ।
मानहान्यघनिघोर्णवक्षसः
किं क्षमध्वमिह रुक्मिणीहरम् ॥१६॥

यः प्रतापयति तेजसा जगत्
तं दधाति शिरसा महानपि ।
भास्वतः सकलशैलशाखिनः
पादमुद्दधति फुल्लविग्रहाः ॥१७॥

अद्य राजतनयाशशिप्रभां
द्रागपाहरत कृष्णनीरदः ।
राजराजिवदनप्रदोषकं
सोऽन्धकारनिकरः समश्नुते ॥१८॥

यः स्वयं ज्वलति भूयसौजसा
नो सहायमयमर्थयेत् क्वचित् ।
काननं दहति जातवेदसि
मारुतो वहति पूर्वतोऽधिकम् ॥१९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यस्तु वा प्रणमते किलात्मना
तं लघुं निजजनोऽपि मुञ्चति ।
ओघभग्नपतितं तटद्रुमं
संजहाति चिरसङ्गतस्तटः ॥२०॥

अर्पयन्नुरसि साहसात् पदं
यो विकर्षति पतन् इमं श्वभ्रम् ।
अन्तरेण कुणपं सहेत तं
को विचेतनविमुद्रितेक्षणः ॥२१॥

अद्य विद्युतितवैद्युतद्युतिं
मूर्त्तकीर्त्तिमिव रुक्मिणीं हरन् ।
स्वासुरेव यदि यादवो व्रजेत्
यान्तु तत् पुरत एव नोऽसवः ॥२२॥

लिप्सते वधमरेर्यदि स्वयं
ध्वंसयत्यनुदितोऽपि तं सुहृत् ।
पूर्वपर्वतशिरस्तमोनुदि
नो गतेऽपि हरतेऽरुणस्तमः ॥२३॥

मानिनः परकृता तिरस्कृतिः
क्षीयते न बहुनाप्यनेहसा ।
दक्षशापकृतलक्षणं विधोः
लक्ष्यते तदधुनापि तुल्यवत् ॥२४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अग्रया स्थिरतया समग्रया
सम्मदेन सह गौरवेण च ।
रुक्मिणीमपहरन्नयं हरिः
अद्य नो नु किमरक्षदक्षतः ॥२५॥

उष्महीनजलवृत्तयो जनाः
नीचि यान्ति विचलन्ति संहताः ।
यन्ति सर्वचरणं सहोच्चतः
निष्पतन्ति मलमुद्वहन्त्यपि ॥२६॥

उन्नतिं श्रयति यः स्वयं परां
तं नुवन्त्यपि महौजसः सदा ।
अर्थमा भ्रमति मेरुभूभृतः
तापयन्नपि जगत्प्रदक्षिणम् ॥२७॥

इन्दिरारचितगौरवो भजन्
रत्नमण्डिततनूरगाधताम् ।
सीमशेषरहितो महोद्यमी
सागरश्च भुवि केन लङ्घ्यताम् ॥२८॥

धिग्धिगद्य चतुरङ्गवाहिनीं
संविधेयगुरुसाहसक्रियाम् ।
यां ददर्श स कुलाङ्गनामिव
खण्डितां समिति लज्जितामिव ॥२९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कालकुसमकलाङ्गसौष्ठवं
सौधमप्यवनिमेव मज्जति ।
किन्न कण्टकहतोन्नतिश्रियः
शीर्षमुन्नमयत क्रियानताः ॥२०॥

भूभृतां सदसि यन्नवाय यः
स्वां स्वसारमपहर्त्तुमर्हसि ।
पङ्क्तिपावनमते पुरोधसं
दक्षिणां कितवपुङ्गवाय सः ॥२१॥

अद्य वङ्गपतिरथ्यदेव चेत्
एकमेकमवनीभुजां शिरः ।
नो नतं तदभविष्यदीदृशं
धिङ्नृपानिममसुश्च साश्व धिक् ॥२२॥

भाषमाण इति भूरि निर्भरं
यज्जघान चरणेन स क्षितिम् ।
सह्यथामिव वदन्त्यतिस्वनैः
सा स्थिरापि चिरमस्थिराभवत् ॥२३॥

तत्क्षणात् क्षितिभृतां समुत्थितं
सिंहनादपरिवृंहितं मुहुः ।
त्रिम्बितप्रचुरदीपदीप्तिम-
दुद्यतायुधभणञ्झणायितम् ॥२४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कामिनीमुपनिनाय केशवः
दर्पकस्तु नृपतीन् समाश्रयत् ।
कोपपावकभृतो महीभृतः
तापमाप विपुलन्तु चेदिराट् ॥२५॥

अश्वनेमिपरिदीर्णवर्त्मसः
शेरते स्म भुवि पत्त्रशो भटाः ।
दारुणामुरुमरुन्तुदव्यथां
संपुपोष दमघोषनन्दनः ॥२६॥

भीरुरत्नमधिगन्तुमिच्छतः
तस्य तत्र भजतोऽतिदुर्यशः ।
नागमूर्द्धमणिमुज्जिहीर्षतः
दह्यमानवपुषो दशाभवत् ॥२७॥

सर्व एव कमनीयकन्यया
सङ्गतः सकललोकगीतया ।
लज्जते गुरुजनात् पुरा वसन्
चेदिपस्तु तदकीर्त्तिमालया ॥२८॥

जन्मिनां प्रतिमुखं क्व सस्तुतिः
श्रोष्यके रियमकीर्त्तिघोषणा ।
चिन्तयन्निति महाकुलः किल
चेदिभूपतिरभूत् क्रमोज्झितः ॥२९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रुक्मिणीमहृत यादवः सुखम्
इत्यसौ गुरुमधीरतामगात् ।
गच्छति स्वमभिपातुकां नदीं
आकृते किमुदधिर्न्न वायते ॥४०॥

संज्वलन् किमपि जोषमोजसा
भीषयन्नुपगतावलाकुलम् ।
बिभ्रदुज्ज्वलमुरश्छदं दृढं
आक्परात् स समनह्यदञ्जसा ॥४१॥

स्वान्तिकादहितयाभिसंग्रह-
तापतप्तमनसाऽथ रुक्मिणा ।
दन्तवक्त्रवचनानलैः पुनः
प्लुष्यमाणवपुषेति संजगे ॥४२॥

कर्म्म साधयितुमल्पमुद्यमो
भूरिराहुरविमृश्यकारिता ।
गोष्पदं परितरीतुमीहते
कोऽब्धियोग्यजलयानयोजनम् ॥४३॥

मातुरङ्कमधिशय्य कौमुदीं
पाणिनेव शिशुको जिघृक्षति ।
अप्रभुत्वविरतः स्वयं पुनः
लुण्ठति क्षितितलेऽपि तत्क्षणात् ॥४४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यादवापसदसादनक्रिया
साधनोद्यततमेऽल्पके मयि ।
किं भवद्भिरचलाविचालनो-
त्तोलनक्षमतमैः समुत्थितम् ? ॥४५॥

अद्य मे वत यथा नराधमः
नो भवत्स्तु तथापराध्यति ।
मर्कटो हि परिमृश्य वल्लरीं
स्वं दुनोति न वनान्तरद्रुमम् ॥४६॥

स्वैरगुप्तसमयोपपातिनः
गोपरक्तनिजुषो जलौकसः ।
शोधयामि विशिखेन विग्रहे
विग्रहं विचलतोऽद्य सोव्यताम् ॥४७॥

सांख्यसम्मतचितो यथा नृपाः
अत्र कर्मणि चिरादुदासताम् ।
एषकः प्रकुरुतें प्रधानवत्
सन्निधानमिषुणीकृतः क्रियाम् ॥४८॥

कृत्तकण्ठशिरसः समुत्सर-
च्छोणितोचितभुवां सहाधुना ।
रागिणीं चितिभृतामनीकिनीं
गाढमेव विदधीय धामतः ॥४९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भीष्ममार्गगमनस्य यास्यतः
दुर्धरध्वननधूतचेतनम् ।
वीक्ष्यतामिह हरिं परिश्वस-
द्दन्दशूकदशनाभदर्दुरम् ॥५०॥

भूभृतोऽद्य समितं समेत्य भोः ।
केवलं भवत साक्षिणः क्षणम् ।
नैष वत्सकलङ्किवक्षसं
मानिहत्य नगरीं निवर्त्स्यति ॥५१॥

सोऽसुभिर्हरतु मेऽद्य रुक्मिणीं
तामहं तदसुभिर्न वाहरे ।
दुर्यशःक्षितिरजोभिरुज्ज्वलं
जीवनं हि मलिनं विधीयते ॥५२॥

भाषमाण इति नद्धकङ्कटः
रोषरूक्षनयनेन तत्क्षणात् ।
स्नेहमस्थिरतनूरवापयन्
अभ्रदोदसिमसीमसाहसः ॥५३॥

यावदुच्चरति खे जयध्वनिः
सिंहनादबधिरीकृतश्रुतिः ।
तावदेव स समाश्रयत् समं
स्यन्दनं निखिलहृष्टिहृष्टिभिः ॥५४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सत्पथे रथमथो सुसारथेः
आश्रयैव सितपीतपीतयः ।
चक्रपाणिमनु रुक्मिणो मनः
यायि जेतुमनसोऽत्यतत्वरन् ॥५५॥

पार्थिवस्य पृतनानुपातिनी
धीरनादमुखरा निरन्तरा ।
तां पुरःसरभगोरथामर-
निम्नगाश्रियमधिश्रियत्ततः ॥५६॥

दन्तवक्रशिशुपालपूर्वकाः
स्वस्वसैनिकनिकायसंहिता ।
भङ्गमेकमनुभङ्गवीथयः
वारिधेरिव समन्वगुर्नृपम् ॥५७॥

क्व प्रमोदलहरी विवाहजा
क्वाधुना परमदारुणो रणः ।
आकुलाकुलकुलाङ्गनाकुलं
मन्दमन्दमगमदगृहं क्रमात् ॥५८॥

आचकाङ्क्ष च जयं परं प्रिये
रुक्मिणीञ्च हरिहस्तगामिनीम् ।
दुर्घटं तदुभयन्तु चिन्तयन्
अव्यतस्थ भ्रमभङ्गभाजनः ॥५९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भूरिवर्णप्रवला बलावली
गर्जनोर्जितपरस्परा श्रिता ।
विद्युतेव विविधास्त्रलेखया
मेघराजिरिव गाममिप्लवत् ॥६०॥

उत्साहयन्तोऽतिमनांसि पुंसां
प्रयान्तयन्तो द्विपसप्तिसैन्यम् ।
तरङ्गमन्द्रानुदधेर्हसन्तः
तस्थुः समस्तैर्घनवाद्यनादाः ॥६१॥

वीक्ष्य स्वसारमतिसाध्वसबाहुवल्ली-
संवेल्लिताच्युतगलां पुरतः प्रताङ्के ।
सौदामिनीमिव घनाङ्कगतां सुमेरौ
रुक्मी तुतोष च रुरोष च योग्यताप्तः ॥६२॥

हरिगणितसैन्यं धावदाच्छाद्य भूमिं
हरिणगणसमानं विप्रकृष्टाद्विलोक्य ।
चकितचकितचित्तां सम्यगाश्वास्य कान्तां
झटिति चलमकार्षीत् सम्मुखे तं प्रताङ्कम् ॥६३॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
प्रयाणं नाम चतुर्दशः सर्गः ॥०॥

———:•:———

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# पञ्चदशः सर्गः ।

बलोऽथ सबलो बालमनेकाक्रान्तमेककम् ।
उपलभ्य समालभ्य हलिं हालामदोऽभ्यगात् ॥१॥
अथ तमग्रजं वीक्ष्य शुभ्रांशुमिव शुभ्रगुम् ।
श्यामनम्रोः स्त्रियः पत्युः तमीवं विद्युतितमाम् ॥२॥

पद्मबन्धः ।




( एष मध्याक्षरादारभ्य दिग्दलेषु निर्गमप्रवेशाभ्यां विदिग्दलेषु तु क्वचित् प्रवेशेन क्वचित् निर्गमेन च पश्चात् विन्यस्तः श्लोको भवति । )

तान्ततामागतामोघ-श्रमाता मदमापता ।
तापमाप नता सेना नासेताह्निततान्तता ॥३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विभक्तात्रा परभाविन्या शून्यं तद्रुक्मिणो बलम् ।
असंख्यमेकरूपञ्च मेन आत्मानमव्ययम् ॥४॥
गजेन्द्रगमनाऽधीरा सुगुप्ता सा महोन्मदा ।
वाहिनी तमसाच्छन्ना दधाव परनायकम् ॥५॥
पदातिपोतिसम्पन्नाः सहसा रथिकुञ्जराः ।
अधावन्त हरिं मत्ताः सहसारथिकुञ्जराः ॥६॥
रामः सेनामुखे तिष्ठन् सेनां नानाविधायुधाम् ।
यथास्थानं समावेश्य समानगुणगौरवाम् ॥७॥
वार्त्तवर्त्तां स्वयं लिप्सुरालोकलोललोचनः ।
चातकः शातकोऽरीणां सजलं जलदं यथा ॥८॥
कादम्बरीप्रियः प्रायात् कादम्बहरिणो हरिम् ।
कादम्बरेणुरोमाञ्चः कादम्बकधनुर्द्धरम् ॥९॥

गोमूत्रिकाबन्धः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दो | प्र | नी | ला | व | लो | श्या | मं | धा | म | स | न्तु | ष्ट | लो | क | कम् |
| प | प्र | च्छ | ला | ङ्ग | लो | च्चे | मं | भू | म | द | न्तु | र | लो | क | कम् |

(प्रथमायाः पङ्क्तेः प्रथमाक्षरस्य, द्वितीयायाः पङ्क्तेः द्वितीयाक्षरस्य, प्रथमायास्तृतीयस्य, द्वितीयायाश्चतुर्थस्य इत्येवंक्रमेण पाठे प्रथमार्द्धम्, पुनः द्वितीयायाः पङ्क्तेः प्रथमाक्षरस्य, प्रथमायाः द्वितीयस्य, द्वितीयायास्तृतीयस्य प्रथमायाश्च चतुर्थस्य अक्षरस्य एवंक्रमेण पाठे द्वितीयार्द्धं सम्पद्यते। तेन चायं श्लोकः।)

दो प्र नी ला व लो श्या मं धा म स न्तु ष्ट लो क कम् ।
प प्र च्छ ला ङ्ग लो च्चे मं भू म द न्तु र लो क कम् ॥१०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बलरामात् सरामः स क्रियाननमनीनमत् ।
मनस्वी विघ्ननिघ्नोऽपि विनयं न जहाति हि ॥११॥

ऊचे शौरिररीन् हन्तुः सर्वं मङ्गलमङ्ग ! मे ।
पश्यतोऽर्थ्यमपाच्यार्थं कस्य नश्यति नाशुभम् ॥१२॥

सह तेन समुद्युक्तः समिति समयादरम् ।
सहते न समुद्युक्तः समिति समयादरम् ॥१३॥

समुद्गयमकम् ।

प्रागङ्काय नृपो गृह्णन् सज्जं कोदण्डमण्डलम् ।
रुक्मिणीजानये बाणं पञ्चबाण इवाकिरत् ॥१४॥

त्रासयन्नहितानीकं पूरयन् विदिशो दिशः ।
दारयन् रन्ध्रमद्रीणां सिंहनादं ननाद च ॥१५॥

चिरं चारुरुचा रोची विभवी विबभौ विभुः ।
कोपपाकाकपः कोऽपि चलाचलोऽचलाचलः ॥१६॥

द्व्यक्षरपादः ।

विविद्वान् युद्धविद्वान् स प्रजिघांसुं हरिं हली ।
दन्तवक्त्रं प्रचुक्रोध कः क्षमः क्षमते खलम् ॥१७॥

विशेषविषयः सोऽथ कालिन्दीभेदनोऽभिनत् ।
खगैः खगेशवेगैस्तम् उत्सर्गमिव बाधकः ॥१८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## श्लोकद्वयेन लताबन्धः ।




CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(अथ निम्नपुष्पस्य वामदलगत'वा'शब्दादारभ्य क्रमिकवक्राक्षरसहितपाठेन अधस्तादिन्यस्तं श्लोकद्वयं सम्पद्यते। चमत्कारिताविशेषस्तु अधोदेशात् वक्राक्षराणां ऊर्द्ध्वदिशि क्रमिकपाठे "हरिदासकृतिरियं" इति वाक्यमुपजायते।)

वाहवाहसङ्घव्यूहः भूरिवैरिप्ररिष्टिकृत्।
सदामदा पदातिश्च व्यसरत् सह सङ्गिभिः ॥१९॥
प्रकृष्टकृतिकृद्वीरः भूतिभातिस्तुतिश्रितः।
हरिङ्करिपरिव्राजो चायं चायं स्वयं ययौ ॥२०॥
श्लोकः समाकुलोके प्राक् स्थिरायामस्थिरं शिरः।
रुक्मिसैन्यस्य जन्येऽस्मिन् हरिमुक्तं शरं परम् ॥२१॥
अन्योन्यशस्त्रसम्पात-विदीर्णं वर्म्मवर्म्मणाम्।
रोषेण सह शूराणां दारुणो रण ऐधत ॥२२॥
परारिपारुप्रापूरैः पुरारिपुरुरूपपैः।
पुरः पुरः परं पारं प्रपुपूरे परैः परैः ॥२३॥ द्व्यक्षरपादः।
शार्ङ्गेण शार्ङ्गिणा मुक्ता शरराजिरराजत।
अचला चञ्चला चेत् स्यात् सौपम्यं सम्यगीयुषी ॥२४॥
शतशः सन्निधौ कृष्णं किरन्तं विविधायुधम्।
संपश्यत्तद्बलं नश्यत् परःशतममंस्त तम् ॥२५॥

सर्वतो भद्रः।

ना ली सा रा रा सा ली ना
ली ल या म म या ल ली।
सा या ता ता ता ता या सा
रा म ता जि जि ता म रा ॥२६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उपासङ्गो द्विधा चक्रे चक्रेण चक्रपाणिना ।
विप्रकृष्टः समाकृष्टः पाशेन पशुवत् परः ॥२७॥
सहस्रकिरणाकारं सहस्रशरकारिणम् ।
दुर्द्दर्शं तं ददर्शाग्रे हरिं हरिणवञ्जनः ॥२८॥
हीनरावयती वारि रामाला वहदाहवा ।
वाहदाहवलामारा रैवातीवयरा नदी ॥२९॥
श्लोकप्रतिलोमयमकम् अथवा गतप्रत्यागतम् ।
विदर्भभूपतिः पश्यन् नश्यन्तीं स्वामनीकिनीम् ।
मधुद्विषं विदिद्वेष मत्ताद्विपमिव द्विपः ॥३०॥
सपक्षा रिपुपक्षाशा सशिखा विशिखावली ।
मुक्ता तेन हरेः कण्ठेऽकुण्ठमापतदुन्नता ॥३१॥

व न मा लि का य पा ती
न वा नि खि ल जी व पा ।
मा नि ता ता ला हा जी य
लि खि ता ङ्ग क ला ल का ॥३२॥

अर्द्धभ्रमकः । युग्मकम् ।

मुखेन सह रुक्मिण्या म्लानमूर्त्तिः शरै रिः ।
तस्याश्च सह हासेन केशवोऽवीवृधन्महः ॥३३॥
आसन्नं दूरसञ्चारं सुदुर्द्दर्शं सुदर्शनम् ।
आलोकलुप्तप्रत्यर्थि-प्रकाशं स समग्रहीत् ॥३४॥
भीतीनां तरसाधारं तरसा धारयन् हरिः ।
द्विषतस्तु सहसाक्षिप्य सहसाक्षिप्य तद्दृशः ॥३५॥
पादाद्यन्तयमकम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ग्रस्यमानां परग्रीवां तेन पश्यन् परः पुरः ।
द्राक् पलायितुमारब्धः स्वं गलं छिन्नमन्वभूत् ॥३६॥
एकस्यापि हरेरग्रे शतशो रुक्मिसैनिकाः ।
नातिष्ठन्त क्षीयमाणा अवश्याया रवेरिव ॥३७॥

वृक्षबन्धः ।




CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

( उपरितनशाखयोर्वामशाखास्थचतुर्द्दलपुष्पस्य उपरिदलस्थ'प्र'रूपादक्षरादारभ्य प्रदक्षिणक्रमेण पाठः । परञ्च अपरदलस्थयोरपि अक्षरयोस्तथैव पाठः । तत्परञ्च पद्मशीर्षस्थाक्षरयोः तथैव पाठः । तेन च प्रथमचरणं सम्पद्यते । एवं-रूपेण उपरितनशाखयोर्दक्षिणशाखायां द्वितीयचरणम् अधस्तनयोः शाखयोर्वाम-शाखायां तृतीयचरणम्, दक्षिणशाखायाञ्च चतुर्थचरणं पठनीयम् । तेन चाधस्तनः श्लोकः सम्पद्यते । )

प्रकाशमकार्य्यकास्येक-भूपतिः पतिपर्व्वशः ।
नाश्यपश्य आश्यरविः तेजः स्वोजः सुजः पविः ॥३८॥

सन्दधे प्रत्युअस्त्राणि चकर्त्त च मुमोच च ।
जघान च द्विषत्सेनां युगपत् स विदर्भराट् ॥३९॥
युग्मकम् ।

रोषताम्रास्यसूर्य्यस्य सकाशेऽप्यस्य संयुगे ।
नयनेन्दीवरद्वन्द्वं पुस्फोट तात्कालिकम् ॥४०॥

विक्रमं विकलं कृत्वा सकलं सकलं द्विषम् ।
समरे समरेऽदीपि समदः समदर्शनः ॥४१॥

रुक्मिणः स महान् मानः बभूव स्वविपत्तये ।
उपरागाय शीतांशोः पूर्णिमायां हि पूर्णता ॥४२॥

खर्व्वीकरिष्यन् गर्वं तं विक्रमं स त्रिविक्रमः ।
ततान ताडितो यद्वत् आशुगेनाशुशुक्षणिः ॥४३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## मुरजबन्धः ।




(प्रथम'स'कारादारभ्य तिर्य्यग्रेखानुसारेण पाठे प्रथमचरणम्, तथैव चतुर्थचरणम् । द्वितीयचरणस्यप्रथमाक्षरादारभ्य तिर्य्यग्रेखानुसारेण प्रथमचरणगतयोर्द्वितीयतृतीययोर्द्वितीयचरणगतयोश्चतुर्थपञ्चमयोः प्रथमचरणगतयोः षष्ठसप्तमयोरक्षरयोर्द्वितीयचरणस्यास्य अन्तिमस्याक्षरस्य च पाठे पुनर्द्वितीयचरणं निष्पद्यते । तृतीयचतुर्थचरणयोस्तथैव पाठे पुनस्तृतीयचरणं निष्पद्यते, तेन च निम्नलिखितश्लोकः सञ्जायते । )

स ह सो च्च त मा न श्रीः
सा ह सो र्जि त मा न सः ।
स ह सो द्ध र्ध मा न श्रीः
स ह सो च्च त मा न नः ॥४४॥

प्रयोगैर्विविधैर्बन्धान् महाजन्यक्षदादधत् ।
महाकाव्यकरः कृष्णः महाकविरिवाद्युतत् ॥४५॥
विक्रान्तवन्तमत्यन्तं क्रान्तमूर्त्तिर्विदर्भराट् ।
न सेहे यादवाधीशं मृगेशमिव कुञ्जरः ॥४६॥
सत्रा तेन नती त्रास कातरेऽप परे तका ।
काला नूतनतूलावा चारुहाससहा रुचा ॥४७॥

प्रतिलोमानुलोमपादः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्वेषादिव रुक्मिण्याः श्रितं शौरिं जयश्रिया।
जिगीषामास निर्वर्ण्य बलभद्रो द्विषद्बलम् ॥४८॥

विदधे विशिखासार-च्छलेनाक्रान्तिकेऽपि सः।
अश्रान्तलेखनाकाश-प्राङ्गणे ज्योतिरिङ्गनान् ॥४९॥

## छिद्रबन्धः।

(एकस्य पत्रस्योपरि अपरं पत्रं निधाय तस्मिन्नुपरितने पत्रे श्रेणीद्वयेन कियत्कियदन्तरम् अष्टौ अष्टौ कृत्वा षोडशच्छिद्राणि विधेयानि। तेषां छिद्राणां मध्ये आदिमं तृतीयं पञ्चमादिकञ्चाक्षरं लेखनीयम्। येन तानि अधःपत्रे स्थितानि स्युः। द्वितीयं चतुर्थादिकञ्चाक्षरं छिद्रान्तरालेषु लेखनीयम्। येन तानि उपरितने पत्रे स्थितानि स्युः। इत्थंविन्यासे च अधस्तात् विन्यस्तः श्लोकः सञ्जायते। चमत्कारितातिशयस्तु उपरितनपत्रापसारणे अधस्तनपत्रगतानाम् अक्षराणां पाठे व्रजभाषायाम् इदं वाक्यमुपजायते। यथा—"तेर शत षोड सन ए रचना समापन।" )

ते श र प्रा श जा त ङ्का षो ढ़ा ल च्य स दो न तान्।
ए तान् र णे च ला ना धुः स ज्जा मा न प तीन् न कान् ॥५०॥

सभावाग्विक्रमो दन्त-वक्रश्चुक्रोध विच्युतः।
पूर्वं वागव्यक्तमर्थं हि नानुतिष्ठन् श्रियः पदम् ॥५१॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अश्रान्तवर्षुकः क्षिप्रं चञ्चलाङ्गद्युतिश्रितः ।
गम्भीरगर्जनः शत्रून् जलदश्च जिगाय सः ॥५२॥

चन्द्रहासेन तेनाथ ते नाथक्षतपालनाः ।
पाल-माधव-निष्प्राणाः निष्प्राणाः पेतुराहताः ॥५३॥

हली समाहतस्तेन तेने तेजस्वितां पृथुम् ।
नोल्लोलयति कल्लोलान् वाततुन्नः किमर्णवः ॥५४॥

सोऽधुसेवनरक्ताभं विशालं लोललोचनम् ।
प्रभात इव शोणाब्जं रोषात् सुरक्ततां ययौ ॥५५॥

दन्तवक्रं क्रमात् क्रामन् हलभृत् स हलाग्रतः ।
मुषलेन समर्द्दीलं प्रहारोद्धतमुद्धतम् ॥५६॥

अतालव्यः ।

प्रहृतः कोऽपि निःसंज्ञः संवुवूर्षुं सुराङ्गनाम् ।
विलोक्येव लब्धसंज्ञः रणे प्रववृते पुनः ॥५७॥

निहतात्मजसोदर्य्यो धैर्य्यमाधाय धीरधीः ।
शस्त्रपाणिः सीरपाणिं ययौ यमसिवापरः ॥५८॥

कुण्डली हलिनो भीतः खगेशादिव कुण्डली ।
वेशवान् आहतः कश्चित् बभूव रन्ध्रवेशवान् ॥५९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शस्त्राशस्त्रि महोत्साहैः हस्ताहस्ति नखानखि ।
ववृधे तुमुलं जन्यं सैनयोरुभयोरलम् ॥६०॥

हत्वासन्नान् स शस्त्रेण शत्रून् नस्त्रेण दूरगान् ।
समीपविप्रकृष्टानाम् अभवत्तुल्यदारुणः ॥६१॥

समस्ता रिपुसेनास्ता रामास्त्राशुगसंभृतः ।
दूर्वा इव बभुः प्रातः शिरःशिशिरशीकराः ॥६२॥

दयावान् स बलो भग्नान् दलनायाततानवान् ।
संववर्ज लोलहृदः भटान् लग्नान् व्यनीनशत् ॥६३॥

गूढ़प्रथमपादः ।

पलायामासिरे सेना मूर्च्छां नीते कराहते ।
भास्वता दन्तवक्रेऽस्मिन् सोमे तारा इव शशी ॥६४॥

अङ्गनालिङ्गिताङ्गं तं गोविन्दमिन्दुसुन्दरम् ।
तदा बलोऽवलोक्येव शिश्राय विजयश्रियम् ॥६५॥

रोचनस्तेजसा शौरिः मध्यन्दिनविरोचनः ।
रोचनश्रीस्तताड़ारीन् नेत्रनिन्दितरोचनः ॥६६॥

रुक्मी प्राणपणोद्योग-महोत्साहसहोऽपि सन् ।
नात्येतुमच्युतं सेहे प्रतिकूलं यथा विधिम् ॥६७॥

सूतं जघान चिच्छेद ध्वजं सह जयाशया ।
बिभेद च शरैः शौरिः युगपद्वर्म रुक्मिणः ॥६८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विलोक्योच्चूर्णि योद्धृणां दुर्नीतिं नेतुरौद्धशीम् ।
चेतो विषेदे निःश्रेणि-स्थितीनां दुःस्मृतिश्रिति ॥६९॥

निरौष्ठ्यः ।

जेतुं नवमिवेषूणां मुहुरापततां हरिः ।
परे पुरःसरीभूय दुद्रुवुद्रुतमाह्वात् ॥७०॥

विनेशुः सैन्यसेनान्यः सहायस्तु पराजयः ।
स्मरन्निति स निर्विंसः सासिरासीद्गतो रथात् ॥७१॥

विद्धास्त्रं स वपुः पातिशिलीमुखकदम्बकम् ।
वहन्निवागात् कृष्णं स-शिलीमुखकदम्बकम् ॥७२॥

चिच्छेदागच्छतस्तस्य निशातशरसञ्चयैः ।
मुष्टौ रिष्टिमरिष्टारिः रुक्मिणो रुक्मपुङ्खकैः ॥७३॥

गदाधरं दधावाथ गदामादाय दारुणाम् ।
हतबाधावधूतोऽपि कार्य्याद्धास्यति नोद्यमी ॥७४॥

लोललोलाललो लोला-लालो लोलालिलोललः ।
लोलेलालो लाललालः लोललोलोऽललाललः ॥७५॥

एकाक्षरपादः ।

माधवस्तां निकृत्याराात् चक्रेणाक्रम्य तं गले ।
सज्यस्य धनुषोऽग्रेण छेत्तुं निस्त्रिंशमाददे ॥७६॥

युग्मकम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पाणावुन्नमिते तस्मिन् चन्द्रबिम्बानुबिम्बित: ।
चन्द्रहासो जहासास्य रथे चन्द्र इवापर: ॥७७॥

सुवर्णभूषिता साऽलं नाथस्य करमाददे ।
सुवर्णभूषिता सालं लतेव नृपजाकुला ॥७८॥

रामोऽथ दूरतो वीक्ष्य तत्क्षणादेत्य तत्पुर: ।
समयोचितमत्युच्चम् अवोचदच्युतं वच: ॥७९॥

मानिनो माननाश: स्यान्मृत्युरप्राणनाशक: ।
तुल्या दशेव तिग्मांशोरस्ते चाव्दतिरस्कृते ॥८०॥

उष्माभाव: परं जाड्यं प्राणमोचो महोशय: ।
पारवश्यं परैर्घृण्यं नीर्णोज:शवयोर्भुवि ॥८१॥

महान् खल्वपकर्त्तॄणां दयते तु हिनस्ति न ।
ग्रसते न दधात्येव स्वां खनन्तमपि क्षिति: ॥८२॥

उपकार: प्रतीकार: महीयानपकारिषु ।
प्रभूतेन्धनदानेन ज्वलनो हि प्रशाम्यति ॥८३॥

विरसं तज्जहीहीमं विरसं पन्नगं यथा ।
सदनं यातवानेष सदनं प्रति गम्यताम् ॥८४॥

अथवैनं क्षुरप्रेण मुण्डयित्वा विहापय ।
अयमेव वध: प्रोक्त: वध्यस्यालीककर्म्मण: ॥८५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अभिषिक्तो वियोक्तव्यः नासुभिर्वसुधेशिता ।
विशेषतस्तु सम्बन्धी स्वसासन्ना च सादिनी ॥८६॥

इति ज्यायस आदेशात् विमुखोऽभूत् स तद्वधात् ।
नहि लङ्घयते धीमान् पूज्यं पूजितसद्गुणः ॥८७॥

अमूर्धन्यः ।

केशपाशं हृषीकेशः लुलुञ्चे तस्य कुञ्चितम् ।
मानहानेर्भुवि भूमौ पुञ्जीकृतमिवायशः ॥८८॥

जीवन्मुक्तः परोद्‌योगात् अदृष्टाद्दैववानयम् ।
पुनर्नारायणी योक्तुं न पुनः प्राविशत् पुरम् ॥८९॥

प्रायोपवेशनं चक्रे उग्रात्मा पुरतोऽन्तरे ।
नालोचयदवस्थां ताम् उग्रात्मा पुरतोऽन्तरे ॥९०॥

स्वपुरं प्रति दारुके रथं
सरवं प्रेषयति प्रहृष्यति ।
स सितस्मितराजजाऽधरे
मलिने वा नलिनं दधेऽधरम् ॥९१॥

सम्मदो विजयिनीमनीकिनीं
द्वारकापथमथापि सा समम् ।
सोऽपि तत्र निखिलान् खलान् खलु
व्यामशे व्रजपती व्रजत्यरम् ॥९२॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विशेषपद्मबन्धः ।




( दलवहिःस्थितं 'वि'शब्दादिकमारभ्य दक्षिणक्रमेण सरलभावेन पद्माधरखण्डिं 'र्व्वं'शब्दादिपर्य्यन्तम् एकैकचरणं पठनीयम् । तेन चाधस्तनः श्लोकः सञ्जायते । चमत्कारिताविशेषस्तु दलवहिःस्थितानां 'वि'शब्दादीनां क्रमिकपाठे ईदृशं कविरेम-चरितायकं वाक्यमुपजायते । यथा—"विप्रकविर्व्वं कृवाशौ" । )

विघोषणीयः परिपूर्णगर्व्वं प्रधानशक्तेः परमो जयोऽङ्क ।
कसत्कथालाप-हरिप्रभा वाऽविशत् पुरं सा परपक्षहासो ॥८३॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
कथाविजयो नाम पञ्चदशः सर्गः ॥०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# षोड़शः सर्गः ।

—:०:—

धाम निजं सरमेऽथ रमेशे
प्राप्तवति स्वनितादपि नृणाम् ।
नूतनद्वारिद्वरीच्चणजन्मा
तुङ्गतमः प्रमदः प्रबभूव ॥१॥

सिक्तसुमृष्टमहापथसार्थैः
केतुगणैर्धृतचित्रपताकैः ।
अत्यलसञ्च चलत्सुसमाल्यैः
भीष्मकजामिव वीच्य पुरश्रीः ॥२॥

वस्तु समर्जयदेकसमोके
लोकललामतमं द्वितयं सः ।
तत्र चलाप्यचला कमलाभूत्
कीर्त्तिरितीव निरीच्य चलासीत् ॥३॥

भीष्मकजां सुरवैरिविहारात्
कान्तिमतीमवलोक्य नितान्तम् ।
द्वारवती सुपुरी पुररूपैः
मत्सरिणी चकितेव चकाशे ॥४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्त्रीच्छलिका किमु पुञ्जितकान्तिः ?
चन्द्रनिभा किमु मूर्त्तिमती वा।
देहमिता नु सुधा वसुधायां
तामिति वीक्ष्य जनैः समतर्कि ॥५॥

नीलमणिर्विमलो वनमाली
स्वर्णमयीयमपि प्रियदृष्टिः।
दैवकृतो मणिकाञ्चनयोगः
एवक इत्थमलापि च लोकैः ॥६॥

अखिलता प्रमदा प्रमदाली
नव्यवधूं व्यवधूय नरौघम्।
स्वैरमुखध्वनिनाऽध्वनि नाम
चेमयितुं सहसा सहसायात् ॥७॥

सान्द्रमुदां नगरी लहरीभिः
भूरिव्वा समहा महतीभिः।
तुङ्गतरङ्गततिं सरिदीशम्
अन्वकरोदिव सा न्वतिसाध्वी ॥८॥

राक्षस एव भवेन्नु विवाहः
दानविधिं न विधिर्विदधीत।
चिन्तयतीत्यमिती वसुदेवे
दैववशाद्दृदृशे ध्वजमारात् ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आनकदुन्दुभिमौनिसमेषः
यानपथेन समं परिवर्त्तंय ।
सन्ततचक्रविवर्त्तविघातैः
आगतवानथ भीष्मकराजः ॥१०॥

हासविकासितशान्तिसुखस्य
अस्त्रनिवृत्तिसुवृत्तिशुभस्य ।
हेतुमिहागमनेऽस्य मनुष्यः
युद्धमबुद्ध न बुद्धिविबुद्धः ॥११॥

सन्निहितेऽतिहिते वसुदेवः
सत्वरमेत्य तुरङ्गमवल्गाम् ।
आददतादरपूर्णविकासं
धीरमतेर्विनयो नयसिद्धः ॥१२॥

स्यन्दनतोऽवनतिर्भवतोऽस्याः
उन्नतिमेव पुरो विदधीत ।
अञ्जलिमानिति मञ्जुललापो
तस्य धरावतरञ्च ययाचे ॥१३॥

भीष्मकभूमिपतावबतोर्थ्य
पीठमुपाश्रयति श्रितसौख्ये ।
सुष्ठु वचश्चतुरोऽनुनिनीषुः
सौम्यवदोऽवददच्युततातः ॥१४॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धीर ! धराधिपते ! क्षणपल्लवम्
अस्य शिशोः परिमृष्य विमृश्य ।
वेदनिकामविदन् विषजन्यां
सं विधयात् फणिनोऽपि मणिं यः ॥१५॥

सम्भ्रमसम्भ्रमदित्सितवत्सां
बालतमोऽपहरन् हरिरेषः ।
दीपयति स्म वरं युवराजं
कोपयति स्म च माश्च भवन्तम् ॥१६॥

ब्रूहि विधेयमहो तदिदानीम्
आश्रव एष जनस्तव वृत्तः ।
यो विमुखो हि सतः किल कृत्यात्
शश्वदसौ भविताऽलमवद्यः ॥१७॥

इत्थममुष्य वचो विनिशम्य
भूपतिरेतदवोचत हृष्यन् ।
भावविबोधितवेशविशेषः
नैव जनः सदसद्विविनक्ति ॥१८॥

इत्थमनल्पवचांस्यलमुक्त्वा
सूनुहरः स्म हरिर्दयते मे ।
शैवलिनीं प्रसृशन् द्विजराजः
स्यात् सरसोऽपि मुखोज्ज्वलताकृत् ॥१९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ईदृशमाप्तुमना बहुयोगं
संविदधन्नभते वरपात्रम् ।
सत्तनयामनयत् स्वयमेषः
वक्तु विभो ! किमितो मम भाग्यम् ॥२०॥

सत्कुलशीलवराय वराय
नोन्नतिमान् प्रददत्तनयां कः ।
धूर्जटये तनुजां प्रतिपाद्य
नूनमभूद्गिरिराड़तितुङ्गः ॥२१॥

विष्णुपदादभवत् पतिता सा
विष्णुपदी भुवनानि पुनाना ।
द्वे पवितुं स्वकुले पुनरेषा
विष्णुपदं समगादतिदीना ॥२२॥

आचिनुते तनयां स्वयमेव
काम्यवरो यदि को नु निषिध्येत् ।
गम्यतरुं व्रततीं निपतन्तीं
को हि मृदुं विभजत्यतिबाल्यः ॥२३॥

जीवजनस्पृहणीयमिवेह
ब्रह्म वरं तनुजेव च विद्या ।
लभ्यते यदि भक्तिवशेन
प्रीतिमयानि जगन्ति तदा स्युः ॥२४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तद्भवतामनुमत्यनुवर्त्ती
दातुमिमां विधवेऽहमुपेतः ।
दानमृते परकीयपदार्थे
स्वत्वमुदेति नहि ग्रहमात्रात् ॥२५॥

स्नेहयुतां बहुसंस्कृतिशुद्धाम्
आहुतिमद्य परामिव कन्याम् ।
श्रीहरये शुचये शुचये वा
सम्भवितास्मि ददच्चरितार्थः ॥२६॥

जानति तामनुजानति तस्मिन्
उत्सवमेनमपि प्रतिभृत्यान् ।
संववृधे स च तस्य निदेशात्
सिन्धुतरङ्ग इवानिलनुन्नः ॥२७॥

दुर्मदारुणवैरिपिताऽयम्
आपतितः सहसा कथमेकः ।
द्वारवतीजनसंशय एष
साकमरं रविणाऽगमदस्तम् ॥२८॥

तोरणमूर्द्धनि तुल्यनिवेशा
दीपततिर्विंशदा विकसन्ती ।
दोषमुदस्य प्रदोषमशेषं
लोकदृशि प्रगुणं प्रणिनाय ॥२९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वातचला प्रतिहारपताका
दीपशिखां लुनती किल काञ्चित् ।
संज्वलिता परयेति निरीक्ष्य
द्राङ् निरवाप्यत केनचनेत्थ ॥३०॥

छद्मशिरःसु कलङ्कितचन्द्रः
न्यस्यति पादमितीव समन्युः ।
सौधगणोऽपि स सर्वशुचिस्तम्
अस्पृशदुज्ज्वलदीपकपादैः ॥३१॥

नूतमहाद्युतिरत्नजभूरि-
भूषणभूषितमञ्जुलवामा ।
श्रेणिकृताऽऽत्मशिखासु दिदृक्षुः
व्योम्नि धनुर्व्यतनोदिव जिष्णोः ॥३२॥

मङ्गलगीत्युलुलुस्वनवाद्य-
वेणुरवा लयतालसमेताः ।
ऐक्यगता इव सुश्रवणीयाः
लिल्युरुदन्वति खे विचरन्तः ॥३३॥

दान-सभाजन-देवन-मानाः
स्पर्शन-दर्शन-भाषण-हर्षाः ।
हास-विकास-विलास-विहाराः
तन्नगरीगरिमाणमतन्वन् ॥३४॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मञ्जुलसज्जितनागरनारी
मन्दिरचत्वरसम्भ्रमितिफुल्ला।
कृष्णपुरःसरभीष्मककन्यां
तां वसुदेवगिरोपनिनाय ॥३५॥

पर्व्वणि चन्द्रमसः सुषमेव
पङ्कजिनीव ग्रवव्यपनिद्रा।
सम्मथने जलधेस्व सुधेव
लोकदृशः समतोषयदेषा ॥३६॥

सम्मदपूरविपूरितचेताः
ह्रीविनतो बहिरच्युत आसीत्।
एष निसर्गनयस्वतुरस्य
सन्निहितस्य हि दारगुरूणाम् ॥३७॥

प्रीतिविकासि मनस्त्वरते च
वारयते च पुनर्गुरुलज्जा।
आलिरलं प्रयियासयते च
विह्वलतामिति सापि जगाम ॥३८॥

भीष्मकजाऽच्युतयोर्युगलेऽस्मिन्
पीठमुपाश्रयति श्रितपाणौ।
भ्रान्ततड़िद्घनीरदकान्तौ
नाभवदेव तुला भुवनेऽस्मिन् ॥३९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वेदचितात्तरुणीजनहस्तात्
स्खलितमुक्तमौक्तिकलाजाः ।
विष्वगिवान्तिकसौधशिरस्तः
पुष्करस्य यशांसि पतन्तः ॥४०॥

द्वावपि लोकयितुं मनुजानाम्
आपततां विफलाऽभवदाशा ।
एकतरं खलु दृङ् निपतन्ती
येन ततोऽलितृषा न निवृत्ता ॥४१॥

साक्षिण ईशितुरस्य जगत्याः
साक्ष्यविधानपरोऽथ पुरोधाः ।
रागसुखेन तयोः सह साग्निः
अग्निरुचा समजिज्वलदुच्चैः ॥४२॥

उद्यमितासुखचन्द्रिकयाऽथ ते
विलिलोकिषवोऽखिललोकाः ।
सम्मुखराजितिरस्कृतगात्राः
संददृशुस्तु बहिष्कृतवक्त्राः ॥४३॥

स स्तिमितोऽस्थिरताप्रतिपाद्य-
क्षोभपदेऽपि बभूव समाजः ।
कस्यचिदुच्चजवे करणस्य
सन्निभृतान्यपराणि भवन्ति ॥४४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र परस्परवक्त्रमवेक्ष्य
तौ सुतरामवशेन्द्रियसार्थौ ।
बद्धपरस्परलोचनपद्मौ
प्रीतिरियं क्रियतीति न बुद्धौ ॥४५॥

बाढ़मुभावितरेतरकान्ति-
राशिविलग्नविलोचनयुग्मम् ।
स्पन्दनहीनतनू प्रतिपत्तुं
प्रेक्षतुरुन्मनसौ न मुहूर्त्तम् ॥४६॥

रूपसुधोदधिदूरनिमग्न-
नेत्रयुगौ स्वगतभ्रमसारौ ।
हर्षसृति जगतां नहि किञ्चित्
न स्म विलोकयतो न च वित्तः ॥४७॥

आसीनां कनकासनेषु सुमुखीं प्रत्यङ्मुखीं प्रीतिमान्
राजा हारमनोहराय हरये प्रागाननायार्पयन् ।
उत्कण्ठाकुललोकलोचनकुलैरालोक्यमानामदात्
पुण्यं विश्वगुरोर्गुरुत्वममलं प्रत्ययमप्यग्रहीत् ॥४८॥

लोकानां विकलीकृतस्तुतिकुलैरानन्दकोलाहलैः
नानानादसमेधितैः सुमधुरं गानं वधूनां जितम् ।
तूष्णीम्भूतनिजाननैर्जनगणैरुत्कर्णमाकर्णितं
संधावज्जनतान्तरादपि तयोर्दृष्टं चिरेष्टं मुखम् ॥४९॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चित्रालापाश्चतुरतरया: कृष्णसुत्प्रासमुग्धं
हेलालोला नवयुवतयो रुक्मिणीं क्रीविनम्राम् ।
भूय:स्वामोष्ठितकलकलाक्रान्तकर्णं विकर्णौ
पुष्पासारैः प्रतितनु गृहं निन्यिरेऽन्योन्यलग्ना: ॥५०॥

लक्ष्मीं लक्ष्मीमिताक्षीं सुकृतमतिकृती कौतुक: पौरलोक:
भाग्यातीतामशेषां मुदमुदवसितं सर्वमेकान्तकान्तिम् ।
दृष्टार्थं प्रार्थिसार्थौ मुदितयदुपतेरन्नमन्नाभिलाषी
शान्तिं लेभे तदानीं जगदपि लभतामित्रमेवाधुनापि ॥५१॥

धोरीकुलोद्भवमहम्मदनामधेय:
दिल्लीं विजित्य जितवानपि कान्यकुब्जम् ।
एकां कलामिव विधोरपरां गृहीता
स्वर्भानुराधित तमोऽखिलभारतेऽस्मिन् ॥५२॥

ततस्तदुत्पीड़ितकान्यकुब्जत:
श्रीराममिश्र: सह भार्य्ययात्मज: ।
रिरक्षिषन् धर्म्ममुदस्युसम्बल:
पूर्व्वं नवद्वीपमियाय काश्यप: ॥५३॥

तदात्मभूमाधवमिश्रदेहज-
गोपालपुत्रो गणपत्युदोरित: ।
तदात्मजस्तत्तनयत:सनातन:
कोटालिपाड़े पुनरागमत्तत: ॥५४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शुणार्णवो नाम गुणी तदात्मजः
पुरन्दराख्यं समजीजनत् सुतम् ।
सुषुत्वसौ पञ्चसु सुण्डमालिनीम्
अतिष्ठिपच्चोनशियापुरे निजे ॥५५॥

श्रीनाथो यादवानन्दो मधुसूदन एव च ।
नागोशश्चेति चत्वार आसन् पुरन्दरात्मजाः ॥५६॥

चूड़ामण्युपनामासीत् श्रीनाथो विबुधाग्रणीः ।
सुधीरो यादवानन्दो न्यायाचार्य्यत्युपाधिमान् ॥५७॥

अद्वैतसिद्धिप्रभृतिप्रणीता
संक्षेपशारीरकभाष्यकर्त्ता ।
योगी यशस्वी मधुसूदनः स
सरस्वतीं सन्धृतवानुपाधिम् ॥५८॥

गौरीदासो यादवानन्दसूनुः
गोविन्दाख्यः साग्निकस्तत्सुतोऽभूत् ।
सत्तेजस्वी सद्यशस्वी मनस्वी
तस्याप्यासन् सप्त पुत्राः पवित्राः ॥५९॥

तद्द्वितीयतनयो बलरामः तर्कभूषणमुपाधिमुपेतः ।
चारुधीरचतुरश्चतुरोऽसौ आत्मजानजनयन्निजरूपान् ॥६०॥

लक्ष्मीनारायणो ज्येष्ठो हरिनारायणोऽपरः ।
पुरुषोत्तम इत्यन्यो रामदासश्च भेषजः ॥६१॥

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्यालङ्काराभिधो रामदासः
तत्पुत्रोऽभूत् रुक्मिणीकान्तनामा ।
गौरीनाथो देहजस्तस्य जातः
राधानाथोऽप्यस्य सूनुः सुविज्ञः ॥६२॥

काशीचन्द्रस्तस्य पुत्रोऽतिविद्वान्
लोकख्यातो नाम वाचस्पतीति ।
भूरिज्ञानं यस्य वीक्ष्यातिसूक्ष्मम्
अन्यो व्यासोऽसन्यतान्याप्यलोकैः ॥६३॥

गङ्गाधरः प्रथमजः प्रथितस्तदीये
पुत्रत्रये बुधगणप्रवरः पिता मे ।
हानिं गवत्सरवयाः खलु पूर्णिमायां
चन्द्राग्निनागविधुमानशकाब्दमाघे ॥६४॥

कोटालिपाड़नगरोनशियानिवासी
मन्दात्मनापि कविलभ्ययशोऽभिलाषी ।
भूभृल्लिलङ्घयिषुपङ्गुसमानधर्म्मा
श्रीमानिदं रचितवान् हरिदासशर्म्मा ॥६५॥

इति श्रीहरिदासकृतौ रुक्मिणीहरणे महाकाव्ये
विवाहो नाम षोड़शः सर्गः ॥०॥

——:०:——

समाप्तमिदं रुक्मिणीहरणम् ॥०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha